आत्तवज्रस्य समरे महेन्द्रस्येव दानवाः ॥ ५५॥

सञ्जयः—

स सत्कृतस्स्तूयमानस् सुहृद्गणवृतो वृषा ।
कर्णो दुर्योधनं वाक्यम् अब्रवीत् प्रहसन् प्रियम् ॥ ५६॥

कर्णः—

दुर्योधनाद्य सगणं पाण्डूनां प्रवरैस्सह ।
फल्गुनं सूदयिष्यामि त्वत्प्रियार्थं सबान्धवम् ॥ ५७॥

सपर्वतार्णवद्वीपां शाधि गां गतपाण्डवाम् ।
पुत्रपौत्रप्रपौत्रेषु प्रतिष्ठां गमयिष्यसि ॥ ५८॥

नासह्यं विद्यते मह्यं त्वत्प्रियार्थमरिंदम ।
सत्यधर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ५९॥

सञ्जयः—

अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ॥ ६०॥

सैनापत्ये तु राधेयम् अभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ६१॥

कर्णोऽपि राज्ञस्सम्प्राप्य सैनापत्यमरिंदमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥ ६२॥

तव पुत्रैर्वृतः कर्णश् शुशुभे तत्र भारत ।
देवैरिव यथा स्कन्दस् सङ्ग्रामे तारकामये ॥ ६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ६३॥ श्लोकाः ]

## ॥ अष्टमोऽध्यायः ॥

कर्णार्जुनाभ्यां व्यूहरचनापूर्वकं रणाय निर्याणम् ॥

धृतराष्ट्रः—

सैनापत्यं तु सम्प्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तस्तु स्वयं राज्ञा स्निग्धो भ्रातृसमो हि सः ॥ १

हितश्च प्रियकामश्च मम पुत्रस्य नित्यशः ।
किमकार्षीन्महाप्राज्ञस् तन्ममाचक्ष्व सञ्जय ॥ २

सञ्जयः—

कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
[1]योगमाज्ञापयामास नान्दीतूर्यपुरस्सरम् ॥ ३

महत्यपररात्रे च तव सैन्यस्य मारिष ।
योगो योग इति ह्याशु प्रादुरासीन्महास्वनः ॥ ४

1. अ-ख—नासीदमर्षम्

कल्पतां नागमुख्यानां रथानां च वरूथिनाम् ।
सन्नह्यतां पदातीनां वाजिनां च विशां पते ॥ ५

क्रोशतां चापि योधानां त्वरितानां परस्परम् ।
बभूव तुमुलश्शब्दो दिवस्पृक् सुमहांस्ततः ॥ ६

ततश्श्वेतपताकेन बलाकावर्णवाजिना ।
हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना ॥ ७

तूणीरशतपूर्णेन सगदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८

कार्मुकैरुपपन्नेन विमलादित्यवर्चसा ।
रथेनापतता तेन सूतपुत्रो ऽव्यदृश्यत ॥ ९

ध्मापयित्वा रणे शङ्खं हेमजालविभूषितम् ।
विधून्वानं महच्चापं हेमपृष्ठं दृढं नृप ॥ १०

दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमोघ्नन्तं दुरासदम् ॥ ११

न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ १२

ततस्तु त्वरयन् योधाञ् शङ्खशब्देन मारिष ।
कर्णो निष्क्रामयामास कौरवाणां महद्बलम् ॥ १३

[1]व्यूहं व्यूह्य महेष्वासो मकरं शत्रुतापनः ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान् विजिगीषया ॥ १४

मकरव्यूहमास्थाय दंशितो रविनन्दनः ।
मकरस्याथ तुण्डे तु कर्णो राजन् व्यवस्थितः ॥ १५

नेत्रयोश्शकुनिश्शूर उलूकश्च महारथः ।
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ॥ १६
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥ १६॥

वामपादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्गुप्तो गोपालैर्युद्धदुर्मदैः ॥ १७॥

पादे तु दक्षिणे राजन् गौतमस्सत्यविक्रमः ।
त्रिगर्तैश्च महेष्वासैर् दाक्षिणात्यैश्च संवृतः ॥ १८॥

अनुपादस्तु यो वामस् तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं नानादेशसमुत्थया ॥ १९॥

दक्षिणे तु महाराज सुषेणस्सत्यसङ्गरः ।
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा ॥ २०॥

पुच्छे ह्यास्तां महावीर्यौ भ्रातरौ पार्थिवात्मजौ ।
बिचित्रश्चित्रसेनश्च महत्या सेनया वृतौ ॥ २१॥

ततः प्रयाते राजेन्द्र कर्णे रथवरोत्तमे ।

---

1. ख-क—नास्तीदमर्धम्

धनञ्जयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ २२॥

युधिष्ठिरः—

पश्य पार्थ महासेनां धार्तराष्ट्रीं तु संयुगे ।
कर्णेन निर्मितां वीर गुप्तां वीरैर्महारथैः ॥ २३॥

हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्यतमा मता ॥ २४॥

एको ह्यत्र महेष्वासस् सूतपुत्रो व्यरोचत ॥ २५

सदेवासुरगन्धर्वैस् सकिन्नरमहोरगैः ।
चराचरैस्त्रिभिर्लोकैर् अजेयो यो महारथः ॥ २६

तं हत्वाऽद्य महाबाहो विजयस्तव फल्गुन ।
उद्धृतं च भवेच्छल्यं मम द्वादशवार्षिकम् ॥ २७

एतज्ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ २७॥

सञ्जयः—

श्रुत्वा तद्वचनं भ्रातुः कौन्तेयश्श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ २८॥

वामशृङ्गे तु राजेन्द्र भीमसेनो व्यवस्थितः ।
[1]दक्षिणे तु महाबाहुर् धृष्टद्युम्नो व्यवस्थितः ॥ २९॥

मध्ये व्यूहस्य राजेन्द्र पाण्डवश्च धनञ्जयः ।

---

1. ख—इदमर्धं नास्ति

नकुलस्सहदेवश्च धर्मराजश्च पृष्ठतः ॥ ३०॥
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
पार्थं न जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ३१॥
शेषा नृपतयो वीरास् स्थिता व्यूहस्य दंशिताः ।
यथाभागं यथोत्साहं यथासन्नं च भारत ॥ ३२॥
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैवावतस्थिरे ॥ ३३॥
दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे ।
निहतान् पाण्डवान् मेने सकृष्णान् वै जनाधिपः ॥ ३४॥
तथैव पाण्डवीं सेनां दृष्ट्वा व्यूढां युधिष्ठिरः ।
धार्तराष्ट्रान् हतान् मेने सकर्णान् ससुयोधनान् ॥ ३५॥
ततश्शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
पटहाश्चाभ्यहन्यन्त झर्झर्यश्च समन्ततः ॥ ३६॥
सेनयोरुभयो राजन् डिण्डिमाश्च महास्वनाः ।
सिंहनादाश्च सञ्जज्ञुश् शूराणां जयगृद्धिनाम् ॥ ३७॥
हयहेषितशब्दाश्च वारणानां च बृंहितम् ।
रथनेमिस्वनाश्चोग्रास् सम्बभूवुर्जनाधिप ॥ ३८॥
न द्रोणव्यसनं केचिद् विजग्मुस्तत्र भारत ।
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥ ३९॥

उभे सेने महाराज प्रहृष्टनरकुञ्जरे ।
योद्धुकामे स्थिते यत्ते हन्तुमन्योन्यमञ्जसा ॥ ४०॥
विजये जातसंरम्भे दृष्ट्वाऽन्योन्यमवस्थिते ।
अनीकमध्ये राजेन्द्र रेजतुः कर्णपाण्डवौ ॥ ४१॥
नृत्यन्त्याविव ते सेने प्रजग्मतुरभीतवत् ।
तयोः पक्षप्रपक्षेभ्यो निर्ययुश्च युयुत्सवः ॥ ४२॥
ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथिनां च महाराज त्वन्योन्यं निघ्नतां भृशम् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ नवमोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥ भीमेन क्षेमधूर्तिवधः ॥

---

सञ्जयः—

ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे ।
बृहत्यौ सम्प्रजह्राते देवासुरचमूसमे ॥ १

ततो वररथाश्वेभाः पत्तयश्च महाहवे ।
सम्प्रहारं महच्चक्रुर् देहपाप्मविनाशनम् ॥ २

पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतस्समैः ।
उत्तमाङ्गैर्नृसिंहानां आवृता पतितैर्मही ॥ ३

अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टसैः ।
परश्वथैस्त्वपाकृन्तन्नुत्तमाङ्गानि युध्यताम् ॥ ४

गदाभिरन्ये गुर्वीभिर् यष्टिभिर्मुसलैरपि ।
व्यायतायतबाहूनां व्यायतायतबाहुभिः ॥ ५

बाहवः पतिता रेजुस् साङ्गदा रुधिरोक्षिताः ॥ ५॥

तैस्स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तथा ।
गरुडप्रहारतो रुग्णैः पञ्चास्यैरिव पन्नगैः ॥ ६॥

द्विरदस्यन्दनाश्वेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा पुण्ये क्षीणे स्वर्गसदस्तथा ॥ ७॥

पोथिताश्शतधा पेतुर् वीरा वरशितैश्शरैः ।
रथा रथैर्विनिहताः पातिताश्च द्विपैर्द्विपाः ॥ ८॥

सादिभिस्सादिनश्चैव तस्मिन् परमसङ्कुले ॥ ९

रथैर्नागा रथा नागैर् अश्वारोहाश्च पत्तिभिः ।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ १०

रथाश्वपत्तयो नागैर् अश्वैर्नागैश्च पत्तयः ।

रथपत्तिद्विपाश्चाश्वैर् नृभिश्चाश्वरथद्विपाः ॥ ११

रथाश्वेभनराणां तु रथाश्वेभनरैः कृतम् ।
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ १२

तथा तस्मिन् बले शूरैर् वध्यमाने हतेऽपि च ।
अस्मानभ्याययुः पार्था वृकोदरपुरोगमाः ॥ १३

धृष्टद्युम्नश्शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्चेकितानश्च द्रमिलैस्सैनिकैस्सह ॥ १४

भृता वित्तेन महता पाण्ड्याश्चोलास्सकेरलाः ।
व्यूढोरस्का दीर्घभुजाः प्रांशवः पृथुलोचनाः ॥ १५

आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः ।
नानाविरागवसना गन्धचूर्णावचूर्णिताः ॥ १६

बद्धासयः प्रासहस्ता वारणप्रतिवारणाः ।
समानमृत्यवो राजन् प्रसक्ताश्च परस्परम् ॥ १७

कलापिनः पाशहस्ता दीर्घकेशाः प्रहारिणः ।
पत्तयस्सायकैर्विद्धा घोररूपपराक्रमाः ॥ १८

अथापरे पुनश्शूराश् चेदिपाञ्चालकेकयाः ।
कारूशाः कोसला वङ्गा मागधाश्चापि दुद्रुवुः ॥ १९

तेषां रथाश्च नागाश्च प्रवराश्चापि पत्तयः ।
नानाबाणरवैर्हृष्टा नृत्यन्ति च हसन्ति च ॥ २०

तस्य सैन्यस्य महतो महामात्रशतैर्वृतः ।
मध्ये वृकोदरोऽभ्यायान्नागप्रवरधूर्गतः ॥ २१

स नागप्रवरो ह्युग्रो विधिवत् कल्पितो बभौ ।
उदयाग्र्यांशुभवनं यथाऽभ्युदितभास्करम् ॥ २२

तस्यायसं वर्मवरं वररत्नविभूषितम् ।
तारोद्भासस्य नभसश् शारदस्य समं त्विषा ॥ २३

स तोमरप्रासकरश् चारुमौलिस्स्वलङ्कृतः ।
शरन्मध्यन्दिनार्काभस् तेजसा प्रादहद्रिपून् ॥ २४

तं दृष्ट्वा द्विरदं दूरात् क्षेमधूर्तिस्स्थितो द्विपे ।
आह्वयानोऽभिदुद्राव प्रहसन् पृतनामुखे ॥ २५

तयोस्समभवद्युद्धं द्विपयोरुग्ररूपयोः ।
यदृच्छया द्रुतवतोर् महापर्वतयोरिव ॥ २६

संसक्तनागौ तौ वीरौ तोमरैरितरेतरम् ।
बलवत् सूर्यरश्म्याभैर् भित्त्वा भित्त्वा विनेदतुः ॥ २७

व्यतिसृत्य च नागाभ्यां मण्डलानि विचेरतुः ।
प्रगृह्य चोभौ धनुषी जघ्नतुर्वै परस्परम् ॥ २८

क्ष्वेळितास्फोटितरवैर् बाणशब्दैश्च सर्वशः ।
तौ जनान् हर्षयन्तौ च सिंहनादं प्रचक्रतुः ॥ २९

समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ ।

वातोद्धूतपताकाभ्यां युयुधाते महाबलौ ॥ ३०
तावन्योन्यस्य धनुषी पुनश्छित्त्वा विनेदतुः ।
शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः ॥ ३१
क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे ।
निर्बिभेदाशु वेगेन षड्भिश्चाप्यपरैर्नदन् ॥ ३२
भीमसेनस्तु शुशुभे तोमरैरङ्गसंश्रितैः ।
क्रोधदीप्तवपुर्मेघैस् सप्तसप्तिरिवांशुमान् ॥ ३३
ततो भास्कररश्म्याभम् अञ्जोगतिमयस्मयम् ।
ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ॥ ३४
ततः कुलूताधिपतिश् चापमायम्य सायकैः ।
दशभिस्तोमरं भित्त्वा षष्ट्या विव्याध पाण्डवम् ॥ ३५
अथ कार्मुकमादाय महाजलदनिस्स्वनम् ।
रिपोरभ्यर्दयन्नागम् उन्नदन् पाण्डवश्शरैः ॥ ३६
स शरौघार्दितो नागो भीमसेनेन संयुगे ।
निगृह्यमाणो नातिष्ठद् वातध्वस्त इवाम्बुदः ॥ ३७
तमभ्यधावद्द्विरदं भीमसेनस्य नागराट् ।
महावातेरितं मेघं वातोद्धूत इवाम्बुदः ॥ ३८
स निवर्त्यात्मनो नागं क्षेमधूर्तिः प्रयत्नतः ।
विव्याधाभिद्रुतं बाणैर् भीमसेनं सकुञ्जरम् ॥ ३९

ततस्साधुविसृष्टेन क्षुरप्रेण सकार्मुकम् ।
छित्त्वा नरर्षभश्शत्रोर् नागं चापि प्रमार्दयत् ॥ ४०

ततश्शलाकया भीमं क्षेमधूर्तिः पराभिनत् ।
जघान चास्य द्विरदं नाराचैस्सर्वमर्मसु ॥ ४१

ततः पपात नागेन्द्रो भीमसेनस्य मारिष ।
पुरा नागस्य पतनात् सोऽवप्लुत्य स्थितो महीम् ॥ ४२

भीमसेनोऽपि तन्नागं गदया समपोथयत् ।
तस्मात् प्रमथितान्नागात् क्षेमधूर्तिरवप्लुतः ॥ ४३

उद्धृत्य खङ्गं निशितम् अभ्यधावत् स पाण्डवम् ।
उद्यतासिमुपायान्तं गदयाऽहन् वृकोदरः ॥ ४४

स पपात हतस्सासिर् व्यसुस्तमभितो द्विपम् ।
वज्रप्ररुग्णमचलं सिंहो वज्रहतो यथा ॥ ४५

तं हतं नृपतिं दृष्ट्वा करूशानां यशस्करम् ।
प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ७३ ॥ कर्णपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ४६ श्लोकाः ]

---

## ॥ दशमोऽध्यायः ॥

द्वन्द्वयुद्धम् ॥ १ ॥ सात्यकिना विन्दानुविन्दवधः ॥ २ ॥

सञ्जयः—

ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम् ।
जघान समरे शूरश् शरैस्सन्नतपर्वभिः ॥ १

तथैव पाण्डवा राजंस् तव पुत्रस्य वाहिनीम् ।
कर्णस्य पश्यतो राजन् निजघ्नुस्ते महारथाः ॥ २

कर्णोऽपि सुमहाबाहुर् अविध्यत् पाण्डवीं चमूम् ।
नाराचैरर्करश्म्याभैः कर्मारपरिमार्जितैः ॥ ३

तत्र भारत कर्णेन नाराचैस्ताडिता गजाः ।
[1]नेदुस्सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ॥ ४

वध्यमाने बले तस्मिन् सूतपुत्रेण मारिष ।
नकुलोऽभ्यद्रवत् तूर्णं सूतपुत्रं महारथम् ॥ ५

[2]भीमसेनस्तथा द्रौणिं कुर्वाणं कर्म दुष्करम् ।
विन्दानुविन्दौ कैकेयौ सात्यकिस्समवारयत ॥ ६

श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः ।

1. क—इदमर्धं नास्ति 2. अ—पञ्चार्धानि न सन्ति

प्रतिविन्ध्यस्तथा चित्रं चित्रकेतनकार्मुकम् ॥ ७

दुर्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम् ।
संशप्तकगणा हृष्टा ह्यभ्यधावन् धनञ्जयम् ॥ ८

धृष्टद्युम्नः कृपं चापि तस्मिन् वीरवरक्षये ।
शिखण्डी कृतवर्माणम् आससाद महाबलः ॥ ९

श्रुतकीर्तिस्तथा शल्यं माद्रीपुत्रसुतः प्रभुः ।
दुश्शासनं महाराज सहदेवः प्रतापवान् ॥ १०

कैकेयौ सात्यकिं युद्धे शरवर्षेण भास्वता ।
सात्यकिः केकयौ चैव छादयामास सायकैः ॥ ११

तावेनं भ्रातरौ वीरौ युधि विव्यधतुर्भृशम् ।
[1]विषाणाभ्यां यथा नागौ प्रतिनागं महावने ॥ १२

शरसञ्छिन्नवर्माणौ तावुभौ भ्रातरौ रणे ।
सात्यकिं सत्यकर्माणं रणे विव्यधतुर्भृशम् ॥ १३

तौ सात्यकिर्महाराज प्रहसन् युद्धदुर्मदः ।
छादयञ् छरवर्षेण वारयामास सर्वतः ॥ १४

वार्यमाणौ ततस्तौ तु शैनेयशरवृष्टिभिः ।
शैनेयस्य रथं तूर्णं छादयामासतुश्शरैः ॥ १५

तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महाहवे ।

---

1. अ-ख-ग—अर्धश्लोकं नास्ति

अथ तौ सायकैस्तीक्ष्णैः पूरयामास सात्वतः ॥ १६

अथान्ये धनुषी चित्रे प्रगृह्याशु महाशरान् ।
सात्यकिं पूरयन्तौ तौ चेरतुर्लघु सुष्ठु च ॥ १७

ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः ।
द्योतयन्तो दिशस्सर्वास् सम्पेतुर्हेमभूषणाः ॥ १८

बाणान्धकारमभवत् ततो राजन् महाहवे ।
अन्योन्यस्य तु चापानि चिच्छिदुस्ते महारथाः ॥ १९

ततः क्रुद्धो महाराज सात्यकिर्युद्धदुर्मदः ।
धनुरन्यत् समादाय सज्यं कृत्वा महाबलः ॥ २०

अनुमृज्य च राजेन्द्र तद्धनुर्भारसाधनम् ।
क्षुरप्रेण सुतीक्ष्णेन ह्यनुविन्दशिरोऽहरत् ॥ २१

तच्छिरो ह्यपतद्भूमौ कुण्डलोपचितं शुभम् ।
शम्बरस्य शिरो यद्वन्निहतस्य महामृधे ॥ २२
शोचयन् केकयान् सर्वाञ् जगामाथ वसुन्धराम् ॥ २२॥

तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः ।
सज्यमन्यद्धनुः कृत्वा शैनेयं प्रत्यवारयत् ॥ २३॥

सहसा सात्यकिर्विद्धस् स्वर्णपुङ्खैश्शिलाशितैः ।
ननाद बलवन्नादं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २४॥

सात्यकस्य पुनस्तूर्णं केकयानां महारथः ।

शरैरग्निशिखाकारैर् बाह्वोरुरसि चार्पयत् ॥ २५॥

स शराहतसर्वाङ्गस् सात्यकिस्सत्यविक्रमः ।
रराज समरे राजन् सपुष्प इव किंशुकः ॥ २६॥

सात्यकिस्समरे विद्धः कैकेयेन महात्मना ।
कैकेयं पञ्चविंशत्या विव्याध प्रहसन्निव ॥ २७॥

तावन्योन्यस्य धनुषी सञ्छिद्य समरे शुभे ।
हत्वा च सारथी तूर्णं हयांश्च रथिनां वरौ ॥ २८॥

विरथावसियुद्धाय समाजग्मतुराहवे।
शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तु तौ ॥ २९॥

विरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ ।
यथा दैवासुरे युद्धे बलशक्रौ महाबलौ ॥ ३०॥

मण्डलानि ततस्तौ तु विचरन्तौ महारणे ।
अन्योन्यमसिभिस्तूर्णं समाजघ्नतुराहवे ॥ ३१॥

[1]अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ।
कैकेयस्य ततश्चर्म द्विधा चिच्छेद सात्यकिः ॥ ३२॥

सात्यकेश्च तथैवासौ द्विधा चिच्छेद पार्थिवः ॥ ३३

शैनेयश्चर्म हित्वा तु तारागणशतैश्चितम् ।
चचार मण्डलान्येव गतप्रत्यागतानि च ॥ ३४

1. ख--नास्तीदमर्धम्

चरन्तं तं महारङ्गे निस्त्रिंशवरधारिणम् ।
अपहस्तेन चिच्छेद सात्यकिस्त्वरयाऽन्वितः ॥ ३५

सवर्मा केकयो राजन् द्विधा च्छिन्नो महाहवे ।
निपपात महेष्वासो वज्रनुन्न इवाचलः ॥ ३६

तं निहत्य रणे शूरश् शैनेयो रथसत्तमः ।
युधामन्यो रथं तूर्णम् आरुरोह परन्तपः ॥ ३७

ततोऽन्यं रथमारुह्य विधिवत् कल्पितं पुनः ।
केकयानां महत् सैन्यं व्यधमत् सात्यकिश्शरैः ॥ ३८

सा वध्यमाना समरे केकयानां महाचमूः ।
समुत्सृज्य रणे शस्त्रं प्रदुद्राव दिशो दश ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ७३ ॥ कर्णपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ॥ एकादशोऽध्यायः ॥

प्रतिविन्ध्यश्रुतकर्मभ्यां चित्रचित्रसेनयोस्संहारः ॥

---

सञ्जयः—

श्रुतकर्मा महाराज चित्रसेनं महीपतिम् ।
आजघान रणे क्रुद्धः पञ्चाशद्भिश्शिलीमुखैः ॥ १

चित्रसेनस्तु राजेन्द्र नवभिर्निशितैश्शरैः ।
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः ॥ २

श्रुत[1]कर्मा ततः क्रुद्धश् चित्रसेनं चमूमुखे ।
नाराचेन सुतीक्ष्णेन शङ्खदेशे समार्पयत् ॥ ३

[2]सोऽतिविद्धो महाराज तदा तेन महात्मना ।
मूर्च्छामपि जगामाशु कश्मलं च समाविशत् ॥ ४

एतस्मिन्नन्तरे चैव श्रुतकर्मा महायशाः ।
नवत्या जगतीपालं छादयन्नतपर्वभिः ॥ ५

प्रतिलभ्य ततस्संज्ञां चित्रसेनो महाबलः ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ६

सोऽन्यत् कार्मुकमादाय वेगघ्नम् रुक्मभूषितम् ।
चित्रसेनं शरैश्चित्रैश् चित्ररूपमथाकरोत् ॥ ७

स शरैश्चित्रितो राजा चित्रमाल्यधरो युवा ।
अशोभत महारङ्गे श्वाविच्छललतो यथा ॥ ८

राजा तु श्रुतकर्माणं नाराचेन स्तनान्तरे ।
बिभेद समरे क्रूरस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ ९

श्रुतकर्मा तु समरे नाराचेन समर्पितः ।
सुस्राव रुधिरं तत्र गैरिकाम्बु यथाऽचलः ॥ १०

---

1. क—वर्मा 2. ख—अर्धद्वयं नास्ति

ततस्स रुधिराक्ताङ्गो रुधिरार्द्रीकृतच्छविः ।
रराज समरे राजन् सुफुल्ल इव किंशुकः ॥ ११

श्रुतकर्मा महाराज शत्रुणा समभिद्रुतः ।
शत्रुसंवरणं क्रुद्धो द्विधा चिच्छेद कार्मुकम् ॥ १२

अथैनं छिन्नधन्वानं नाराचानां शतैस्त्रिभिः ।
विव्याध भरतश्रेष्ठ श्रुतकर्मा महायशाः ॥ १३
नवत्या जगतीपालं छादयन्नतपर्वभिः ॥ १३॥

ततः पीतेन भल्लेन भृशं तीक्ष्णेन सत्वरः ।
जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ॥ १४॥

तच्छिरो न्यपतद्भूमौ चित्रसेनस्य दीप्तिमत् ।
यदृच्छया यथा चन्द्रश् च्युतस्स्वर्गान्महीतले ॥ १५॥

राजानं निहतं दृष्ट्वा अभिसारास्तु मारिष ।
अभ्यद्रवन्त वेगेन श्रुतकर्माणमाहवे ॥ १६॥

ततः क्रुद्धो महेष्वासस् तत् सैन्यं समभिद्रवत् ।
अन्तकाले यथा क्रुद्धस् सर्वभूतानि चान्तकः ॥ १७॥

ते वध्यमानास्समरे तव पौत्रेण धन्विना ।
व्यद्रवन्त दिशस्तूर्णं मृगा व्याघ्रार्दिता इव ॥ १८॥

तांस्तु विद्रवतो दृष्ट्वा निरुत्साहान् द्विषज्जये ।
द्रावयन्निषुभिस्तूर्णं श्रुतकर्मा व्यरोचत ॥ १९॥

प्रतिविन्ध्यस्ततश्चित्रं विद्ध्वा पञ्चभिरायसैः ।
सारथिं त्रिभिरानर्च्छेद् ध्वजमेकेन पत्रिणा ॥ २०॥

तं चित्रो नवभिर्बाणैर् बाह्वोरुरसि चार्पयत् ।
स्वर्णपुङ्खैश्शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ २१॥

प्रतिविन्ध्यो धनुस्तस्य च्छित्वा भारत सायकैः ।
पञ्चभिर्निशितैर्बाणैर् अथैनमभिजघ्निवान् ॥ २२॥

ततश्शक्तिं महाराज हेमदण्डां दुरासदाम् ।
प्राहिणोत् प्रतिविन्ध्याय विचिन्वन्तीमसूनिव ॥ २३॥

तामापतन्तीं सहसा शक्तिमुल्कामिवाम्बरात् ।
द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव ॥ २४॥

सा पपात द्विधा च्छिन्ना प्रतिविन्ध्यशरैश्शितैः ।
युगान्ते सर्वभूतानि त्रासयन्ती यथाऽशनिः ॥ २५॥

शक्तिं विनिहतां दृष्ट्वा चित्रो गृह्य महागदाम् ।
प्रतिविन्ध्याय चिक्षेप रुक्मपट्टैर्विभूषिताम् ॥ २६॥

सा हत्वा सहसा सूतं गदा तस्य महात्मनः ।
रथं प्रमृद्य वेगेन धरणीमन्वपद्यत ॥ २७॥

प्रतिविन्ध्यस्ततः क्रुद्धो रथादाप्लुत्य भारत ।
शक्तिं चिक्षेप चित्राय स्वर्णदण्डामलङ्कृताम् ॥ २८॥

तामापतन्तीं जग्राह चित्रो राजन् महामनाः ।

ततस्तामेव चिक्षेप प्रतिविन्ध्याय पार्थिवः ॥ २९॥

सा समासाद्य तं शूरं प्रतिविन्ध्यं महाप्रभा ।
निर्भिद्य दक्षिणं बाहुं निपपात महीतले ॥ ३०॥
पतिताऽभासयच्चैव तं देशमशनिर्यथा ॥ ३१

प्रतिविन्ध्यस्ततो राजंस् तोमरं स्वर्णभूषितम् ।
प्रेषयामास सङ्क्रुद्धश् चित्रस्य वधकाङ्क्षया ॥ ३२

स तस्य देहावरणं भित्त्वा हृदयमेव च ।
जगाम धरणीं तूर्णं महोरग इवाशयम् ॥ ३३

स पपात तदा राजा तोमरेण समाहतः ।
प्रसार्य विपुलौ बाहू महापरिघसन्निभौ ॥ ३४

चित्रं सम्प्रेक्ष्य निहतं तावका रणशोभिनम् ।
अभ्यधावन्त वेगेन प्रतिविन्ध्यं समन्ततः ॥ ३५

सृजन्तो विविधान् बाणाञ् शतघ्नीश्च सकिङ्किणीः ।
तमेकं छादयामासुस् सूर्यमभ्रगणा इव ॥ ३६

तान् विव्याध महाबाहुश् शरजालैर्महाहवे ।
व्यद्रावयत् तव चमूं वज्रहस्त इवासुरान् ॥ ३७

ते वध्यमानास्समरे तावकाः पाण्डवैर्नृप ।
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ॥ ३८

विद्रुते तु बले तस्मिन् वध्यमाने समन्ततः ।

द्रौणिरेकोऽद्रवत् तूर्णं भीमसेनं महाबलम् ॥ ३९

तयोस्समागमो घोरो बभूव समरे नृप ।
यथा दैवासुरे युद्धे वृत्रवासवयोरिव ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ७३ ॥ कर्णपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

---

## ॥ द्वादशोऽध्यायः ॥

---

भीमाश्वत्थाम्नोर्युद्धम् ॥

---

सञ्जयः—

भीमसेनं ततो राजन् द्रौणिर्विव्याध पत्रिणा ।
त्वरया परया युक्तो दर्शयन्नस्त्रलाघवम् ॥ १

अथैनं पुनराजघ्ने नवत्या निशितैश्शरैः ।
सर्वमर्माणि सम्प्रेक्ष्य मर्मज्ञो लघुहस्तवत् ॥ २

भीमसेनस्समाकीर्णो द्रौणिना निशितैश्शरैः ।
रराज समरे राजन् रश्मिमानिव भास्करः ॥ ३

ततश्शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
द्रोणपुत्रमवच्छाद्य सिंहनादमथानदत् ॥ ४

शरैश्शरांस्तथा द्रौणिस् संवार्य युधि पाण्डवम् ।
ललाटेऽभ्याहनद्राजन् नाराचेन स्मयन्निव ॥ ५

[1]ललाटस्थं ततो बाणं धारयामास पाण्डवः ।
[2]यथा शृङ्गं वने दृप्तः खड्गो धारयते नृप ॥ ६

ततो द्रौणिं रणे भीमो यतमानं पराक्रमी ।
त्रिभिर्विव्याध नाराचैर् ललाटे विस्मयन्निव ॥ ७

ललाटस्थैस्त्रिभिर्बाणैर् अश्वत्थामा व्यरोचत ।
प्रावृष्यम्बुपरिक्षिप्तस् त्रिशृङ्ग इव पर्वतः ॥ ८

ततश्शरशतैर्द्रौणिम् अर्दयामास पाण्डवः ।
न चैनं कम्पयामास महावात इवाचलम् ॥ ९

तथैव पाण्डवं युद्धे द्रौणिश्शरशतैश्शितैः ।
नाकम्पयत संहृष्टो वार्योघ इव पर्वतम् ॥ १०

तावन्योन्यं शरैर्घोरैश् छादयन्तौ महारथौ ।
रथचर्यागतौ वीरौ शुशुभाते नरर्षभौ ॥ ११

आदित्याविव संदीप्तौ लोकक्षयकरावुभौ ।
स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः ॥ १२

कृतप्रतिकृते यत्नं कुर्वाणौ तौ महारथौ ।
कृतप्रतिकृते चैव बाणसङ्घैरभीतवत् ॥ १३

---

1. अ—चत्वार्यर्धानि न सन्ति 2. ख—षडर्धानि न सन्ति

व्याघ्राविव च संरब्धौ चेरतुस्तौ नरोत्तमौ ।
शरदंष्ट्रौ दुराधर्षौ चापहस्तौ भयङ्करौ ॥ १४

अदृश्यौ च मुहूर्तेन शरजालैर्बभूवतुः ।
मेघजालैः प्रतिच्छन्नौ सूर्याचन्द्रमसाविव ॥ १५

प्रकाशौ च मुहूर्तेन तत्रैवास्तामरिंदमौ ।
विमुक्तौ मेघजालेन शशिसूर्यौ यथा दिवि ॥ १६

[1]अथ तत्रैव सङ्ग्रामे वर्तमाने सुदारुणे ।
अपसव्यं ततश्चक्रे द्रौणिस्तत्र वृकोदरम् ॥ १७

किरञ् छरशतैरुग्रैर् धाराभिरिव पर्वतम् ।
न तु तन्ममृषे भीमश् शत्रोर्विजयलक्षणम् ॥ १८

प्रतिचक्रे ततो राजन् पाण्डवोऽप्यपसव्यतः ।
मण्डलानां विभागेन गतप्रत्यागतेन च ॥ १९

बभूव तुमुलं युद्धं तयोस्तत्र महामृधे ।
चरित्वा विविधान् मार्गान् मण्डलस्थानमेव च ॥ २०

शरैः पूर्णायतोत्सृष्टैर् अन्योन्यमभिजघ्नतुः ।
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमाहवे ॥ २१

इयेषतुश्च विरथं कर्तुमन्योन्यमाहवे ॥ २१॥

ततो द्रौणिर्महास्त्राणि प्रादुश्चक्रे महारथः ॥ २२

1. ख—इदमर्धं नास्ति

तान्यस्त्रैरेव समरे प्रतिजघ्ने स पाण्डवः ॥ २२॥

ततो घोरं महाराज ह्यस्त्रयुद्धमवर्तत ।
ग्रहयुद्धं यथा घोरं प्रजासंहरणे ह्यभूत् ॥ २३॥

ते बाणास्समसज्जन्त ताभ्यां क्षिप्ता इतस्ततः ।
द्योतयन्तो दिशस्सर्वास् तच्च सैन्यं समन्ततः ॥ २४॥

बाणसङ्घावृतं सर्वम् आकाशं समपद्यत ।
उल्कापातावृतं यद्वत् प्रजासंहरणे नृप ॥ २५॥

बाणाभिघातात् सञ्जज्ञे तत्र भारत पावकः ।
सविष्फुलिङ्गो दीप्तार्चिर् योऽदहद्वाहिनीद्वयम् ॥ २६॥

तत्र सिद्धा महाराज सम्पतन्तोऽब्रुवन् वचः ॥ २७

अति युद्धानि सर्वाणि [1]युद्धमेतदवर्तत ।
सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम् ॥ २८

नैतादृशं पुनर्युद्धं भविष्यति कदाचन ।
अहो ज्ञानेन सम्पन्नावुभौ चोग्रपराक्रमौ ॥ २९

अहोऽनयोर्बलं युद्धे अहो चापि कृतास्त्रता ।
अहो ज्ञानस्य सम्पच्च अहो सौष्ठवमेव च ॥ ३०

स्थितावेतौ हि समरे कालान्तकयमोपमौ ।
रुद्रौ द्वाविव सम्भूतौ तथा द्वाविव भास्करौ ॥ ३१

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

यमाविव नरव्याघ्रौ घोररूपाविमौ रणे ॥　　　　३१॥

इति स्म वाचश्श्रूयन्ते सम्पतन्त्यो मुहुर्मुहुः ।
सिंहनादाश्च सञ्जज्ञुस् समेतानां दिवौकसाम् ॥　　　　३२॥

अद्भुतं चाप्यचिन्त्यं च दृष्ट्वा युद्धं महारणे ।
तौ शूरौ समरे राजन् परस्परकृतागसौ ॥　　　　३३॥

परस्परमुदीक्षेतां क्रोधादुद्वृत्य चक्षुषी ।
क्रोधरक्तेक्षणौ तौ तु क्रोधात् प्रस्फुरिताधरौ ॥　　　　३४॥

क्रोधात् संदश्य दशनैस् तथैव दशनच्छदौ ।
छादयामासतुरुभौ तावन्योन्यं रणे शरैः ॥　　　　३५॥

शराम्बुधारौ समरे शस्त्रविद्युत्प्रकाशिनौ ।
तावन्योन्यं ध्वजौ विद्ध्वा सारथी च महारथौ ॥　　　　३६॥

अन्योन्यस्य हयांश्चापि सायकैर्निर्बिभेदतुः ॥　　　　३७

[1]ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे ।
उभौ चिक्षिपतुस्तूर्णम् अन्योन्यस्य वधैषिणौ ॥　　　　३८

तौ सायकौ महाराज द्योतमानौ चमूमुखे ।
आजघ्नतुस्समासाद्य वज्रवेगौ दुरासदौ ॥　　　　३९

तौ परस्परवेगेन शराभ्यामाहतौ भृशम् ।
निपेततुर्महाराज स्वरथोपस्थयोस्तदा ॥　　　　४०

---

1. अ-ख—अर्धचतुष्टयं नास्ति

ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् ।
अपोवाह रणाद्राजन् सर्वक्षत्रस्य पश्यतः ॥ ४१

तथैव पाण्डवं राजन् [1]विह्वलन्तं मुहुर्मुहुः ।
अपोवाह रणाद्राजन् विशोकश्शत्रुतापनम् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ७३ ॥ कर्णपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

## ॥ त्रयोदशोऽध्यायः ॥

---

शल्येन श्रुतकीर्तिपराजयः ॥

---

सञ्जयः—

श्रुतकीर्तिमथायान्तं किरन्तं निशिताञ् शरान् ।
मद्रराजो महाराज वारयामास हृष्टवत् ॥ १

[2]मद्रराजं समासाद्य श्रुतकीर्तिर्महारथः ।
विव्याध भल्लैस्त्रिंशत्या कार्तस्वरविभूषितैः ॥ २

प्रतिविव्याध तं शल्यस् त्रिभिस्तूर्णमजिह्मगैः ।
साराथिं चास्य भल्लेन भृशं विव्याध भारत ॥ ३

---

1. क—अयं पादोऽनन्तरश्च न स्तः
2. अ—नास्तीदमर्धद्वयम्

स शल्यं शरवर्षेण च्छादयामास संयुगे ।
मुमोच निशितान् बाणान् मद्रराजरथं प्रति ॥ ४

ततश्शल्यो महाराज श्रुतकीर्तिभुजच्युतान् ।
चिच्छेद समरे बाणान् बाणैस्सन्ततपर्वभिः ॥ ५

श्रुतकीर्तिस्ततश्शल्यं भित्त्वा नवभिरायसैः ।
सारथिं त्रिभिरानर्च्छेत् पुनश्शल्यं च पञ्चभिः ॥ ६

तस्य शल्यो धनुश्छित्त्वा हस्तावापं निकृत्य च ।
विव्याध समरे तूर्णं सप्तभिस्तं शरोत्तमैः ॥ ७

अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
मद्रेश्वरं चतुष्षष्ट्या बाह्वोरुरसि चार्पयत् ॥ ८

ततस्तु समरे राजंस् तेन विद्धश्शिलीमुखैः ।
प्रतिविव्याध तं चापि नवत्या निशितैश्शरैः ॥ ९

तस्य मद्रेश्वरश्चापम् पुनश्चिच्छेद मारिष ।
सञ्छिन्नधन्वा समरे गदां चिक्षेप सत्वरः ॥ १०

पट्टैर्जाम्बूनदैर्बद्धां रूप्यपट्टैश्च भारत ।
भ्राजमानां यथा नारीं दिव्यवस्त्रविभूषिताम् ॥ ११

तामापतन्तीं सहसा दीप्यमानाशनिप्रभाम् ।
शरैरनेकसाहस्रैर् व्यष्टम्भयत मद्रराट् ॥ १२

विष्टभ्य च गदां वीरः पातयित्वा च भूतले ।

श्रुतकीर्तिमथायत्तो राजन् विव्याध पञ्चभिः ॥ १३
तस्य शक्तिं रणे भूयश् चिक्षेप भुजगोपमाम् ।
तां द्विधा चाच्छिनच्छल्यो मेदिन्यां सा त्वशयिंत ॥ १४
तस्य शल्यः क्षुरप्रेण यन्तुः कायाच्छिरोऽहरत् ।
बालहस्ताद्यथा श्येन आमिषं वै नरोत्तम ॥ १५
स पपात रथोपस्थात् सारथिस्तस्य भारत ।
ततस्ते प्राद्रवन् सङ्ख्ये हयास्तस्य महात्मनः ॥ १६
पलायमानैस्तैरश्वैस् सोऽपनीतो रणाजिरात् ।
श्रुतकीर्तिर्महाराज पश्यतां सर्वयोधिनाम् ॥ १७
ततो मद्रेश्वरो राजा पाण्डवानामनीकिनीम् ।
व्यगाहत मुदा युक्तो नलिनीं द्विरदो यथा ॥ १८
लोलयामास स बलं सिंहः पशुगणानिव ।
शल्यस्तत्र महारङ्गे पाण्डवानां महात्मनाम् ॥ १९
निपात्य पाण्डुपाञ्चालान् पृतनासु व्यवस्थितः ।
अशोभत रणे शल्यो विधूमोऽग्निरिव ज्वलन् ॥ २०
सेनाकक्षं महद्दग्ध्वा कक्षमग्निरिवोत्थितः ।
स्थितो रराज समरे पुरं दग्ध्वेव शङ्करः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ चतुर्दशोऽध्यायः ॥

सहदेवेन दुश्शासनपराजयः ॥

सञ्जयः—

सहदेवं तदा क्रुद्धं निघ्नन्तं तव वाहिनीम् ।
दुश्शासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ १

तौ समेतौ महारङ्गे दृष्ट्वा तत्र समागताः ।
सिंहनादरवांश्चक्रुर् वासांस्यादुधुवुश्च ह ॥ २

तत्र भारत रुष्टेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर् वक्षस्यभिहतो भृशम् ॥ ३

सहदेवस्ततो राजन् नाराचैस्तु तवात्मजम् ।
विध्याधोरसि सप्तत्या सारथिं चेषुभिस्त्रिभिः ॥ ४

दुश्शासनस्ततश्चापं छित्त्वा राजन् महाहवे ।
सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्पयत् ॥ ५

सहदेवस्ततः क्रुद्धः खड्गमुद्यम्य मारिष ।
आविध्य व्यसृजत् तूर्णं तव पुत्ररथं प्रति ॥ ६

समार्गणगुणं चापं द्विधा कृत्वा महानसिः ।
निपपात ततो भूमौ च्युतस्सर्प इवाम्बरात् ॥ ७

अथान्यद्धनुरादाय माद्रेयः क्रोधमूर्छितः ।

दुश्शासनाय चिक्षेप बाणमन्तकरं परम् ॥ ८

तमापतन्तं वेगेन यमदण्डमिवापरम् ।
खड्गेन शितधारेण द्विधा चिच्छेद कौरवः ॥ ९

ततस्तं निशितं खड्गं प्राविध्यत् तस्य सत्वरम् ।
धनुश्चान्यत् समादाय शरं जग्राह वीर्यवान् ॥ १०

तमापतन्तं वेगेन निस्त्रिंशं निशितैश्शरैः ।
समरेऽपातयद्धृष्टस् सहदेवो हसन्निव ॥ ११

ततो बाणांश्चतुष्षष्टिं तव पुत्रो महारथः ।
सहदेवरथे तूर्णं प्रेषयामास भारत ॥ १२

शरानापततस्तूर्णं समरे तान् सुवेगिनः ।
एकैकं पञ्चभिर्बाणैर् माद्रेयस्तु समाच्छिनत् ॥ १३

तान् निवार्य ततो बाणैस् सहदेवः प्रतापवान् ।
[1]शतसङ्ख्यांस्ततो बाणान् प्रेषयामास संयुगे ॥ १४

तान् बाणांस्तव पुत्रोऽपि छित्त्वैकैकं त्रिभिस्त्रिभिः ।
ननाद सुमहानादम् नादयानो वसुन्धराम् ॥ १५

ततो दुश्शासनो राजन् द्वाभ्यां पाण्डुसुतं रणे ।
सारथिं नवभिर्बाणैर् माद्रेयस्य समाचिनोत् ॥ १६

ततः क्रुद्धो महाराज सहदेवः प्रतापवान् ।

---

1. अ—षडर्धानि न सन्ति

समधत्त शरं घोरं मृत्युकालान्तकोपमम् ॥ १७

विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ॥ १७॥

स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत् ।
प्राविशद्धरणीं तूर्णं वल्मीकमिव पन्नगः ॥ १८॥

स मुमोह ततः पुत्रस् तव राजन् महाबलः ॥ १९

मूढं चैनं समालक्ष्य सारथिस्त्वरितो रणात् ।
अपोवाह सुसंत्रस्तो वध्यमानं शितैश्शरैः ॥ २०

पराजित्य रणे तं तु पाण्डवः पाण्डुपूर्वज ।
दुर्योधनबलं बाणैः प्रामथद्वै समन्ततः ॥ २१

पिपीलिकापुटं राजन् यथा मृद्नन् नरो रुषा ।
तथा सा कौरवी सेना मृदिता तेन भारत ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये २२ श्लोकाः ]

---

## ॥ पञ्चदशोऽध्यायः ॥



कर्णनकुलयोर्युद्धम् ॥ १ ॥ कर्णेन नकुलस्य पराभावनपूर्वकं सोपहास-समधिक्षेपः ॥ २ ॥



सञ्जयः—

नकुलं रभसं युद्धे तपन्तं तव वाहिनीम् ।
कर्णो वैकर्तनो राजन् वारयामास वै रुषा ॥ १

नकुलस्तु ततः कर्णं प्रहसन्निदमब्रवीत् ॥ १॥

नकुलः—

चिरस्य बत दृष्टोऽसि दैवतैस्सौम्यचक्षुषा ।
यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः ॥ २॥

त्वं हि मूलमनर्थानां वैरस्य कलहस्य च ।
त्वद्दोषात् कौरवाः क्षीणास् समासाद्य परस्परम् ॥ ३॥
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि सत्वरः ॥ ४

सञ्जयः—

एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः ॥ ४॥

कर्णः—

सदृशं राजपुत्रस्य विशेषेण धनुष्मतः ।
प्रहरस्व रणे वीर पश्यामः पुरुषो भव ॥ ५॥
कर्म कृत्वा रणे शूर ततः कत्थितुमर्हसि ॥ ६

अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः ।
युध्यस्व समरे शक्त्या प्रतियोत्स्यामि ते रणे ॥　　७

सञ्जयः—

इत्युक्त्वा प्राहरत् तूर्णं पाण्डुपुत्राय सूतजः ।
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥　　८

नकुलस्तु ततो विद्धस् सूतपुत्रेण भारत ।
अशीत्याऽऽशीविषप्रख्यैस् सूतपुत्रमविध्यत ॥　　९

तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खान् शिलाशितान् ।
त्रिंशतं प्रेषयामास शरानाशीविषोपमान् ॥　　१०

ते चास्य कवचं भित्त्वा पपुश्शोणितमाहवे ।
आशीविषा यथा राजन् भित्त्वा गां सलिलं भृशम् ॥　　११

अथान्यद्धनुरादाय हेमपृष्ठं दुरानमम् ।
कर्णं विव्याध सप्तत्या सारथिं च त्रिभिश्शरैः ॥　　१२

ततः क्रुद्धो महाराज नकुलः परवीरहा ।
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुराच्छिनत् ॥　　१३

अथैनं छिन्नधन्वानं सायकानां त्रिभिश्शतैः ।
आजघ्ने प्रहसन् वीरस् सर्वलोकमहारथम् ॥　　१४

कर्णमभ्यर्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष ।
विस्मयं परमं जग्मुर् ऋषयस्सह दैवतैः ॥　　१५

अथान्यद्धनुरादाय कर्णो वैकर्तनस्तदा ।
नकुलं पञ्चभिर्बाणैर् जत्रुदेशे समार्पयत् ॥ १६

उरस्थैरथ तैर्बाणैर् माद्रीपुत्रो व्यरोचत ।
स्वरश्मिभिरिवादित्यो भुवने विसृजन् प्रभाम् ॥ १७

नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिराशुगैः ।
अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष ॥ १८

सोऽन्यत् कार्मुकमादाय समरे वेगवत्तरम् ।
नकुलस्य ततो बाणैस् समन्ताद्वारयन् दिशः ॥ १९

सञ्छाद्यमानस्समरे कर्णचापच्युतैश्शरैः ।
चिच्छेद ताञ् शरांस्तूर्णं शरैरेव महायशाः ॥ २०

ततो बाणमयं जालं विततं व्योम्न्यदृश्यत ।
खद्योतानामिव व्रातैस् सम्पतद्भिर्यथा नभः ॥ २१

तैर्विमुक्तैश्शरशतैश् छादितं गगनं महत् ।
शलभानामिव व्रातैस् तद्धि ह्यासीद् विशां पते ॥ २२

ते शरा हेमविकृतास् सम्पतन्तो मुहुर्मुहुः ।
श्रेणीकृता व्यरोचन्त क्रौञ्चाश्श्रेणीकृता इव ॥ २३

बाणजालावृते व्योम्नि च्छादिते च दिवाकरे ।
न स्म सम्पतते भूतं किञ्चिदप्यन्तरिक्षगम् ॥ २४

निरुद्धे तत्र मार्गे तु शरसङ्घैस्समन्ततः ।

व्यरोचेतां महात्मानौ बालसूर्याविवोदितौ ॥ २५

कर्णचापच्युतैर्बाणैर् वध्यमानास्तु सोमकाः ।
अवालीयन्त राजेन्द्र वेदनार्ता भृशार्दिताः ॥ २६

नकुलस्य ततो बाणैर् वध्यमाना चमूस्तव ।
व्यदीर्यत ततो राजन् वातनुन्न इवाम्बुदः ॥ २७

ते सेने वध्यमाने तु ताभ्यां दिव्यैर्महाशरैः ।
शरपातानतिक्रम्य तस्थतुः प्रेक्षके इव ॥ २८

प्रोत्सारिते जने तस्मिन् कर्णपाण्डवयोश्शरैः ।
जघ्नतुस्तौ महात्मानावन्योन्यं शरवृष्टिभिः ॥ २९

विदर्शयन्तौ शस्त्राणि दिव्यानि रणमूर्धनि ।
छादयन्तौ च सहसा परस्परवधैषिणौ ॥ ३०

नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः ।
सूतपुत्रमवच्छाद्य व्यतिष्ठन्त इवाऽम्बरे ॥ ३१

तथैव सूतपुत्रेण प्रेषिताः परमाहवे ।
[1]पाण्डुपुत्रमवच्छाद्य व्यतिष्ठन्त इवाम्बरे ॥ ३२

शरवेश्मप्रविष्टौ तौ न दृश्येते कथञ्चन ।
चन्द्रसूर्यौ यथा राजञ् छाद्यमानौ जलागमे ॥ ३३

ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः ।

1. ख—इदमर्धं नास्ति

पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ॥ ३४

सञ्छाद्यमानस्समरे सूतपुत्रेण पाण्डवः ।
न चकार व्यथां राजन् भास्करो जलदैर्यथा ॥ ३५

ततः प्रहस्यातिरथिश् शरजालानि मारिष ।
प्रेषयामास समरे शतशोऽथ सहस्रशः ॥ ३६

एकबाणमभूत् सर्वं तस्य बाणैर्महात्मनः ।
अभ्रच्छायेव सञ्जज्ञे सम्पतद्भिश्शरोत्तमैः ॥ ३७

ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः ।
सारथिं पातयामास रथनीडाद्धसन्निव ॥ ३८

ततोऽश्वांश्चतुरस्तस्य चतुर्भिर्निशितैश्शरैः ।
यमस्य सदनं तूर्णं प्रेषयामास भारत ॥ ३९

अथास्य तं रथं दिव्यं तिलशो व्यधमच्छरैः ।
पताकां चक्ररक्षौ च गदां खड्गं च मारिष ॥ ४०

शतचन्द्रं च तच्चर्म सर्वोपकरणानि च ।
सुवर्णविकृतं तच्च धनुस्सशरमाहवे ॥ ४१

हताश्वो विरथश्चैव विचर्मा च विशां पते ।
अवतीर्य रथात् तूर्णं परिघं गृह्य विष्ठितः ॥ ४२

समुद्यतं महाघोरं परिघं तस्य सूतजः ।
व्यधमत् सायकैस्तूर्णं तदद्भुतमिवाभवत् ॥ ४३

व्यायुधं च समालक्ष्य शरैस्सन्नतपर्वभिः ।
अर्दयन् बहुशः कर्णो न चैनं समपीडयत् ॥ ४४

स वध्यमानस्समरे कृतास्त्रेण बलीयसा ।
प्राद्रवत् सहसा राजन् नकुलो व्याकुलेन्द्रियः ॥ ४५

अभिद्रुत्य च राधेयः प्रहसन् वै पुनःपुनः ।
सज्यं च स्वधनुः कण्ठे विससर्ज च भारत ॥ ४६

ततस्स शुशुभे राजन् कण्ठसक्त महाधनुः ।
परिवेषमनुप्राप्तो नभसीव तमोनुदः ॥ ४७

यथा चैवासितो मेघश् शक्रचापेन शोभते ।
अशोभत महाराज पाण्डुपुत्रस्तथा रणे ॥ ४८

तमब्रवीत् ततः कर्णो व्यर्थं व्याहृतवानसि ।
वदेदानीं पुनर्हृष्टो वध्यो मे त्वं पुनः पुनः ॥ ४९

मा योत्सीर्गुरुभिस्सार्धं बलवद्भिश्च पाण्डव ।
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव ॥ ५०

गृहं वा गच्छ माद्रेय यत्र वा केशवार्जुनौ ॥ ५०॥
एवमुक्त्वा महाराज विससर्ज स तं तदा ॥ ५१

वधप्राप्तं तु तं शत्रुं नावधीत् सूतनन्दनः ।
स्मृत्वा मातुर्वचो राजंस् तत एनं व्यसर्जयत् ॥ ५२

विसृष्टः पाण्डवो राजन् सूतपुत्रेण धन्विना ।

क्रीडन्निव जगामाथ युधिष्ठिररथं प्रति ॥ ५३

आरुरोह रथं चापि धर्मराजस्य पाण्डवः ।
निश्श्वसन् दुःखसन्तप्तः कुम्भक्षिप्त इवोरगः ॥ ५४

तं विजित्य रणे कर्णः पाञ्चालांस्त्वरितो ययौ ।
रथेनातिपताकेन चन्द्रवर्णहयेन च ॥ ५५

तत्राक्रन्दो महानासीत् पाण्डवानां विशां पते ।
दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ॥ ५६

[1]तत्राकरोन्महाराज कदनं सूतनन्दनः ।
मध्यं प्राप्ते दिनकरे चक्रवद्व्यचरत् प्रभुः ॥ ५७

भग्नचक्रै रथैः केचिच् छिन्नध्वजपताकिभिः ।
ससूतैर्हतसूतैश्च भग्नाक्षैश्चापि मारिष ॥ ५८

ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान् ॥ ५८॥

तत्र तत्र च सम्भ्रान्ता विचेरुस्तत्र कुञ्जराः ।
दावाग्न्यभिपरीताङ्गा यथैव स्युर्महावने ॥ ५९॥

भिन्नकुम्भास्सरुधिराश् छिन्नहस्ताश्च वारणाः ।
छिन्नगात्रावराश्चैव च्छिन्नवालाश्च मारिष ॥ ६०॥

छिन्नाभ्राणीव सम्पेतुर् वध्यमाना महात्मना ॥ ६१

अपरे त्रासिता नागा नाराचशततोमरैः ।

---

1. ख—अर्धपञ्चकं नास्ति

तमेवाभिमुखं जग्मुश् शलभा इव पावकम् ॥ ६२

अपरे निष्टनन्तस्तु व्यदृश्यन्त महाद्विपाः ।
क्षरन्तश्शोणितं गात्रैर् नगा इव जलस्रवाः ॥ ६३

उरश्छदैर्विमुक्ताश्च वालबन्धैश्च वाजिनः ।
राजतैश्च तथा कांस्यैस् सौवर्णैश्च विभूषणैः ॥ ६४

हीना ह्याभरणैश्चैव खलीनैश्च विवर्जिताः ।
चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि ॥ ६५

निहतैस्सादिभिश्चैव शूरैराहवशोभिभिः ।
वातायमानान् सहसा प्रपश्याम हयोत्तमान् ॥ ६६

[1]हयान् योधानपश्याम कञ्चुकोष्णीषवेष्टितान् ।
निहतान् धावमानांश्च वेष्टमानांश्च भारत ॥ ६७

रथान् हेमपरिष्कारान् सुयुक्ताञ् जवनैर्हयैः ।
भ्राम्यमाणानपश्याम हतेषु रथिषु द्रुतान् ॥ ६८

हताश्वकूबरान् कांश्चिद् भग्नचक्रांश्च भारत ।
विपताकध्वजांश्चैव छिन्नेषादण्डबन्धुरान् ॥ ६९

विहीनान् रथिभिस्तत्र धावमानांस्ततस्ततः ।
रथांस्तु तत्र विच्छिन्नांस् तिलशः कर्णविक्रमैः ॥ ७०

1. घ—एतदादि अर्धपञ्चकं नास्ति

[1]सूतपुत्रशरैस्तप्तान् अपश्याम जगत्पते ।
तारकाजालसञ्छिन्नान् उरुघण्टोपशोभितान् ॥ ७१

नानावर्णविचित्राभिः कदलीभिरलङ्कृतान् ।
नागानवयवैर्हीनांस् तत्र तत्र विनिष्ठितान् ॥ ७२

पदातीनप्यपश्याम धावमानान् समंततः ।
विशस्त्रांश्च तथैवान्यान् सशस्त्रांश्च बहून् हतान् ॥ ७३

शिरोभिर्बाहुभिर्हीनान् भिन्नैरूरुभिरेव च ।
कर्णचापच्युतैर्बाणैर् अदृश्यन्त विनाकृताः ॥ ७४

महान् व्यतिकरो रौद्रो योधानामन्वदृश्यत ।
कर्णसायकनुन्नानां वध्यतां निशितैश्शरैः ॥ ७५

[2]ते वध्यमानास्समरे सूतपुत्रेण सृञ्जयाः ।
तमेवाभिमुखा यान्ति पतङ्गा इव पावकम् ॥ ७६

तं दहन्तमनीकानि तत्र तत्र महारथम् ।
अपरे वर्जयामासुर् युगान्ताग्निमिवोल्बणम् ॥ ७७

हतशेषास्तु ये वीराः पाञ्चालानां रथव्रजाः ।
तान् भग्नान् विद्रुतान् कर्णः पृष्ठतो विकिरञ् छरान् ॥ ७८

अभ्यद्रवत तेजस्वी विकीर्णकवचध्वजान् ।

---

1. ख—नास्तीदमर्धद्वयम्
2. घ—सप्तार्धानि न सन्ति

तापयन् समरे बाणैस् सूतपुत्रो महारथः ॥ ७९
मध्यंदिनमनुप्राप्तो भूतानीव तमोनुदः ॥ ७९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये ७९॥ श्लोकाः ]

## ॥ षोडशोऽध्यायः ॥

युयुत्सूलूकयोर्युद्धम् ॥ १ ॥ शकुनिसुतसोमयोर्युद्धम् ॥ २ ॥

सञ्जयः—

युयुत्सुं तव पुत्रस्य तापयन्तं वरूथिनीम् ।
उलूकोऽभ्यपतत् तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १

युयुत्सुश्च ततो राजञ् शितधारेण पत्रिणा ।
उलूकं ताडयामास वज्रेणेव महाचलम् ॥ २

उलूकस्तु ततः क्रुद्धस् तव पुत्रस्य मारिष ।
क्षुरप्रेण सुतीक्ष्णेन धनुश्चिच्छेद संयुगे ॥ ३

अपास्य तद्धनुश्छिन्नं युयुत्सुर्वेगवत्तरम् ।
अन्यदादत्त सुमहच् चापं संरक्तलोचनः ॥ ४

शाकुनिं तु चतुष्षष्ट्या विव्याध भरतर्षभ ।

सारथिं त्रिभिरानर्च्छत् तं च भूयोऽप्यविध्यत ॥ ५
उलूकः पञ्चविंशत्या विद्ध्वा रुक्मविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ६
स च्छिन्नयष्टिस्सुमहाञ् शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन् युयुत्सोर्विद्रुताद्रथात् ॥ ७
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्च्छितः ।
उलूकं पञ्चभिर्बाणैर् आजघान स्तनान्तरे ॥ ८
उलूकस्तस्य भल्लेन तैलधौतेन मारिष ।
शिरश्चिच्छेद समरे यन्तुर्भरतसत्तम ॥ ९
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ १०
निर्जित्य तं रणे राजन्नुलूकस्त्वरितो ययौ ।
पाञ्चालान् सृञ्जयांश्चैव विकिरन् निशितैश्शरैः ॥ ११
[1]शतानीकं महाराज श्रुतकर्मा सुतस्तव ।
व्यश्वसूतरथं चक्रे निमेषार्धादसम्भ्रमः ॥ १२
हताश्वे तु रथे तिष्ठञ् शतानीको महारथः ।
गदां चिक्षेप सङ्क्रुद्धस् तव पुत्रस्य मारिष ॥ १३
सा कृत्वा स्यन्दनं भस्म हयान् सारथिमेव च ।

---

1. ख—सप्तदशार्धानि न सन्ति

ध्वजं चैव पताकां च मेदिनीमन्वपद्यत ॥　　　　१४

तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ ।
व्यपाक्रमेतां युद्धात्तु प्रेक्षमाणौ परस्परम् ॥　　　　१५

पुत्रस्तु तव सम्भ्रान्तो विविंशो रथमाव्रजत् ।
शतानीकोऽपि राजेन्द्र प्रतिविन्ध्यरथं गतः ॥　　　　१६

सुतसोमं तु शकुनिर् विद्ध्वा सुनिशितैश्शरैः ।
नाकम्पयत सङ्क्रुद्धो वार्योघ इव पर्वतम् ॥　　　　१७

सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम् ।
शरैरनेकसाहस्रैश् छादयामास भारत ॥　　　　१८

तान् शरान् शकुनिस्तस्य तूर्णं चिच्छेद पत्रिभिः ।
लघुहस्तश्चित्रयोधी जितकाशी च संयुगे ॥　　　　१९

निवार्य समरे चापि शरांस्तान् निशितैश्शरैः ।
[1]आजघान ततः क्रुद्धस् सुतसोमं त्रिभिश्शरैः ॥　　　　२०

नाकम्पयत सङ्क्रुद्धो वार्योघ इव पर्वतम् ।　　　　२०॥

तस्याश्वान् स्यन्दनं केतुं तिलशो व्यधमच्छरैः ।
स्यालस्तव महावीर्यस् तत उच्चुक्रुशुर्जनाः ॥　　　　२१॥

हताश्वो विरथश्चैव छिन्नकेतुश्च मारिष ।
धन्वी धनुर्वरं गृह्य रथाद्भूमौ व्यतिष्ठत ॥　　　　२२॥

---

1. ख—अर्धद्वयं नास्ति

व्यसृजत् सायकांश्चैव स्वर्णपुङ्खाञ् शिलाशितान् ॥ २३

छादयामासुरथ ते तव स्यालस्य तं रथम् ।
पतङ्गानामिव व्राताश् शरव्राता महारथम् ॥ २४

सञ्छाद्यमानोऽपि दृढं विव्यथे नैव सौबलः ।
प्रामर्दत शरानस्ताञ् शरजालैर्महारथः ॥ २५

तत्रातुष्यन्त योधाश्च सिद्धाश्चैव दिवि स्थिताः ।
सुतसोमस्य तत् कर्म दृष्ट्वाऽश्रद्धेयमद्भुतम् ॥ २६

रथस्थं नृपतिं यत्तु पदातिस्समयोधयत् ॥ २६॥

तस्य तीक्ष्णैर्महावेगैर् भल्लैस्सन्नतपर्वभिः ।
व्यधमत् कार्मुकं राजंस् तूणीरांश्चैव सर्वशः ॥ २७॥

स च्छिन्नधन्वा समरे खड्गमुद्यम्य नानदत् ।
वैदूर्योत्पलपत्राभं दन्तिदन्तमयत्सरुम् ॥ २८॥

भ्राम्यमाणं ततस्तं तु विमलाम्बरदर्शनम् ।
कालोपमं तदा मेने सुतसोमस्य धीमतः ॥ २९॥

सोऽचरत् सहसा खड्गी मण्डलानि सहस्रशः ।
चतुर्दिशं महाराज शिक्षाबलसमन्वितः ॥ ३०॥

सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान् ।
तानापतत एवाशु चिच्छेद परमासिना ॥ ३१॥

ततः क्रुद्धो महाराज सौबलः परवीरहा ।

प्राहिणोत् सुतसोमस्य शरानाशीविषोपमान् ॥ ३२॥
चिच्छेद तांस्तु खड्गेन शिक्षया च बलेन च ।
दर्शयँल्लाघवं युद्धे तार्क्ष्यतुल्यपराक्रमः ॥ ३३॥
तस्य सञ्चरतो राजन् मण्डलावर्तने तदा ।
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ॥ ३४॥
स चिछन्नस्सहसा भूमौ निपपात महानसिः ॥ ३५
अर्धमस्य स्थितं हस्ते त्सरोर्यत्तु भारत ।
छिन्नमाज्ञाय निस्त्रिंशम् अवप्लुत्य पदानि षट् ॥ ३६
प्राविध्यतासिं तच्छेषं सुतसोमो महाबलः ॥ ३६॥
तच्छित्त्वा सगुणं चापं स्वर्णवज्रविभूषितम् ।
पपात धरणीं तूर्णं रणे तस्य महात्मनः ॥ ३७॥
सुतसोमस्ततो राजञ् छ्रुतकीर्तिरथं गतः ॥ ३८
सौबलोऽपि धनुर्गृह्य घोरमन्यन्महाबलः ।
अभ्ययात् पाण्डवानीकं निघ्नञ् शत्रुगणान् बहून् ॥ ३९
तत्र नादो महानासीत् पाण्डवानां विशां पते ।
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ॥ ४०
तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ४१

यथा दैत्यचमूं राजन् देवराजो ममर्द ह ।
तथैव पाण्डवानीकं सौबलेयो व्यनाशयत् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ७३ ॥ कर्णपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

## ॥ सप्तदशोऽध्यायः ॥

---

कृपकृतवर्मभ्यां धृष्टद्युम्नशिखण्डिनोः पराजयः ॥

---

सञ्जयः—

धृष्टद्युम्नं कृपो राजन् वारयामास संयुगे ।
यथा दृप्तं वने सिंहं शरभो वारयेद्युधि ॥ १

निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात् पदं विचलितुं नाशकत् तत्र भारत ॥ २

गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति ।
वित्रेसुस्सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ३

तत्र जल्पन्ति पाण्डूनां रथिनस्सादिनस्तथा ॥ ३॥

पाण्डुसैनिकाः—

द्रोणस्य निधनान्नूनं सङ्क्रुद्धो द्विपदां वरः ।

शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ॥ ४॥
अपि स्वस्ति भवेदस्य धृष्टद्युम्नस्य गौतमात् ।
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ॥ ५॥
अप्ययं ब्राह्मणस्सर्वान् न नो हन्यात् समागतान् ॥ ६
यादृशं दृश्यते रूपम् अन्तकप्रतिमं रणे ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ॥ ७
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवाञ्छस्त्रसम्पन्नः क्रोधेन च समन्वितः ॥ ८
पार्षतश्च महायुद्धे विमुखोऽद्यापि लक्ष्यते ॥ ८॥

सञ्जयः—

इत्येवं विविधा वाचो व्यश्रूयन्त रणाजिरे ॥ ९
विनिश्श्वस्य ततः क्रोधात् कृपश्शारद्वतो नृप ।
पार्षतं छादयामास निश्चेष्टं शरवृष्टिभिः ॥ १०
स वध्यमानस्समरे गौतमेन महात्मना ।
कर्तव्यं नाभिजज्ञे वै मोहेन महता वृतः ॥ ११
[1]तमब्रवीत् ततो यन्ता कच्चित् क्षेमं नु मारिष ।
ईदृशं व्यसनं युद्धे न ते दृष्टं कदाचन ॥ १२
दैवयोगादिमे बाणा न जघ्नुर्मर्म चाहवे ।

---

1. ख—अर्धषट्कं नास्ति

प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वशः ॥ १३

व्यावर्तये तव रथं नदीवेग इवाह्वात् ।
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हृतः ॥ १४

धृष्टद्युम्नस्ततो राजञ् शनकैरब्रवीद्वचः ॥ १४॥

धृष्टद्युम्नः—

मुह्यते मे मनस्तात गात्रस्वेदश्च जायते ।
[1]वेपथुश्च क्लमश्चैव रोमहर्षश्च जायते ॥ १५॥

ब्राह्मणं वर्जयन् युद्धे शनैर्याहि यतोऽच्युतौ ॥ १६

अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेन्मह्यम् इति मे नैष्ठिकी मतिः ॥ १७

सञ्जयः—

ततः प्रायान्महाराज सारथिस्त्वरयन् हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ १८

प्रद्रुतं तु रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ।
किरञ् शरशतान्येव गौतमोऽनुययौ तदा ॥ १९

शङ्खं च पूरयामास मुहुर्मुहुररिन्दमः ।
पार्षतं द्रावयामास महेन्द्र इव शम्बरम् ॥ २०

शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ।
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ २१

---

1. ख—इदमर्धं नास्ति

शिखण्डी तु समासाद्य हृदिकानां महारथम् ।
पञ्चभिर्निशितैर्भल्लैर् जत्रुदेशे समर्पयत् ॥ २२

कृतवर्मा तु सङ्क्रुद्धो विद्ध्वा षष्टिभिराशुगैः ।
धनुरेकेन चिच्छेद स्मयन्निव महारथः ॥ २३

अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ।
तिष्ठ तिष्ठेति हार्दिक्यं सङ्क्रुद्धस्समपद्यत ॥ २४

ततोऽस्य नवतिं बाणान् रुक्मपुङ्खान् सुतेजनान् ।
प्रेषयामास समरे तेऽस्याभ्रश्यन्त वर्मणः ॥ २५

वितथांस्तान् समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन सोऽच्छिनत् कार्मुकं दृढम् ॥ २६

अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् ॥ २७

सात्वतस्तु रणे क्रुद्धो मार्गणैः क्षतविग्रहः ।
व्यसृजद्रुधिरं गात्रैर् मुखात् कुम्भ इवोदकम् ॥ २८

रुधिरेण परिक्लिन्नः कृतवर्मा व्यरोचत ।
वर्षेण क्लेदितो राजन् यथा गैरिकपर्वतः ॥ २९

अथान्यद्धनुरादाय समार्गणगणं ततः ।
शिखण्डिनं त्रिभिर्बाणैश् शङ्खदेशेऽभ्यताडयत् ॥ ३०

शङ्खदेशे स्थितैर्बाणैश् शिखण्डी तु व्यराजत ।

शाखाप्रशाखैर्विमलैस् सुमहान् वै यथा द्रुमः ॥ ३१

तावन्योन्यं रणे विद्ध्वा रुधिरेण समुक्षितौ ।
पोप्लूयमानौ हि यथा महान्तौ शोणितह्रदे ॥ ३२

तद्वद्विरेजतुर्वीरौ शोणितेन परिप्लुतौ ।
यथा च किंशुकौ फुल्लौ पुष्पमासेऽभ्युपागते ॥ ३३

रुधिरोक्षितसर्वाङ्गौ रक्तचन्दनरूषितौ ।
भुजगाविव सङ्क्रुद्धौ रेजतुस्तौ नरोत्तमौ ॥ ३४

तावुभौ शरनुन्नाङ्गौ परस्परशरक्षतौ ।
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ३५

अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ३६

कृतवर्मा महाराज पार्षतं निशितैश्शरैः ।
रणे विव्याध सप्तत्या स्वर्णपुङ्खैश्शिलाशितैः ॥ ३७

ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत् त्वरयाऽन्वितः ॥ ३८

स तेनाभिहतो राजन् मूर्छयाऽभिपरिप्लुतः ।
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ॥ ३९

अपोवाह रणात् तं तु सारथी रथिनां वरम् ।
हार्दिक्यशरसंन्तप्तम् निश्श्वसन्तं पुनः पुनः ॥ ४०

पराजिते तत्र शूरे द्रुपदस्य सुते प्रभो ।
प्राद्रवत् पाण्डवी सेना वध्यमाना समन्ततः ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

## ॥ अष्टादशोऽध्यायः ॥

---

अर्जुनेन संशप्तकपराजयः ॥

---

सञ्जयः—

श्वेताश्वोऽपि महाराज व्यधमत् तावकं बलम् ।
यथा वायुस्समासाद्य तूलराशिं समन्ततः ॥ १

प्रत्युद्ययुस्त्रिगर्तास्तं शिबयस्सह कौरवैः ।
वसातयोऽथ साल्वाश्च गोपालाश्च यशस्विनः ॥ २

सत्यदेवस्सत्यकीर्तिर् मित्रदेवश्श्रुतञ्जयः ।
सौश्रुतिश्चन्द्रदेवश्च मित्रवर्मा च भारत ॥ ३

त्रिगर्तराजस्समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर् नानाशस्त्रधरैर्युधि ॥ ४

ते सृजन्तश्शरान् घोरान् किरन्तोऽर्जुनमाहवे ।

अभ्यवर्तन्त सहसा वार्योघा इव सागरम् ॥ ५

ते त्वर्जुनं समासाद्य योधाश्शतसहस्रशः ।
अगच्छन् विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ६

ते वध्यमानास्समरे न जहुः पाण्डवं तदा ।
दह्यमाना महाराज शलभा इव पावकम् ॥ ७

सत्यदेवस्त्रिभिर्बाणैर् विव्याध युधि पाण्डवम् ।
मित्रदेवस्त्रिषष्ट्या च चन्द्रदेवश्च सप्तभिः ॥ ८

[1]मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि पञ्चभिः ।
श्रुतञ्जयश्च विंशत्या सुशर्मा नवभिश्शरैः ॥ ९

स विद्धो बहुभिस्सङ्ख्ये प्रतिविव्याध तान् नृपान् ।
सौश्रुतिं पञ्चविंशत्या चन्द्रदेवं तथाऽष्टभिः ॥ १०

मित्रदेवं शतेनैव सत्यदेवं त्रिभिश्शरैः ।
अष्टाभिर्मित्रवर्माणं सुशर्माणं तथैव च ॥ ११

श्रुतञ्जयं च राजानं हत्वा तत्र शिलाशितैः ।
सौश्रुतेस्सशिरस्त्राणं शिरः कायादपाहरत् ॥ १२
त्वरितं चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ १२॥

अथेतरान् महाराज यतमानान् महारथान् ।
पञ्चभिः पञ्चभिर्बाणैर् एकैकं प्रत्यताडयत् ॥ १३॥

---

1. ख—इदमर्धं नास्ति

सत्यदेवस्तु सङ्क्रुद्धस् तोमरं ससृजे शितम् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ १४॥

स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयस्स्वर्णदण्डो जगाम धरणीतलम् ॥ १५॥

माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदो ऽन्यपतद्धस्ताद् रश्मयश्च विशां पते ॥ १६॥

प्रतोदं गृह्य सोऽन्यत् तु रश्मीन् सङ्गृह्य च द्रुतम् ।
वाहयामास तानश्वान् सत्यदेवरथं प्रति ॥ १७॥

विष्वक्सेनं सुनिर्विद्धं दृष्ट्वा पार्थो धनञ्जयः ।
क्रोधमाहारयत् तीव्रं कृष्णं चेदमुवाच ह ॥ १८॥

अर्जुनः—

चोदयाश्वान् महाबाहो सत्यदेवरथं प्रति ॥ १९

सञ्जयः—

[1]ततस्स चोदयामास सत्यदेवरथं प्रति ॥ १९॥

अथ दिव्यास्त्रविच्छूरो जातमन्युर्धनञ्जयः ।
सत्यदेवं शरैस्तीक्ष्णैर् वारयित्वा महाबलः ॥ २०॥

ततस्सुनिशितैर्भल्लै राजंस्तस्य महात्मनः ।
कुण्डलोपहितं कायाच् चकर्त प्रहसञ् शिरः ॥ २१॥

---

1. क—कोश एकस्मिन्नेवेदमर्धं वर्तते

तं निहत्य शितैर्बाणैर् मित्रवर्माणमाहवे ।
वत्सदन्तेन हत्वा च सारथिं चास्य मारिष ॥ २२॥

ततश्शरशतैर्भूयस् संशप्तकगणान् बहून् ।
पातयामास सङ्क्रुद्धश् शतशोऽथ सहस्रशः ॥ २३॥

ततो राजतपुङ्खेन राजन् शीर्षं महात्मनः ।
मित्रसेनस्य चिच्छेद क्षुरप्रेण महायशाः ॥ २४॥

सुशर्माणं ततः क्रुद्धो जत्रुदेशे समर्पयत् ।
[1]नाराचेन सुमुक्तेन सुतीक्ष्णेन महायशाः ॥ २५॥

ततस्संशप्तकास्सर्वे परिवार्य धनञ्जयम् ।
शस्त्रौघैरमृदुः क्रुद्धा नादयन्तो दिशो दश ॥ २६॥

स तैरभ्यर्दितो जिष्णुश् शक्रतुल्यपराक्रमः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः ॥ २७॥

ततश्शरसहस्राणि प्रादुरासन् विशां पते ।
कार्मुकात् पाण्डुपुत्रस्य पार्थस्यामिततेजसः ॥ २८॥

ततस्तु च्छिद्यमानानां ध्वजानां धनुषां तथा ।
रथानां सपताकानां तूणीराणां युगैस्सह ॥ २९॥

[2]अक्षाणामथ चक्राणां योक्त्राणां रश्मिभिस्सह ।
कूबराणां वरूथानां पृषत्कानां च संयुगे ॥ ३०॥

---

1. अ-ब—नास्तीदमर्धम् 2. अ—नास्तीदमर्धम्

अश्वानां पततां चापि प्रासानामसिचर्मणाम् ।
गदानां परिघानां च शक्तीनां तोमरैस्सह ॥　　　　२१॥

शतघ्नीनां सचक्राणां भुजानां चोरुभिस्सह ।
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष ॥　　　　२२॥

हाराणां हेमसूत्राणां कटकानां च भारत ।
छत्राणां मकुटानां च व्यजनानां महात्मनाम् ॥　　　　२३॥
राशयश्चात्र दृश्यन्ते पतितानां महीतले ॥　　　　२४

सकुण्डलानि स्रग्वीणि पूर्णचन्द्रनिभानि च ।
शिरांस्युर्व्यामदृश्यन्त तारागण इवाम्बरे ॥　　　　२५

सुखार्हाणि सुवासांसि चन्दनेनोक्षितानि च ।
शरीराणि व्यदृश्यन्त निहतानां महीतले ॥　　　　२६

रुद्रस्याक्रीडसदृशं घोरमायोधनं तदा ॥　　　　२६॥

निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ।
अर्जुनेन महाराज तत्र तत्र महारणे ॥　　　　२७॥

हस्तिभिः पतितैश्चैव तुरङ्गैश्चाभवन्मही ।
अगम्यरूपा समरे विशीर्णैरिव पर्वतैः ॥　　　　२८॥

नासीद्रथपथस्तस्य पाण्डवस्य महात्मनः ।
निघ्नतश्शात्रवान् भल्लैर् हस्त्यश्वं चामितं महत् ॥　　　　२९॥

आस्तामितस्ततो राजन् रथचक्रे विशां पते

रणे विचरतस्तस्य तस्मिँल्लोहितकर्दमे ॥ ४०॥

सीदमाने तु चक्रे ते समूहुस्तुरगा भृशम् ।
श्रमेण महता युक्ता मनोमारुतरंहसः ॥ ४१॥

वध्यमानं तु तत् सैन्यं पाण्डुपुत्रेण धन्विना ।
प्रायशो विमुखं सैन्यं नावतिष्ठत संयुगे ॥ ४२॥

तान्जित्वा समरे जिष्णुस् संशप्तकगणान् बहून् ।
रराज स महाराज विधूमोऽग्निरिव ज्वलन् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ एकोनविंशोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

युधिष्ठिरं महाराज विसृजन्तं शरान् बहून् ॥
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ १

समापतन्तं सहसा तव पुत्रं महाबल ।
धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति चाब्रवीत् ॥ २

स तु तं प्रतिविव्याध नवभिर्निशितैश्शरैः ।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ३

ततो युधिष्ठिरो राजन् स्वर्णपुङ्खाञ् शिलाशितान् ।
दुर्योधनाय चिक्षेप त्रयोदश शिताञ् शरान् ॥ ४

चतुर्भिश्चतुरो वाहांस् तस्य हत्वा महारथः ।
पञ्चमेन शिरः कायात् सारथेस्तु समाक्षिपत् ॥ ५

षष्ठेन तु ध्वजं राज्ञस् सप्तमेन तु कार्मुकम् ।
अष्टमेन तथा खड्गं पातयामास भूतले ॥ ६
पञ्चभिर्नृपतिं चापि धर्मराजोऽर्दयद्भृशम् ॥ ६॥

हताश्वात् तु रथात् तस्माद् अवप्लुत्य तवात्मजः ।
उत्तमं व्यसनं प्राप्तो भूमावेव व्यतिष्ठत ॥ ७॥

तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः ।
अभ्यवर्तन्त सहसा परीप्सन्तो जनाधिपम् ॥ ८॥

ततः पाण्डुसुतास्सर्वे परिवार्य युधिष्ठिरम् ।
अभ्ययुस्समरे राजंस् ततो युद्धमवर्तत ॥ ९॥

अथ तूर्यसहस्राणि प्रावाद्यन्त महामृधे ॥ १०

क्ष्वेलाः किलकिलाशब्दाः प्रादुरासन् विशां पते ॥ १०॥
ये येऽभ्यगच्छन् समरे पाञ्चालाः कौरवैस्सह ।
ते शूरास्समरे सर्वे प्राक्षीयन्त ततस्ततः ॥ ११॥

नरा नरैस्समाजग्मुर् वारणा वारणैस्सह ।
रथिनो रथिभिस्सार्धं हयाश्च हयसादिभिः ॥ १२॥
द्वन्द्वान्यासन् महाराज प्रेक्षणीयान्यनेकशः ।
तावकानां परेषां च चित्राणि च गुरूणि च ॥ १३॥

विस्मापकान्यनीकानि शस्त्रास्त्रगुणसम्पदा ।
युद्धानि चक्रिरे राजन् परस्परजिगीषया ॥ १४॥

अन्योन्यं समरे जघ्नुर् योधव्रतमनुष्ठिताः ।
न हि ते प्रहरन्ति स्म पृष्ठतो नाप्यनायुधम् ॥ १५॥

मुहूर्तमिव तद्युद्धम् आसीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन् निर्मर्यादमवर्तत ॥ १६॥

रथी पत्तिं समासाद्य समरे निशितैश्शरैः ।
प्राहिणोद्यमलोकाय कश्चिदेव पराक्रमात् ॥ १७॥

नागानन्यस्समासाद्य बहुधा विकिरञ् शरान् ।
द्रावयामास समरे तत्र तत्र तदा तदा ॥ १८॥

पादातैराहता नागा विवरेषु समन्ततः ।
चक्रुरार्तस्वरान् राजन् सम्पतन्तस्ततस्ततः ॥ १९॥
पदातयश्च नागानां प्रद्रुतानां महामृधे ।
उत्सृज्य वारणांस्तूर्णम् अपसस्रुर्भयार्दिताः ॥ २०॥

[1]निमित्तं मन्यमानाश्च परिणाम्य महागजाः ।
जगृहुर्बिभिदुश्चैव छत्राण्याभरणानि च ॥ २१॥

विद्राव्य च बहूनश्वान् नागराजा मदोत्कटाः ।
विषाणैरभिनिर्जघ्नुर् ममृदुश्च परस्परम् ॥ २२॥

साश्वारोहांश्च तुरगान् विषाणैर्ममृदू रुषा ।
अपरांश्चिक्षिपुर्वेगात् प्रगृह्य च दिशो दश ॥ २३॥

प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।
निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥ २४॥

निगृहीता हयाश्चान्ये पार्श्वस्थैस्तत्र भारत ।
नागाश्च शतशो राजन् निर्भिन्ना भूमिमाविशन् ॥ २५॥

सहसा सादिनं तत्र तोमरेण महागजः ।
भूमौ सममसथ्नीत सवर्माणं विशां पते ॥ २६॥

रथाश्च सादिभिः कैश्चित् सञ्छिन्ना न्यपतन् भुवि ॥ २७

तथा साश्वान् पदातांश्च तत्र तत्र विशां पते ।
रथान् नागास्समासाद्य परिगृह्य च मारिष ॥ २८

व्याक्षिपन् सहसा तत्र घोररूपा भयानकाः ॥ २८॥

नाराचैर्निहताश्चापि निपतन्ति महागजाः ।
गिरीणां शिखराणीव वज्ररुग्णानि भूतले ॥ २९॥

---

1. ख—इदमर्धं नास्ति

योधा योधान् समासाद्य मुष्टिभिर्व्यहनन् भुवि ।
केशेष्वन्योन्यमाक्षिप्य चिक्षिपुर्बिभिदुश्च ह ॥ ३०॥
उद्यम्य तु भुजैरन्ये निक्षिप्य च महीतले ।
शिरस्युरसि चाक्रम्य स्फुरतो न्यहनञ्छिरः ॥ ३१॥
मृतमन्यो महाराज पदा ताडितवांस्तदा ॥ ३२
जीवतश्च तथैवान्यश् शस्त्रं काये न्यमज्जयत् ।
मुष्टियुद्धं महच्चासीद् योधानां तत्र भारत ॥ ३३
तथा केशग्रहश्चोग्रो बाहुयुद्धं च दारुणम् ॥ ३३॥
समासक्तस्य चान्योन्यम् अविज्ञातस्तथाऽपरः ।
जहार समरे प्राणान् नानाशस्त्रैरनेकशः ॥ ३४॥
संसक्तेषु च योधेषु वर्तमाने च सङ्कुले ।
कबन्धान्युत्थितानि स्म शतशोऽथ सहस्रशः ॥ ३५॥
शोणितैस्सिच्यमानानि शस्त्राणि कवचानि च ।
महाराजतरक्तानि वस्त्राणीव चकाशिरे[1] ॥ ३६॥
एवमेतत् तदा युद्धं तत्राभूद्रोमहर्षणम् ।
उन्मत्तगङ्गाप्रतिमं शब्देनापूरयद्दिशः ॥ ३७॥
नैव स्वे न परे राजन् व्यज्ञायन्त शरातुराः ।
योद्धव्यमित्ययुध्यन्त राजानो जयगृद्धिनः ॥ ३८॥

---

1. ब—उद्यस्य तुरगौ रथ्यौ निक्षिप्य च महीतले । [अधिकः पाठः]

स्वान् स्वे जग्मुर्महाराज परांश्चैव समागतान् ।
उभयोस्सेनयोर्वीरा व्याकुले तु रणे सति ॥ ३९॥

रथैर्भग्नैर्महाराज वारणैश्च निपातितैः ।
हयैश्च पातितैस्तत्र नरैश्च विनिपातितैः ॥ ४०॥

अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।
क्षणेनासीन्महाराज क्षतजौघप्रवाहिनी ॥ ४१॥

शूराणां हर्षजननी भीरूणां भयवर्धनी ।
पाञ्चालानवधीत् कर्णस् त्रिगर्तांश्च धनञ्जयः ॥ ४२॥

भीमसेनः कुरून् सर्वान् हस्त्यनीकं च सर्वशः ॥ ४३
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
अपराह्णे महाराज काङ्क्षन्त्योर्विपुलं यशः ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ विंशोऽध्यायः ॥

युधिष्ठिरेण दुर्योधनपराजयः ॥

धृतराष्ट्रः—

अतितीव्राणि युद्धानि सुमहान्ति बहूनि च ।
तत्र सञ्जय चाश्रौषं पुत्राणामिह सङ्क्षयम् ॥ १

यथा तु मे कथयसे यथा युद्धं प्रवर्तते ।
न सन्ति सूत कौरव्या इति मे नैष्ठिकी मतिः ॥ २

दुर्योधनस्तु विरथः कृतस्तत्र महारणे ।
धर्मपुत्रः कथं चक्रे तस्मिन् वा नृपतिः कथम् ॥ ३

अपराह्णे कथं युद्धम् अभवद्रोमहर्षणम् ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ४

सञ्जयः—

संशप्तकेषु सैन्येषु वध्यमानेषु भागशः ।
रथमन्यं समास्थाय पुत्रस्तव विशां पते ॥ ५

क्रोधेन महताऽऽविष्टस् सविषो भुजगो यथा ।
सर्वसैन्यमुदीक्ष्यैव क्रोधादुद्वृत्तलोचनः ॥ ६

दृष्ट्वा धर्मसुतं चापि सैन्यमध्ये व्यवस्थितम् ।
श्रिया ज्वलन्तं कौन्तेयम् यथा वज्रधरं युधि ॥ ७

दुर्योधनस्तु दृष्ट्वैव धर्मपुत्रं युधिष्ठिरम् ।
उवाच त्वरितो सूतम् याहि याहीति भारत ॥ ८

दुर्योधनः—

तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः ।
छत्रेण ध्रियमाणेन राजा तिष्ठति दंशितः ॥ ९

सञ्जयः—

स सूतश्चोदितो राज्ञा रज्ञास्स्यन्दनमुत्तमम् ।
युधिष्ठिरस्याभिमुखम् प्रेषयामास संयुगे ॥ १०

ततो युधिष्ठिरः क्रुद्धः प्रणुन्न इव पन्नगः ।
सारथिं चोदयामास याहि यत्र सुयोधनः ॥ ११

तौ समाजग्मतुर्वीरौ भ्रातरौ राजसत्तमौ ॥ ११॥

समेत्य च महावीर्यौ संरब्धौ युद्धदुर्मदौ ।
ववर्षतुर्महेष्वासौ शरैरन्योन्यमाहवे ॥ १२॥

ततो दुर्योधनो राजा धर्मशीलस्य मारिष ।
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे ॥ १३॥

तं नामृष्यत सङ्क्रुद्धो धनुषश्छेदमाहवे ।
दुर्योधनस्य कौरव्य तव पुत्रस्य मारिष ॥ १४॥

अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः ।
अन्यत् कार्मुकमादाय धर्मराजश्चमूमुखे ॥ १५॥

दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ १६

अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ ।

युधिष्ठिरस्य चिक्षेप शरान् कनकभूषणान् ॥ १७
रुक्मपुङ्खान् प्रसन्नाग्रान् सविषानिव पन्नगान् ॥ १७॥

तावन्योन्यं सुसंरब्धौ शस्त्रवर्षाण्यमुञ्चताम् ।
सिंहाविव बलोद्वृत्तौ परस्परजिगीषया ॥ १८॥

जघ्नतुस्तौ रणेऽन्योन्यं नदन्तौ वृषभाविव ।
अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ ॥ १९॥

ततः पूर्णायतोत्सृष्टैश् शरैस्तौ तु कृतव्रणौ ।
विरेजतुर्महाराज पुष्पिताविव किंशुकौ ॥ २०॥

ततो राजन् प्रतिभयान सिंहनादान् मुहुर्मुहुः ।
तलयोश्च महाशब्दं धनुषश्च महाहवे ॥ २१॥

शङ्खशब्दं तथा चोग्रं चक्रतुस्तौ नरेश्वरौ ॥ २२
अन्योन्यं च महाराज पीडयामासतुर्भृशम् ॥ २२॥

ततो युधिष्ठिरो राजा तव पुत्रं त्रिभिश्शरैः ।
आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः ॥ २३॥

प्रतिविव्याध तं तूर्णं तव पुत्रो महारथः ।
पञ्चभिर्निशितैर्बाणैस् स्वर्णपुङ्खैश्शिलाशितैः ॥ २४॥

ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत ।
सर्वपारशवीं गुर्वीं महोल्काप्रतिमां तदा ॥ २५॥

तामापतन्तीं सहसा धर्मराजश्शिलाशितैः ।

त्रिभिः प्रहस्य चिच्छेद तं च विव्याध सप्तभिः ॥ २६॥

निपपात ततस्सा तु स्वर्णदण्डा महास्वना ।
दीपयन्ती महोल्काभा राजञ् शक्तिर्दिशो दश ॥ २७॥

शक्तिं विनिहतां दृष्ट्वा तव पुत्रो विशां पते ।
नवभिर्निशितैर्भल्लैर् आजघान युधिष्ठिरम् ॥ २८॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः ॥ २९॥

समधत्त च तं बाणं धनुर्मध्ये महाबलः ।
चिक्षेप च ततो राजा राज्ञः क्रुद्धः पराक्रमी ॥ ३०॥

स तु बाणस्समासाद्य तव पुत्रं महारथम् ।
व्यामोहयद्भृशं राजन् धरणीं च जगाम ह ॥ ३१॥

ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगतः ।
विधित्सुः कलहस्यान्तम् अभिदुद्राव पाण्डवम् ॥ ३२॥

तमालक्ष्योद्यतगदं दण्डहस्तमिवान्तकम् ।
धर्मराजो महाशक्तिं पुत्राय प्राहिणोत् तव ॥ ३३॥

दीप्यमानां महाराज महोल्कां ज्वलितामिव ।
यमदण्डनिभां घोरां कालरात्रिमिवापराम् ॥ ३४॥

रथस्थस्स तया विद्धस् तव पुत्रस्स्तनान्तरे ।
भृशं संविग्नहृदयः पपात च मुमोह च ॥ ३५॥

[1]ततस्त्वरितमागम्य कृतवर्मा तवात्मजम् ।
प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे ॥ ३६॥

भीमोऽपि महतीं गृह्य गदां हेमपरिष्कृताम् ।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ३७॥

एवं तदभवद्युद्धं त्वदीयानां परैस्सह ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ७३ ॥ कर्णपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ एकविंशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥ १ ॥ षोडशदिवसयुद्धोपसंहारः ॥ २ ॥

---

सञ्जयः—

ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः ।
पुनरावृत्य सङ्ग्रामं चक्रुर्देवासुरोपमम् ॥ १

द्विरदनररथाश्वशङ्खशब्दैः
परिहृषिता विविधैश्च शस्त्रघोषैः ।
द्विरदरथपदातिसादिसङ्घाः
परिकुपिताभिमुखाः प्रजघ्निरे ते ॥ २

शितपरशुगदासिपट्टसैर्
इषुभिरनेकविधैश्च सूदिताः ।
द्विरदरथहया महाहवे ते
पुरुषवराः पुरुषैश्च वाहनैः ॥ ३

कमलदिनकरेन्दुसन्निभैस्
सितदशनैस्सुमुखाक्षिनासिकैः ।
रुचिरमकुटकुण्डलैर्मही
पुरुषशिरोभिरथास्तृता बभौ ॥ ४

परिघमुसलशक्तितोमरैर्
नखरभुसुण्ठिगदाशतैर्हताः ।
द्विरदनरहयास्सहस्रशो
रुधिरनदीप्रवहास्तदाऽभवन् ॥ ५

प्रहतरथनराश्वकुञ्जरं
प्रतिभयदर्शनमुल्बणं बभौ ।
तदहितहतमाहवे बलं
पितृपतिराष्ट्रमिव प्रजाक्षये ॥ ६

अथ तव नरदेव सैनिकास्
तव च सुतास्सुरसूनुसन्निभाः ।

अमितबलपुरस्सरा रणे
कुरुवृषभाश्शिनिपुत्रमभ्ययुः ॥ ७

[1]तदतिरुधिरभीममाबभौ
पुरुषवराश्वरथद्विपाकुलम् ।
लवणजलसमुद्धतस्वनं
बलमसुरामरसैन्यसन्निभम् ॥ ८

सुरपतिसमविक्रमस्ततस्
त्रिदशवरावरजोपमं युधि ।
दिनकरकिरणप्रभैः पृषत्कै
रवितनयोऽभ्यहनच्छिनिप्रवीरम् ॥ ९

त्वरितमतिरथा रथर्षभं
द्विरदरथाश्वपदातिभिस्सह ।
तदुदधिनिभमाद्रवद्बलम्
त्वरिततरैस्समभिद्रुतं बलैः ॥ १०

द्रुपदसुतवरस्तदाऽकरोत्
पुरुषरथाश्वगजक्षयं महत् ॥ १०॥

तमपि सरथवाजिसारथिं
शिनिवृषभो विविधैश्शरैस्त्वरन् ।

---

1. अ-ख—सप्तार्धानि न सन्ति

भुजगविषनिभैश्शरोत्तमैः
पुरुषवरं समवास्तृणोत् तदा ॥ ११॥

शिनिवृषभशरप्रपीडितं
तव सुहृदो वसुषेणमभ्ययुः ॥ १२

अथ पुरुषवरौ कृताह्निकौ
भवमभिपूज्य यथाविधि प्रभुम् ।

[1]अरिवधकृतनिश्चयौ द्रुतं
तव बलमर्जुनकेशवौ श्रितौ ॥ १३

जलदनिनदनिस्वनं रथं
पवनविधूतपताककेतनम् ।

सिતहयमुपयान्तमन्तिकं
कृतमनसो ददृशुस्तदाऽरयः ॥ १४

हस्तेन हस्तिवरहस्तसमानहस्तस्
तूणीमुखादथ शरान् मुहुराददानः ।

वज्रीव दानवचमूं प्रगृहीतचापो
भीमानुजस्तव नरेन्द्र चमूं जगाहे ॥ १५

अथ विष्फार्य गाण्डीवं रथे नृत्यन्निवार्जुनः ।
शरसम्बाधमकरोत् खं दिशः प्रदिशस्तथा ॥ १६

---

1. अ-ख—नास्तीदमर्धम्

रथान् विमानप्रतिमान् सज्जानिन्द्रायुधध्वजान् ।
सयोधान् सारथीन् बाणैर् अभ्राणीवानिलोऽवधीत् ॥ १७

गजान् गजप्रणेतॄंश्च वैजयन्तीश्शुभध्वजान् ।
सादिनोऽश्वांश्च पत्तींश्च निन्ये बाणैर्यमक्षयम् ॥ १८

तमन्तकमिव क्रुद्धम् अनिवार्यं महारथम् ।
दुर्योधनोऽभ्ययादेको निघ्नन् बाणैः पृथग्विधैः ॥ १९

तस्यार्जुनो धनुः केतुम् अश्वान् सूतं च सायकैः ।
हत्वा सप्तभिरेकेन च्छत्रं चिच्छेद पत्रिणा ॥ २०

शरमन्यं समादाय व्यसृजत् प्राणघातिनम् ।
दुर्योधनायेषुवरं तं द्रौणिस्सप्तधाऽच्छिनत् ॥ २१

ततो द्रौणेर्धनुश्छित्त्वा हत्वा च तुरगाञ् शरैः ।
कृपस्य महदत्युग्रं धनुश्चिच्छेद पाण्डवः ॥ २२

हार्दिक्यस्य धनुश्छित्त्वा ध्वजं चाश्वांस्तदाऽवधीत् ।
दुश्शासनस्य चेष्वासं छित्त्वा राधेयमभ्ययात् ॥ २३

अथ सात्यकिमुत्सृज्य त्वरन् कर्णोऽर्जुनं त्रिभिः ।
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनस्त्रिभिः ॥ २४

कर्णस्य स्फुरदत्यर्थं प्रास्यतस्सायकान् धनुः ।
नानदत् त्रासजननं भूतानामहितान्तकम् ॥ २५

अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैश्शरैः ।

नवत्या नवभिश्चोग्रैश् शतेन पुनरर्पयत् ॥ २६

ततः प्रवीराः पार्थानां सर्वे कर्णमपीडयन् ॥ २६॥

युधामन्युश्शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।

उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च ॥ २७॥

चेदिकारूशमात्स्यानां केकयानां च तद्बलम् ।

चेकितानश्च बलवान् धर्मराजश्च सुव्रतः ॥ २८॥

एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमाः ।

परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन् ॥ २९॥

भाषन्तो वाग्भिरुग्राभिस् सर्वे कर्णवधे धृताः ॥ ३०

तां शस्त्रवृष्टीर्बहुधा कर्णश्छित्त्वा शितैश्शरैः ।

अपोवाहास्त्रवीर्येण द्रुमान् भङ्क्त्वेव मारुतः ॥ ३१

रथिनस्समहामात्रान् गजानश्वान् ससादिनः ।

पत्तिव्रातांश्च सङ्क्रुद्धो निघ्नन् कर्णो व्यदृश्यत ॥ ३२

न ग्लानिरासीत् कर्णस्य प्रास्यतस्सायकान् बहून् ।

रणे विनिघ्नतश्शत्रून् क्रुद्धस्येव शतक्रतोः ॥ ३३

तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा ।

विशस्त्रपत्रदेहासु तत आसीत् पराङ्मुखम् ॥ ३४

अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनस्स्मयन् ।

दिशः खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ ३५

मुसला इव निष्पेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्रा उग्रा इवापरे ॥ ३६

वध्यमानं च तत् सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ३७

निष्कैवल्यं यथा दुःखं प्रापुरश्वनरद्विपाः ।
वध्यमानाश्शरैरार्तास् तदा भीताः प्रदुद्रुवुः ॥ ३८

तेषां चैव तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ३९

तमसा च महाराज रजसा च विशेषतः ।
न किञ्चित् प्रत्यपश्याम शुभं वा यदि वाऽशुभम् ॥ ४०

ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपहारं ततश्चक्रुस् सहितास्सर्वसैनिकैः ॥ ४१

कौरवेष्वपयातेषु ततो राजन् दिनक्षये ।
जयं सुमनसः प्राप्य पार्थास्स्वशिबिरं ययुः ॥ ४२

वादित्रशब्दैर्विविधैस् सिंहनादैस्सनर्तनैः ।
परानपहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥ ४३

कृतेऽपहारे तैर्वीरैस् सैनिकास्सर्व एव ते ।
आशिषः पाण्डवेयेषु प्रायुञ्जन्त नरेश्वराः ॥ ४४

ततः कृतेऽपहारे च प्रहृष्टाः कुरुपाण्डवाः ।

निशि स्वशिबिरान् गत्वा न्यवसन्त नरेश्वर ॥ ४५

रणे प्रवृत्तान्यहनि कथयन्तस्सुखं तथा ॥ ४५॥

ततो रक्षःपिशाचाश्च श्वापदानि च सङ्घशः ।

जग्मुरायोधनं घोरं रुद्रस्याक्रीडनोपमम् ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ७३ ॥ कर्णपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]
इति कर्णस्य युद्धे प्रथमदिनयुद्धम्

---

## ॥ द्वाविंशोऽध्यायः ॥

कृष्णतुल्यसारथेरभावात् स्वस्यार्जुनान्न्यूनतां मन्यमानेन कर्णेन दुर्योधनं प्रति शल्यस्य सारथ्ये नियोजनचोदना ॥

धृतराष्ट्रः—

स्वेन च्छन्देन नस्सर्वान् अवधीद्व्यक्तमर्जुनः ।

न ह्यस्य समरे मुच्येद् अन्तकोऽप्याततायिनः ॥ १

पार्थो ह्येकोऽहरद्भद्राम् एकश्चाग्निमतर्पयत् ।

एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् ॥ २

निवातकवचानां च तिस्रः कोटीर्जघान ह ।

एकः किरातरूपेण स्थितं शर्वमयोधयत् ॥ ३

एको ह्यरक्षच्छूरतान् एकश्शर्वमतोषयत् ।
तेनैकेन जितास्सर्वे मदीया ह्युग्रतेजसः ॥ ४

ते न निन्द्याः प्रशस्यास्ते यत् ते चक्रुः प्रचक्ष्व तत् ॥ ४॥

सञ्जयः—

हतप्रहतविध्वस्ता विवर्मायुधवाहनाः ।
दीनस्वरा दूयमाना मानिनश्शत्रुनिर्जिताः ॥ ५॥

शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः ।
भग्नदंष्ट्रा हतविषाः पादाक्रान्ता इवोरगाः ॥ ६॥

तानब्रवीत् ततः कर्णः क्रुद्धस्सर्प इव श्वसन् ।
करं करेण निष्पिष्य प्रेक्षमाणस्तवात्मजम् ॥ ७॥

कर्णः—

यत् ते दृढश्च दक्षश्च स्मृतिमानर्जुनस्सदा ।
सम्बोधयति चाप्येनं प्राप्तकालमधोक्षजः ॥ ८॥

सहस्राक्षनिसृष्टया च शक्त्या तेन स्म वञ्चिताः ।
श्वस्त्वहं तस्य सङ्कल्पं सर्वं हन्ता विशां पते ॥ ९॥

सञ्जयः—

एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपो नृपान् ।
तेऽनुज्ञाता नृपास्तेन स्वान् निवासान् स्म भेजिरे ॥ १०॥

सुखोषिताश्च रजनीं पुनर्युद्धाय निर्ययुः ॥ ११

तेऽपश्यन् विहितं व्यूहं धर्मराजेन दुर्जयम् ।

प्रयत्नात् कुरुमुख्येन बृहस्पत्युशनोपमात् ॥ १२

ततः प्रतीपकर्तारं सततं विदितात्मनाम् ।
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ॥ १३

पुरन्दरसमं वीर्ये प्रभञ्जनसमं बले ।
कार्तवीर्यसमं युद्धे कर्णं राज्ञोऽगमन्मनः ॥ १४

सर्वेषां चैव योधानां कर्णमेवागमन्मनः ।
सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव ॥ १५

धृतराष्ट्रः—

यद्वो मनोऽगमत् सूत कर्णं वैकर्तनं तदा ।
अप्यद्राक्षुस्सूतपुत्रं शीतार्ता इव भास्करम् ॥ १६

कृतेऽपहारे सैन्यानां प्रवृत्ते च रणे पुनः ।
दुर्योधनं च दृष्ट्वाऽऽजौ पाण्डवेन भृशार्दितम् ॥ १७

पराक्रान्तान् पाण्डुसुतान् दृष्ट्वा चापि महारणे ।
कथं वैकर्तनः कर्णस् तत्रायुध्यत संयुगे ॥ १८

कथं च पाण्डवास्सर्वे युयुधुस्तत्र सूतजम् ॥ १८॥

कर्णमाश्रित्य हि सदा मन्दबुद्धिस्सुयोधनः ।
जेतुमुत्सहते पार्थान् सहपुत्रान् सकेशवान् ॥ १९॥

यस्सौबलं तथा तात नीतिमानिति मन्यते ।
कर्णं चाप्रतिमं युद्धे देवैरपि दुरुत्सहम् ॥ २०॥

मन्यतेऽभ्यधिकं पार्थादेवं चास्य हृदि स्थितम् ।
विजेष्यति रणे कर्ण एकः पार्थान् ससोमकान् ॥ २१॥
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं युधि ॥ २२
तथाऽस्त्राणि च घोराणि विक्रमश्च महात्मनः ।
मम चैव सदा मन्दश् शंसते नित्यमग्रतः ॥ २३
कर्णश्च तान् महेष्वासान् पाण्डुपुत्रान् महारथान् ।
नातरद्भसात् सूत दैवं नूनं परायणम् ॥ २४
अहो बत महद्दुःखं प्राप्तो दैववशादहम् ।
अहो द्यूतस्य निष्ठेयं घोरा सम्प्रति वर्तते ॥ २५
यदहं वर्तमानेषु महायुद्धेषु सञ्जय ।
अश्रौषं निहतान् पुत्रान् नित्यमेव च निर्जितान् ॥ २६
अहो दुःखानि तीव्राणि दुर्योधनकृतान्यहम् ।
कथं शक्ष्यामि संसोढुं शल्यभूतानि सञ्जय ॥ २७
न पाण्डवानां समरे कश्चिदस्ति हतः किल ।
स्त्रीमध्यमिव गाहन्ते दैवं तु बलवत्तरम् ॥ २८

सञ्जयः—

अतिक्रान्तं हि यत् कार्यं पश्चाच्चिन्तयते नरः ।
तच्चास्य न भवेत् कार्यं चिन्तया च विनश्यति ॥ २९
तदिदं तव कार्यं तु दूरप्राप्तं विजानतः ।

कृतं हि यत् त्वया पूर्वं अप्राप्तं प्राप्तवान् रणे ॥ ३०

उक्तोऽसि बहुशो राजन् मा युद्धमिति सर्वशः ।
न च तत्त्वग्रहीर्द्वेषात् पाण्डवेषु विशां पते ॥ ३१

त्वया पापानि कर्माणि समाचीर्णानि पाण्डुषु ।
त्वत्कृते वर्तते घोरः कौरवाणां जनक्षयः ॥ ३२

तदिदानीमतिक्रान्तं मा शुचो भरतर्षभ ।
शृणु सर्वं यथावृत्तं घोरं वैशसमुच्यते ॥ ३३

प्रभातायां तु शर्वर्यां कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर् दुर्योधनमथाब्रवीत् ॥ ३४

कर्णः—

बहुत्वान्मम कार्याणां तथा पार्थस्य पार्थिव ।
नाभूत् समागमो राजन् मम चैवार्जुनस्य च ॥ ३५

अद्य राजन् समेष्यामि पाण्डवेन यशस्विना ।
निहनिष्यामि तं वीरं स मां वा निहनिष्यति ॥ ३६

अनिहत्य रणे पार्थं नाहमेष्यामि पार्थिव ॥ ३६॥

इदं तु मे महाप्राज्ञ शृणु वाक्यं नराधिप ॥ ३७

हतप्रवीरे सैन्येऽस्मिन् मयि चावस्थिते युधि ।
अभियास्यति मां पार्थश् शक्रशक्तिर्गता हि सा ॥ ३८

तत्र श्रेयस्करं यत्तु तन्निबोध जनेश्वर ॥ ३८॥

आयुधानां च मे वीर्यं दिव्यानामर्जुनस्य च ।
कार्यस्य महतो भेदे लाघवे दूरपातने ॥ ३९॥

सौष्ठवे चास्त्रयोगे च सव्यसाची न मत्समः ॥ ४०

[1]प्राणे च स्थैर्ये वीर्ये च विक्रमे चापि भारत ।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ ४१

सर्वायुधमहामात्रं विजयं नाम मद्धनुः ।
इन्द्रार्थमभिकामेन निर्मितं विश्वकर्मणा ॥ ४२

येन दैत्यान् पुरा राजञ् जितवान् वै शतक्रतुः ।
यस्य घोषेण दैत्याश्च मुह्यन्ति च दिशो दश ॥ ४३

तद्भार्गवाय प्रायच्छच् छक्रः परमसम्मतः ।
तद्दिव्यं भार्गवो मह्यम् अददाद्धनुरुत्तमम् ॥ ४४

तेन योत्स्ये महाबाहुम् अर्जुनं जयतां वरम् ॥ ४४॥

यथेन्द्रस्समरे सर्वान् दैतेयान् वै समागतान् ।
निजघान तथा सर्वाञ् जेष्यामि युधि पाण्डवान् ॥ ४५॥

धनुर्घोरं रामदत्तं गाण्डीवात् तद्विशिष्यते ॥ ४६

त्रिस्सप्तकृत्वः पृथिवी धनुषा तेन निर्जिता ।
धनुषो ह्यस्य कर्माणि दिव्यानि प्राह भार्गवः ॥ ४७

तद्रामो ह्यददान्मह्यं तेन योत्स्ये धनञ्जयम् ॥ ४७॥

---

1. अ—अर्धाष्टकं नास्ति

अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम् ।
निहत्य समरे वीरम् अर्जुनं जयतां वरम् ॥ ४८॥

सपर्वतवनद्वीपा हतद्विड् भूस्ससागरा ।
पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ४९॥

नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थे विशेषतः ।
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ५०॥

न हि मे विक्रमं सोढुं स शक्तोऽग्निं द्रुमो यथा ।
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फल्गुनात् ॥ ५१॥

ज्या तस्य धनुषो दिव्या तथाऽक्षय्ये महेषुधी ।
[1]सारथिस्तस्य गोविन्दो मम तादृङ्न विद्यते ॥ ५२॥

तच्च दिव्यं धनुश्श्रेष्ठं गाण्डीवमजरं युधि ।
विजयं च महद्दिव्यं ममापि धनुरुत्तमम् ॥ ५३॥

तत्राहमधिकः पार्थाद् धनुषैकेन पार्थिव ।
यैस्समभ्यधिको वीरः पाण्डवस्तान् निबोध मे ॥ ५४॥

रश्मिग्राहोऽस्य दाशार्हो मम तादृङ् न विद्यते ।
अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः ॥ ५५॥

अच्छेद्यास्सर्वधा वीर वाजिनश्च मनोजवाः ।
ध्वजश्च दिव्यो द्युतिमान् वानरोऽपि भयङ्करः ॥ ५६॥

1. क-ख—इदमर्धं नास्ति

कृष्णश्च जगतस्स्रष्टा रथं तमभिरक्षति ।
एभिस्त्रिभिरहं हीनो योद्धुमिच्छामि पाण्डवम् ॥ ५७॥

अयं तु सदृशश्शौरेश् शल्यस्समितिशोभनः ।
सारथ्यं यदि मे कुर्याद् ध्रुवस्ते विजयो भवेत् ॥ ५८॥

तस्य मे सारथिश्शल्यो भवत्वसुकरः परैः ।
नाराचान् गृध्रपत्रांश्च शकटानि वहन्तु मे ॥ ५९॥

रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः ।
आयान्तु पश्चात् सङ्ग्रामे मम वै भरतर्षभ ॥ ६०॥

एवमभ्यधिकः पार्थाद् भविष्यामि गुणैरहम् ।
शल्यो ह्यभ्यधिकः कृष्णात् पार्थादर्जुनतो ह्यहम् ॥ ६१॥

तथाऽस्त्रे मत्समो नास्ति कश्चिदन्यो धनुर्धरः ।
बाहुवीर्यान्मया ह्यद्य न तु तुल्यः कथञ्चन ॥ ६२॥

तथा शल्यसमो राजन् रथयाने न विद्यते ॥ ६३

यथाऽश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्यो विजानाति हयज्ञानं महारथः ॥ ६४

वीर्यतस्सारत श्चैवयोगतः कर्मतोऽर्थतः ।
अहमभ्यधिकः पार्थाद् भविष्यामि न संशयः ॥ ६५

विजयेयमहं सङ्ख्ये फल्गुनं कुरुनन्दन ॥ ६५॥

एतत् कृतं महाराज त्वयेच्छामि परन्तप ।

क्रियतामेष कामो मे मा वः कालोऽत्यगादयम् ॥ ६६॥

एवं कृते कृतं मह्यं त्वया सर्वं भविष्यति ।
ततो द्रष्टासि समरे यत् करिष्यामि भारत ॥ ६७॥

सर्वथा पाण्डवान् सङ्ख्ये जेष्याम्यद्य समागतान् ॥ ६८

एवं युक्तं न मां शक्ता अपि जेतुं सुरासुराः ।
किमु पाण्डुसुता राजन् रणे मानुषयोनयः ॥ ६९

सञ्जयः—

एवमुक्तस्तव सुतः कर्णेनाहवशोभिना ।
सम्पूज्यैनं प्रहृष्टात्मा ततो राधेयमब्रवीत् ॥ ७०

दुर्योधनः—

एवमेतत् करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासङ्गा रथास्साश्वा अनुयास्यन्ति तेऽनघ ॥ ७१

नाराचान् गृध्रपत्रांश्च वक्ष्यन्ति शकटानि ते ।
वयं च त्वाऽनुयास्यामः कर्ण सर्वे च पार्थिवाः ॥ ७२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ७३ ॥ कर्णपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये ७२ श्लोकाः ]

---

## ॥ त्रयोविंशोऽध्यायः ॥

दुर्योधनप्रार्थनया शल्येन कृच्छ्रात् कर्णरथसारथ्यकरणाभ्युपगमः ॥

सञ्जयः—

एवमुक्तो महाराज तव पुत्रः प्रतापवान् ।
मद्रेश्वरं प्रति रणे सुरसैन्यभयङ्करम् ॥ १

सर्वं तथाऽकरोत् तूर्णं राधेयस्तद्यदब्रवीत् ॥ १॥

मद्रराजं च समरे प्रणम्य च महारथम् ।
विनयेनोपसङ्क्रम्य प्रणयाद्वाक्यमब्रवीत् ॥ २॥

दुर्योधनः—

सत्यव्रत महाभाग द्विषतां भयवर्धन ।
मत्प्रियार्थं हितार्थं च तथा पार्थवधाय च ॥ ३॥

श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
तथा नृपतिसिंहानां मध्ये त्वां वरयाम्यहम् ॥ ४॥

स त्वामप्रतिवीर्याद्य शत्रुपक्षभयावह ।
मद्रेश्वर प्रयाचेऽहं शिरसा विनयानतः ॥ ५॥

त्वं पाहि सर्वतः कर्णं भवं ब्रह्मेव सुव्रत ॥ ६

सारथ्यं रथिनां श्रेष्ठ सुमनाः कर्तुमर्हसि ।
त्वयि यन्तरि राधेयो विजेष्यति ममाहितान् ॥ ७

अभीशूनां हि कर्णस्य प्रहीताऽन्यो न विद्यते ।
ऋते त्वत्तो महाभाग वासुदेवसमाद्भुवि ॥ ८

यथा हि सर्वास्वापत्सु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवानिमं पातु कर्णं वैकर्तनं रणे ॥ ९

भीष्मद्रोणौ कृपः कर्णो भवान् भोजश्च वीर्यवान् ।
शकुनिस्सौबलो द्रौणिर् अहमेव च नो बलम् ॥ १०

एवमेष कृतो भागो नवधा पृथिवीपते ।
नैव भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ॥ ११

ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ।
वृद्धौ च तौ नरव्याघ्रौ छलेन विनिपातितौ ॥ १२

कृत्वा चासुकरं कर्म स्वर्गलोकमितो गतौ ।
ततोऽन्ये पुरुषव्याघ्राः परेषां निहता युधि ॥ १३

अस्मदीयाश्च बहवस् स्वर्गाय गमिताः परैः ।
त्यक्त्वा प्राणान् यथाशक्ति चेष्टां कृत्वा च पुष्कलाम् ॥ १४

तदिदं हतभूयिष्ठं बलं मम जनाधिप ।
पूर्वमप्यल्पकैः पार्थैर् हतं किन्त्वद्य विद्रुतम् ॥ १५

बलवन्तो महात्मानः कौन्तेयास्सत्यविक्रमाः ।
बलशेषं न हन्युर्मे यथा तत् कुरु पार्थिव ॥ १६

कर्णो ह्येको महाबाहुर् अस्मत्प्रियहिते रतः ।

भवांश्च पुरुषव्याघ्रस् सर्वलोकमहारथः ॥ १७

तस्मिंस्त्वयि च मद्रेश जयाशा विपुला मम ।
तस्माज्जयाय मे वीर सारथ्यं कर्तुमर्हसि ॥ १८

पार्थस्य समरे कृष्णो यथाऽभीशुग्रहो वरः ।
तथा कर्णस्य राजंस्त्वम् अभीशुग्राहको भव ॥ १९

तेन युक्तो रणे पार्थो रक्ष्यमाणश्च मद्रप ।
यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव च ॥ २०

पूर्वं न समरे ह्येवम् अवधीदर्जुनो रिपून् ।
इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ॥ २१

कृष्णेन सहितः पार्थो धार्तराष्ट्रीं महाचमूम् ।
अहन्यहनि मद्रेश द्रावयन् युधि दृश्यते ॥ २२

भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाहवे ॥ २३

अरुणेन यथा सार्धं तमस्सूर्यो व्यपोहति ।
तथा कर्णेन सहितो जहि पार्थं महारणे ॥ २४

सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयास् सपाञ्चालास्ससृञ्जयाः ॥ २५

रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।
सन्निपातस्समो लोके भविता नास्ति नाप्यभूत् ॥ २६

यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान् परित्रातु कर्णं वैकर्तनं रणे ॥ २७

सारथ्यं क्रियतां तस्य युध्यमानस्य संयुगे ॥ २७॥

यथा च समरे कृष्णो रक्षते सर्वतोऽर्जुनम् ।
तथा त्वमपि राधेयं रक्षस्व च महारणे ॥ २८॥

त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवानामपि सङ्ग्रामे सशक्राणां महीपते ॥ २९॥

किं पुनः पाण्डवेयानां नातिशङ्कीर्वचो मम ॥ ३०

सञ्जयः—

दुर्योधनवचश्श्रुत्वा शल्यः क्रोधसमन्वितः ।
धार्तराष्ट्रमथोवाच सृक्किणी परिलेलिहन् ॥ ३१

एवमुक्तस्तु सङ्क्रुद्धः पदा स्पृष्ट इवोरगः ।
त्रिशिखां भ्रुकुटीं कृत्वा धून्वन् हस्तं पुनः पुनः ॥ ३२

क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः ।
कुलैश्वर्यश्रुतबलैर् दृप्तश्शल्योऽब्रवीदिदम् ॥ ३३

शल्यः—

न मामर्हसि राजेन्द्र नियोक्तुं कर्मणीदृशे ।
न हि पापीयसश्श्रेयान् प्रेष्यत्वं कर्तुमर्हति ॥ ३४

यो ह्यभ्युपगतं मित्रं गरीयांसं विशेषतः ।

वशो पापीयसो धत्ते तत् कार्यमधरोत्तरम् ॥ ३५

ब्रह्मणा ब्राह्मणास्सृष्टा मुखात् क्षत्रमथोरसः ।
ऊरुभ्यामथ वैश्या वै शूद्राः पद्भ्यामिति श्रुतिः ॥ ३६

तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ॥ ३६॥
अन्योन्यस्य च संयोगाच् चातुर्वर्ण्यस्य भारत ।

गोप्तारस्सङ्गृहीतारो दातारः क्षत्रियास्स्मृताः ॥ ३७॥
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।

लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ॥ ३८॥
कृषिश्च पाशुपाल्यं च विशां दानं च धर्मतः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ३९॥

[1]ब्रह्मक्षत्रस्य विहितास् सूता वै परिचारकाः ।
न विट् छूद्रस्य संयोगं शृणु चान्यं ममानघ ॥ ४०॥
सोऽहं मूर्धाभिषिक्तस्सन् राजर्षिकुलजो नृपः ।
महारथसमाख्यातस् सेव्यस्स्तुत्यश्च वन्दिनाम् ॥ ४१॥

सोऽहमेतादृशो भूत्वा नेहारिबलमर्दनः ।
सूतपुत्रस्य सङ्ग्रामे सारथ्यं कर्तुमुत्सहे ॥ ४२॥
अवमन्यसे मां गान्धारे ध्रुवं चाप्यतिशङ्कसे ।

---

1. अ-ब—नास्तीदमर्धम्

[1]यस्माद्ब्रवीषि विस्रब्धस् सारथ्यं क्रियतामिति ॥ ४३॥

अस्मत्तोऽभ्यधिकं कर्णं मन्वानस्तं प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मनः ॥ ४४॥

आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे हत्वा गमिष्यामि यथागतम् ॥ ४५॥

अथवाऽप्येक एवाहं योत्स्यामि तव शत्रुभिः ।
पश्य वीर्यं ममाद्य त्वं सङ्ग्रामे दहतो रिपून् ॥ ४६॥

न चापि कामान् कौरव्य निधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्कथाः ॥ ४७॥

अपि चाप्यवमानो मे न कर्तव्यः कथञ्चन ॥ ४८

पश्य भीमौ मम भुजौ वज्रसंहननौ दृढौ ।
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ॥ ४९

रथं च पश्य मे चित्रं सदश्वैर्वातवेगिभिः ।
गदां च पश्य गान्धारे हेमपट्टपरिष्कृताम् ॥ ५०

दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान् ।
शोषयेयं समुद्रांश्च पातयेयं च भास्करम् ॥ ५१

तं मामेवंविधं जानन् समर्थमरिनिग्रहे ।
कस्माद्युनङ्क्षि सारथ्ये सूतस्याधिरथेस्तु माम् ॥ ५२

1. अ-ङ—इतश्चतुर्दशार्धानि न सन्ति

न चापि मम राधेयः कलामर्हति षोडशीम् ॥ ५२॥

सकर्णा ये त्रयो लोकास् सार्जुनास्सजनार्दनाः ।
निबद्धांस्तान् रणे राजन् न गणेयं कथञ्चन ॥ ५३॥

तथाऽपि शक्तिं कौरव्य विहाय हृदये पुमान् ।
न चाहं प्राकृतः कश्चिन्न चास्म्यधिगतस्स्वयम् ॥ ५४॥

अयं चाप्यवमानो मे न कर्तव्यः कथञ्चन ॥ ५५

आपृच्छे त्वाऽद्य गान्धारे यास्यामि विषयं प्रति ।
न चाहं सूतपुत्रस्य सारथ्यमुपजग्मिवान् ॥ ५६

सञ्जयः—

एवमुक्त्वा महाराज शल्यस्समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ५७

प्रणयाद्बहुमानाच्च सन्निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ५८

दुर्योधनः—

यथा शल्य त्वमात्थेदम् एवमेतन्न संशयः ।
अभिप्रायस्तु मे कश्चित् तन्निबोध जनेश्वर ॥ ५९

न कर्णोऽभ्यधिकस्त्वत्तो न चान्ये चैव पार्थिवाः ।
न च मद्रेश्वर त्वां हि [1]कर्णस्सोढुं च शक्ष्यति ॥ ६०

ऋतमेव हि पूर्णं ते वर्त्म राजर्षिसत्तम ।

---

1. ब—कृष्णौ सोढुं च शक्ष्यतः

तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ६१

शल्यभूतस्तु शत्रूणां यस्मात् त्वं भुवि मानद ।
तस्माच्छल्येति ते नाम कथ्यते पृथिवीपते ॥ ६२

यदेतद्व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ॥ ६३

न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।
वृणीमस्त्वां हयाग्र्याणां यन्तारमिह संयुगे ॥ ६४

मन्ये ह्यभ्यधिकं कर्णं गुणैस्तात धनञ्जयात् ।
वासुदेवादति त्वां च लोकोऽयमिति मन्यते ॥ ६५

कर्णो ह्यभ्यधिकः पार्थात् सर्वास्त्रेषु नरर्षभ ।
भवानभ्यधिकः कृष्णाद् अश्वयाने बले तथा ॥ ६६

यथाऽश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं च तथा वेत्थ मद्रराजो न संशयः ॥ ६७

शल्यः—

यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य मारिष ।
विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यतस्त्वयि ॥ ६८

एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यत्त्वं मां वीर मन्यसे ॥ ६९

समयस्त्वयि कौरव्य कश्चिद्वैकर्तनं प्रति ।

उत्सृजेयं यथाश्रद्धम् अहं वाचोऽस्य सन्निधौ ॥ ७०

सञ्जयः—

तथेति राजन् पुत्रस्ते सह कर्णेन भारत ।
[1]अब्रवीन्मद्रराजस्य मतं भरतसत्तम ॥ ७१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[ अस्मिन्नध्याये ७१ श्लोकाः ]

## ॥ चतुर्विंशोऽध्यायः ॥

दुर्योधनेन शल्यं प्रति त्रिपुरासुरकथाकथनारम्भः ॥ १ ॥ त्रिपुरासुरोपद्रुतैर्देवैः स्तुत्या रुद्रप्रसादनम् ॥ २ ॥

दुर्योधनः—

भूय एव तु मद्रेश यत् त्वां वक्ष्यामि तच्छृणु ।
यथा पुरावृत्तमिदं युद्धे दैवासुरे प्रभो ॥ १

यदुक्तवान् पितुर्मह्यं मार्कण्डेयो महातपाः ।
ब्रुवतस्तदशेषेण मम राजर्षिसत्तम ॥ २
निबोध मनसा चात्र न ते कार्या विचारणा ॥ २॥

समुत्पन्ना हि राजानः प्रमोह इति निश्चयः ।

1. ख—इदमर्धं नास्ति

कृत्वा चैव व्यवस्यन्ति सर्वे धर्मार्थनिश्चयान् ॥ ३॥

देवानामसुराणां च महानासीत् समुच्छ्रयः ।
सैंहिकेयास्तदोद्वृत्ता विबुधानवसूदयन् ॥ ४॥
ते निरस्ताः कृता देवैर् दानवा बलगर्विताः ॥ ५

तत्रासीत् प्रथमो राजन् सङ्ग्रामस्तारकामयः ।
निर्जिताश्च ततो दैत्या दैवतैरिति नश्श्रुतिः ॥ ६

भग्नदर्पा निरुत्साहाः पातालं विविशुस्तदा ॥ ६॥
निर्जितेष्वसुरेष्वेषु तारकस्य सुतास्त्रयः ।
विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् ॥ ७॥
तप उग्रं समास्थाय नियमे परमे स्थिताः ॥ ८

तपसा कर्शयामासुर् देहान् स्वाञ् शत्रुकर्शनाः ।
दमेन तपसा चैव नियमेन च पार्थिव ॥ ९

तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ ९॥
अवध्यत्वं च ते सर्वे सर्वभूतेषु सर्वदा ।
सहिता वरयामासुस् सर्वलोकपितामहम् ॥ १०॥

तानब्रवीत् तदा देवस् सर्वलोकगुरुः प्रभुः ॥ ११

ब्रह्मा—

नास्ति सर्वामरत्वं हि निवर्तध्वमितोऽसुराः ।
अन्यं वरं वृणीध्वं वै रोचते यादृशो हि वः ॥ १२

दुर्योधनः—

ततस्ते सहिता राजन् सम्प्रधार्यासकृद्बहु ।
सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाऽब्रुवन् ॥ १३

दैत्याः—

वस्तुमिच्छाम नगरं कर्तुं कामगमं शुभम् ।
सर्वकामसमृद्धार्थम् अवध्यं देवदानवैः ॥ १४

यक्षरक्षोरगगणैर् नानाजातिभिरेव च ।
न कृत्याभिर्न शस्त्रैश्च न शापैर्ब्रह्मवादिनाम् ॥ १५

वध्येत त्रिपुरं देव प्रसन्ने त्वयि सादरम् ॥ १५॥
[1]अस्माकं त्वं वरं देव प्रयच्छैतं पितामह ॥ १६

वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ।
विचरिष्याम लोकेश त्वत्प्रसादपुरस्कृताः ॥ १७
यथा वर्षसहस्रेषु समेष्यामः परस्परम् ॥ १७॥

ब्रह्मा—

विलयस्समयस्यान्ते मरणं जीवितस्य च ।
इति वित्त वधोपायं कश्चिदेव निशामये ॥ १८॥

दैत्याः—

एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ।
समागतानि चैतानि यो हन्याद्भगवन्नरः ॥ १९॥

---

1. ख—इदमर्धं नास्ति

देवो वा द्विपदां श्रेष्ठस् स नो मृत्युर्भविष्यति ॥ २०

दुर्योधनः—

तेषां तद्वचनं श्रुत्वा दानवानां महायशाः ।
एवमस्त्विति तान् देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥ २१

ते तु लब्धवराः प्रीतास् सम्प्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुराः ॥ २२
विश्वकर्माणमजरं दैत्यदानवपूजितम् ॥ २२॥

ततो मयस्स्वतपसा चक्रे धीरः पुराण्यथ ।
त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा ॥ २३॥

काञ्चनं दिवि तत्रासीद् अन्तरिक्षे च राजतम् ।
आयसं चाभवद्भूमौ तदा तेषां परन्तप ॥ २४॥

एकैकं योजनशतं विस्तृतं तावदायतम् ।
दृढं चाट्टालकयुतं बृहत्प्राकारतोरणम् ॥ २५॥

गृहप्रवरसम्बाधम् असम्बाधमहापथम् ।
प्रासादैर्विविधैश्चैव द्वारैरप्युपशोभितम् ॥ २६॥

त्रिपुरं तेषु चाप्यासन् राजानो वै पृथक् पृथक् ।
दिव्यमाल्याम्बरधरा दैतेया राजसत्तम ॥ २७॥

काञ्चनं तारकाक्षस्य दिव्यमासीन्महात्मनः ।
राजतं कमलाक्षस्य विद्युन्मालेस्तथाऽऽयसम् ॥ २८॥

त्रयस्ते दैत्यराजानस् त्रीँल्लोकानाशु तेजसा ।
आक्रम्य तस्थुर्दुर्धर्षाः कश्च नाम प्रजापतिः ॥ २९॥
तेषु दानवमुख्यानां प्रयुतान्यर्बुदानि च ।
कोट्यश्चापि प्रवीराणां समाजग्मुस्समन्ततः ॥ ३०॥
महदैश्वर्यमिच्छन्तस् त्रिपुरं दुर्गमाश्रिताः ॥ ३१
सर्वेषां च पुनस्तेषां सर्वभोगावहो मयः ।
तमाश्रित्य हि ते सर्वे वर्तयन्त्यकुतोभयाः ॥ ३२
यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रितैः ।
तस्मै तस्मै मयस्तं तं विदधे मायया तदा ॥ ३३
तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः ।
तपस्तेपे तु परमं तेनातुष्यत् पितामहः ॥ ३४
स तुष्टमवृणोद्देवं वापी भवतु नः पुरे ।
शस्त्रैर्विनिहता यत्र क्षिप्तास्स्युर्बलवत्तमाः ॥ ३५
स तु लब्ध्वा वरं वीरस् तारकाक्षसुतो हरिः ।
ससृजे तत्र वापीं तां मृतसञ्जीविनीं प्रभुः ॥ ३६
पूर्णा दिव्यस्य तोयस्य पीयूषप्रतिमस्य वै ॥ ३६॥
येन रूपेण यो दैत्यो येन वेषेण चाप्यथ ।
क्षिप्यते निहतो वाप्यां तादृशेनैव जायते ॥ ३७॥
सम्पूर्णबलवीर्यस्तु राजञ् शौर्यसमन्वितः॥ ३८

एवंवीर्येण संयुक्तां कृतां तेन महात्मना ।
तां प्राप्य त्रैपुरां वापीं लोकान् सर्वान् बबाधिरे ॥ ३९

महता तपसा सिद्धास् सुराणां भयवर्धनाः ।
एकस्मिन् निहते दैत्ये सृजन्ति स्म दशासुरान् ॥ ४०

न तेषां विद्यते युद्धे क्षयो राजन् कथञ्चन ॥ ४०॥

ततस्ते लोभमोहाभ्याम् अभिभूता विचेतसः ।
निर्भीकास्सहितास्सर्वे स्थापितास्समलोलुपाः ॥ ४१॥

विद्राव्य सगणान् देवांस् तत्र तत्र तदा तदा ।
विचेरुस्स्वेन कामेन वरदानेन दर्पिताः ॥ ४२॥

देवारण्यानि रम्याणि स्थानानि च दिवौकसाम् ।
ऋषीणामाश्रमान् पुण्यान् धर्म्याञ्जनपदांस्तथा ॥ ४३॥
उत्सादयन्त्यमर्यादा दानवा दुष्टचारिणः ॥ ४४

निस्स्थानाश्च कृता देवा ऋषयः पितृभिस्सह ।
दैत्यैस्त्रिभिस्त्रयो लोका ह्याक्रान्तास्तैस्सुरेतरैः ॥ ४५

पीड्यमानेषु लोकेषु ततश्शक्रो मरुद्वृतः ।
पुराण्यायोधयाञ्चक्रे वज्रहस्तस्समन्ततः ॥ ४६

नाशक्नोत् तान्यभेद्यानि यदा भेत्तुं पुरन्दरः ।
पुराणि वरदत्तानि धात्रा तेन नराधिप ॥ ४७

तदा भीतस्सुरपतिर् मुक्त्वा तानि पुराण्यथ ।

तैरेव विबुधैसार्धं ब्रह्माणं परमेश्वरम् ॥ ४८
जगामाथ तदाख्यातुं विप्रकारं सुरेतरैः ॥ ४८॥

ते सर्वमभिविख्याप्य शिरसाऽभिप्रणम्य च ।
तद्वधोपायमाचक्ष्व भगवन्निति चाब्रुवन् ॥ ४९॥

श्रुत्वा तु भगवान् देवो देवानिदमुवाच ह ॥ ५०

ब्रह्मा—

श्रूयतां त्रिदशास्सर्वे यथेदं वाक्यगौरवम् ॥ ५०॥

दुरात्मानोऽसुरा नित्यं ते चापि विबुधा मम ।
न शक्नुवन्ति ये सर्वे युष्मान् वै पीडयन्ति ते ॥ ५१॥

अहं समस्तु भूतानां सर्वेषां नात्र संशयः ।
अविनीता निहन्तव्या इत्येवं प्रब्रवीमि वः ॥ ५२॥

एकेषुणा विभेद्यानि तानि दुर्गाणि नान्यथा ।
शक्तस्तु तानि बाणेन भेत्तुं कामं त्रिलोचनः ॥ ५३॥

ते यूयं तपसा स्थाणुं जिष्णुमक्लिष्टकारिणम् ।
योद्धारं वृणुत क्षिप्रं स तान् हन्ता सुरेतरान् ॥ ५४॥

दुर्योधनः—

ते देवास्तेन वाक्येन चोदिताः प्रणतास्स्थिताः ।
दिव्यं वर्षसहस्रं वै तपस्तप्त्वा सुरर्षभाः ॥ ५५॥

शुद्धात्मानो महात्मानो जग्मुर्वै वृषभध्वजम् ॥ ५६

ब्रह्माणमग्रतः कृत्वा शरण्यं शरणागताः ।
तपः परममाजग्मुर् गृणन्तो ब्रह्म शाश्वतम् ॥ ५७
[1]अनङ्गमथनं सर्वे भवं सर्वात्मना गताः ।
देवदेवं परं स्थाणुं वरदं त्र्यम्बकं शिवम् ॥ ५८
शर्वमीड्यमजं रुद्रं शशाङ्काङ्कितमूर्धजम् ।
तुष्टुवुर्वाग्भिरग्र्याभिर् भयेष्वभयमच्युतम् ॥ ५९
सर्वात्मानं महात्मानं येनाप्तं विश्वमात्मना ॥ ५९॥
तपोविशेषैर्विविधैर् योगं यो वेद चात्मनः ।
यस्साङ्ख्यमात्मना वेत्ति यस्य चात्मा वशे सदा ॥ ६०॥
तं ते ददृशुरीशानं तेजोराशिमुमापतिम् ।
परेण यत्नेन भवं त्रिदशाश्शर्वमीश्वरम् ॥ ६१॥
अनन्यसदृशं देवं प्रतपन्तमकल्मषम् ॥ ६२
एकश्च भगवांस्तत्र नानारूपमकल्पयत् ।
आत्मनः प्रतिरूपाणि रूपाण्यथ महामतिः ॥ ६३
परस्परस्य चापश्यन् सर्वे परमविस्मिताः ॥ ६३॥
सर्वभूतमयं दृष्ट्वा तमजं जगतः पतिम् ।
देवा ब्रह्मर्षयस्सर्वे शिरोभिरवनिं गताः ॥ ६४॥
तान् स्वस्ति वाच्य चाभ्यर्च्य समुत्थाप्य च शङ्करः ।

1. क-ङ—कन्दर्पवैरिणं

ब्रूत ब्रूतेति भगवान् स्मयमानोऽभ्यभाषत ॥ ६५॥

त्र्यम्बकेणाभ्यनुज्ञातास् ततस्ते त्रस्तचेतसः ।
नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन् भवम् ॥ ६६॥

देवाः—

नमो देवादिदेवाय प्रियधाम्नेऽतिमन्यवे ।
प्रजापतिमखघ्नाय प्रजापतिभिरीडित ॥ ६७॥

नमस्स्तुताय स्तुत्याय स्तूयमानाय शम्भवे ।
विलोहिताय धूम्राय नीलग्रीवाय शूलिने ॥ ६८॥

[1]अमोघाय प्रदक्षाय शमाय क्रोधनाय च ।
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ॥ ६९॥

ईशानायाप्रमेयाय निहन्त्रे चर्मवाससे ।
तपोनित्याय पिङ्गाय व्रतिने कृत्तिवाससे ॥ ७०॥

कुमारपित्रे त्र्यक्षाय प्रवरायुधयोधिने ।
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने ॥ ७१॥

वनस्पतीनां पतये वनानां पतये नमः ।
गवां च पतये नित्यं यज्ञानां पतये नमः ॥ ७२॥

---

1. क—शङ्करायामृगक्षाय क्षमाय
 घ—अमोहाय मृगाक्षाय क्षमायाक्रोधनाय च ।
 ख—अमोघाय मृगाक्षाय क्षायते मथनाय च ।

नमो नमस्ते सौम्याय त्र्यम्बकायोग्रतेजसे ।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान् भजस्व नः ॥　　७३॥

दुर्योधनः—

ततः प्रसन्नो भगवान् स्वागतेनाभिनन्द्य तान् ।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥　　७४॥

देवाश्शर्वस्य वचनं श्रुत्वा हर्षमुपागताः ॥　　७५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[अस्मिन्नध्याये ७५ श्लोकाः ]

## ॥ पञ्चविंशोऽध्यायः ॥

देवै रुद्रवचनात्तस्य स्वस्वार्धबलदानपूर्वकं त्रिपुरसंहारायाभिषेचनम् ॥

दुर्योधनः—

पितृदेवर्षिसङ्घेभ्यो वरे दत्ते महात्मना ।
सत्कृत्य शङ्करं प्राह ब्रह्मा लोकपितामहः ॥　　१

ब्रह्मा—

इमान्यसुरदुर्गाणि लोकांस्त्रीनाक्रमन्ति च ।
[1]कश्च प्रजापतिर्घोरांस् तान् सर्वाञ्जहि मा चिरम् ॥　　२

1. ख—अर्धचतुष्टयं नास्ति

वरातिसर्गाद्देवेश प्राजापत्यमिदं पदम् ।
मयाऽधितिष्ठता दत्तो दानवेभ्यो महान् वरः ॥ ३

नास्त्यन्यो युधि तेषां वै निहन्ता इति नश्श्रुतम् ।
तानतिक्रान्तमर्यादान् नान्यस्संहर्तुमर्हति ॥ ४

त्वामृते सर्वभूतेश त्वं ह्येषां प्रत्यरिर्विधे ॥ ४॥

स त्वं देव प्रपन्नानां याचतां च दिवौकसाम् ।
कुरु प्रसादं वरद दानवाञ्जहि संयुगे ॥ ५॥

त्वत्प्रसादाज्जगत् सर्वं सुखमेधेत मानद ।
शरण्यस्त्वं हि देवानां वयं त्वां शरणं गताः ॥ ६॥

रुद्रः—

हन्तव्याश्शत्रवस्सर्वे युष्माकमिति मे मतिः ।
न त्वेकश्चोत्सहे हन्तुं बलिनस्सुरविद्विषः ॥ ७॥

ते यूयं सहितास्सर्वे मदीयेनार्धतेजसा ।
जयध्वं युधि तान् सर्वान् सङ्घातेन महाबलान् ॥ ८॥

देवाः—

अस्मत्तेजोबलं यावत् तावद्द्विगुणमेव वा ।
तत् तेषामिति मन्यामो दृष्टतेजोबला हि ते ॥ ९॥

ईश्वरः—

वध्यास्ते सर्वथा पापा ये युष्मास्वपराधिनः ।

मम तेजोबलार्धेन सर्वान् मृद्गीत शात्रवान् ॥　१०॥

देवाः—

बिभर्तुं तव तेजोर्धं न शक्ष्यामस्सुरेश्वर ।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ॥　११॥

वयं च सर्वथा देव रक्षणीयास्तथैव च ।
स नो रक्ष महादेव त्वमेव जहि शात्रवान् ॥　१२॥

रुद्रः—

मम तेजो न शक्ता हि सर्वे धारयितुं यदि ।
अहमेनान् वधिष्यामि युष्मत्तेजोर्धसंयुतः ॥　१३॥

बलार्धं यदि मे देवा न धारयितुमाहवे ।
शक्तास्सर्वे हि सङ्गम्य यूयं तत् प्रब्रवीमि वः ॥　१४॥

समा भवन्ति मे सर्वे दानवाश्चामराश्च ये ।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥　१५॥

किंत्वधर्मेण वर्तन्ते यस्मात् ते सुरशत्रवः ।
[1]तस्माद्वध्या मयाऽप्येते युष्माकं च हितेप्सया ॥　१६॥

शरणं वः प्रपन्नानां धर्मेण च जिगीषताम् ।
साहाय्यं वः करिष्यामि निहनिष्यामि वो रिपून् ॥　१७॥

दीयतां च बलार्धं मे सर्वैरपि पृथक् पृथक् ॥　१८

1. अ—अष्टार्धानि न सन्ति

पशुत्वं चैव मे लोकास् सर्वे कल्पन्तु पीडिताः ।
पशूनां तु पतित्वं मे भवत्वद्य दिवौकसः ॥ १९

एवं न पापं प्राप्स्यामि पशून् हत्वाऽसुरद्विषः ।
कल्पयध्वं च मे दिव्यं रथं चाश्वान् मनोजवान् ॥ २०

धनुश्शरं सारथिं च ततो जेष्यामि वो रिपून् ॥ २०॥

दुर्योधनः—

इति श्रुत्वा वचो देवा देवदेवस्य भूपते ।
विषादमगमन् सर्वे पशुत्वं प्रति शङ्किताः ॥ २१॥

तेषां भावं भवो ज्ञात्वा देवांस्तानिदमब्रवीत् ॥ २२

रुद्रः—

मा वोऽस्तु पशुभावेऽस्मिन् भयं विबुधसत्तमाः ।

श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ॥ २३

यो वः पशुपतेश्चर्यां चरिष्यति स मोक्ष्यते ।
पशुत्वादिति सत्यं वः प्रतिजाने समागमे ॥ २४

ये चाप्यन्ये चरिष्यन्ति व्रतं मोक्ष्यन्ति तेऽप्युत ॥ २४॥
नैष्ठिकं द्वादशाब्दं वा योऽब्दमर्धमृतुत्रयम् ।

मासं द्वादशरात्रं वा स पशुत्वाद्विमुच्यते ॥ २५॥
तस्मात् परमिदं गुह्यं व्रतं दिव्यं चरिष्यथ ॥ २६

दुर्योधनः—

तं तथेत्यब्रुवन् देवा देवदेवनमस्कृतम् ।
ऊचुश्चेदं गृहाणेदं तेजसोऽर्धमिति प्रभुम् ॥ २७

प्रत्युवाच तथेत्येवं शूलधृग्राजसत्तम ।
ततस्ते प्रददुस्सर्वे तेजसोऽर्धं महात्मने ॥ २८

सर्वमादाय सर्वेषां तेजसोऽर्धं दिवौकसाम् ।
तेजसाऽभ्यधिको भूत्वा भूयोऽप्यतिबलोऽभवत् ॥ २९

ततःप्रभृति देवानां देवदेवोऽभवद्भवः ।
पतिश्च सर्वभूतानां पशूनां चाभवत् तदा ॥ ३०

तस्मात् पशुपतिश्चोक्तो भवत्वाच्च भवेति वै ॥ ३०॥

[1]अर्धमादाय सर्वेषां तेजसा प्रज्वलन्निव ।
[2]भासयामास तान् सर्वान् देवदेवो महाद्युतिः ॥ ३१॥

ततोऽभिषिषिचुस्सर्वे सुरा रुद्रं पुरारिणम् ।
महादेव इति ह्यासीद् देवदेवो महेश्वरः ॥ ३२॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां**
**कर्णपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥**
**॥ ७३ ॥ कर्णपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥**
**[ अस्मिन्नध्याये ३२॥ श्लोकाः ]**

---

1. क—अर्धत्रयं नास्ति
2. ख—दाहयामास

## ॥ षड्विंशोऽध्यायः ॥

देवानामाज्ञया विश्वकर्मणा भूम्यादिसाधनै रुद्राय रथनिर्माणम् ॥

दुर्योधनः—

तेजसोऽर्धं सुरा दत्त्वा शङ्कराय महात्मने ।
पशुत्वमपि चोपेत्य विश्वकर्माणमव्ययम् ॥ १

ऊचुस्सर्वे समाभाष्य रथस्सङ्कल्प्यतामिति ॥ १॥
विश्वकर्मोऽपि सञ्चिन्त्य रथं दिव्यमकल्पयत् ॥ २

सन्मेतां पृथिवीं देवीं विशालां पुरमालिनीम् ।
सपर्वतवनद्वीपां चक्रे भूतधरां रथम् ॥ ३

ईषां नक्षत्रवंशं च छत्रं मेरुमहागिरिम् ।
अनेकद्रुमसञ्छन्नं रत्नाकरमनुत्तमम् ॥ ४

हिमवन्तं च विन्ध्यं च नानाद्रुमलताकुलम् ।
अवस्करं प्रतिष्ठानं कल्पयामास वै तदा ॥ ५

अस्तं गिरिमधिष्ठानं नानाद्विजगणायुतम् ।
चकार भगवांस्त्वष्टा उदग्रं रथकूबरम् ॥ ६

मीननक्रझषावासं दानवालयमुत्तमम् ।
समुद्रमक्षं विदधे पत्तनाकरशोभितम् ॥ ७

चक्रं चक्रे चन्द्रमसं तारकागणमण्डितम् ।

दिवाकरं चाप्यपरं चक्रं चक्रेऽशुमालिनम् ॥ ८

गङ्गां सरस्वतीं तूणीं चक्रे विश्वकृदव्ययः ।
अलङ्कारा रथस्यासन्नापगास्सरितस्तथा ॥ ९

त्रीनग्नीन् मन्त्रवच्चक्रे रथस्याथ त्रिवेणुकम् ।
अनुकर्षान् ग्रहान् दीप्तान् वरूथांश्चापि तारकाः ॥ १०

ओषधीर्वीरुधश्चैव घण्टाजालं च भानुमत् ।
अलञ्चकार च रथं मासपक्षर्तुभिर्विभुः ॥ ११

अहोरात्रैः कलाभिश्च काष्ठाभिरयनैस्तथा ।
द्यां युगं युगपर्वाणि संवर्तकवलाहकान् ॥ १२

शम्यां धृतिं च मेधां च स्थितिं सन्नतिमेव च ।
ऋग्वेदं सामवेदं च धुर्यावश्वावकल्पयत् ॥ १३

पृष्ठाश्वौ च यजुर्वेदः कल्पितोऽथर्वणस्तथा ॥ १३॥
अश्वानां चाप्यलङ्कारं विदधे पदसञ्चयम् ॥ १४

सिनीवालीमनुमतिं कुहूं राकां च सुप्रभाम् ।
योक्त्राणि चक्रे चाश्वानां कूश्माण्डांश्चापि पन्नगान् ॥ १५

कालपृष्ठोऽथ नहुषः कार्कोटकधनञ्जयौ ।
इतरे चाभवन्नागा हयानां वालबन्धनम् ॥ १६

अभीशवष्षडङ्गानि कल्पितानि महीपते ।
ओङ्कारः कल्पितस्तस्य प्रतोदो विश्वकर्मणा ॥ १७

यज्ञास्सर्वे पृथक् क्लृप्ता रथाङ्गानि च भागशः ।
अधिष्ठानं मनश्चासीत् परिरथ्या सरस्वती ॥ १८

नानावर्णानि शस्त्राणि पताकाः पवनेरिताः ।
विद्युदिन्द्रधनुर्युक्तं रथदीप्त्या व्यदीपयत् ॥ १९

वर्म योद्धुं च विहितं नभो ग्रहगणाकुलम् ।
अभेद्यं भानुमच्चित्रं कालचक्रपरिष्कृतम् ॥ २०

क्लृप्तं तु तं रथं दृष्ट्वा विस्मिता देवता भवन् ।
सर्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष ॥ २१

युक्तं निवेदयामासुर् देवास्तस्मै महात्मने ॥ २१॥
एवं तस्मिन् महाराज कल्पिते रथसत्तमे ।
त्वष्ट्रा मनुजशार्दूल द्विषतां भयवर्धने ॥ २२॥

स्वान्यायुधानि दिव्यानि न्यदधाच्छङ्करो रथे ।
ध्वजयष्टिं वियत् कृत्वा स्थापयामास गोवृषम् ॥ २३॥

ब्रह्मदण्डः कालदण्डो रुद्रदण्डश्च ते ज्वराः ।
परिष्कारा रथस्यासन् समन्ताद्दिशमुद्धताः ॥ २४॥

विचित्रमृतुभिष्षड्भिः कृत्वा संवत्सरं धनुः ।
छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां ध्रुवाम् ॥ २५॥

कालो हि भगवान् रुद्रस् तच्च संवत्सरं धनुः ।
तस्माद्रौद्रा कालरात्रिर् ज्या कृता धनुषोऽजरा ॥ २६॥

ततो रथे रथाश्वांस्तान् ऋषयस्समयोजयन् ।
एकैकशस्सुसंहृष्टान् आदाय सुधृतव्रताः ॥ २७॥

दक्षिणस्यां धुरि कृत ऋग्वेदो मन्त्रपारगैः ।
सव्यतस्सामवेदश्च युक्तो राजन् महर्षिभिः ॥ २८॥

पार्ष्णिदक्षिणतो युक्तो यजुर्वेदस्सुरद्विजैः ।
इतरस्यां तथा पार्ष्ण्यां युक्तो राजन्नथर्वणः ॥ २९॥

एवं ते वाजिनो युक्ता यज्ञविद्भिस्तथा रथे ।
अशोभन्त तथा युक्ता यथैवाध्वरमध्यगाः ॥ ३०॥

कल्पयित्वा रथं दिव्यं ततो बाणमकल्पयत् ।
चिन्तयित्वा हरिं विष्णुम् अव्ययं यज्ञवाहनम् ॥ ३१॥

शरं सङ्कल्पयाञ्चक्रे विश्वकर्मा महामनाः ॥ ३२

तस्या वाजांश्च पुङ्खं च [1]कल्पयामास वै तदा ।
पुण्यगन्धवहं राजन् श्वसनं राजसत्तम ॥ ३३

अग्नीषोमौ शरमुखे कल्पयामास वै तदा ।
अग्नीषोमात्मकं कृत्स्नम् उच्यते वैष्णवं जगत् ॥ ३४

विष्णुरात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे शरस्य वै ॥ ३५

तस्मिञ् शरे तीक्ष्णमन्युम् अमुञ्चद्धरस्सहं प्रभुम् ॥ ३५॥

1. ख—अधमुपरितनः पादश्च न स्तः

भृग्वङ्गिरोमन्युभवः क्रोधाग्निरतिदुस्सहः ।
स नीललोहितो धूम्रः कृत्तिवासा भयानकः ॥ ३६॥

आदित्यायुतसङ्काशस् तेजोज्वालावृतो भवः ।
[1]दुश्च्यर्याच्यावको जेता हन्ता ब्रह्मद्विषां हरः ॥ ३७॥

प्रमथानां गणैश्चैव भीमरूपैर्महाजवैः ।
विभाति भगवान् स्थाणुर् अतीतात्मा गणैर्वृतः ॥ ३८॥

तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत् ।
जङ्गमाजङ्गमं राजञ् छुशुभेऽद्भुतदर्शनम् ॥ ३९॥

दृष्ट्वा तु तं रथं दिव्यं कवची स शरासनी ।
आददे स शरं दिव्यं सोमविष्णवग्निवायुजम् ॥ ४०॥

तमादाय महादेवस् त्रासयन् दैत्यदानवान् ।
आरुरोह तदा यत्तः कम्पयन्निव रोदसी ॥ ४१॥

महर्षिभिस्स्तूयमानो वन्द्यमानश्च वन्दिभिः ।
उपनृत्तश्चाप्सरसां गणैर्नृत्तविशारदैः ॥ ४२॥

स शोभमानो वरदः खड्गी बाणी शरासनी ।
हसन्निवाब्रवीद्देवान् सारथिः को भवेदिति ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ७३ ॥ कर्णपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

1. ख—नास्तीदमर्धम्

## ॥ सप्तविंशोऽध्यायः ॥

देवानां प्रार्थनया ब्रह्मणा रुद्ररथसारथ्यकरणम् ॥ १ ॥ रुद्रेण त्रिपुरदहनम् ॥ २ ॥ दुर्योधनेन दृष्टान्तप्रदर्शनपूर्वकं शल्यं प्रति कर्णरथसारथ्यकरणप्रार्थना ॥ ३ ॥

दुर्योधनः—

तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते ।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ १

तानब्रवीन्महादेवो मत्तश्श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं वै स्वयं सञ्चिन्त्य मा चिरम् ॥ २

एतच्छ्रुत्वा वचो देवास् सर्वे गत्वा पितामहम् ।
प्रणिपत्योचुरेकाग्राः प्रसाद्यैनं महर्षिभिः ॥ ३

देवाः—

त्वया यत् कथितं देव त्रिदशारिनिबर्हणे ।
तथा तत् कृतमस्माभिः प्रसन्नश्च वृषध्वजः ॥ ४

रथश्च विहितोऽस्माभिर् विचित्रायुधसंवृतः ।
सारथिं च न जानीमः कस्स्यात् तस्मिन् रथोत्तमे ॥ ५

तस्माद्विधीयतां कश्चित् सारथिर्देवसत्तमः ।
सफलां तां गिरं देव कर्तुमर्हसि नो विभो ॥ ६

एवमस्मासु हि पुरा भगवन्नुक्तवानसि ।
एवं कर्तास्मि भवताम् इति तत् कर्तुमर्हसि ॥ ७

स देवयुक्तो रथसत्तमो वै
दुराधर्षो द्रावणश्शात्रवाणाम् ।
पिनाकधन्वा विहितोऽत्र योद्धा
विभीषयन् दानवानुद्यतोऽसौ ॥ ८

तथैव वेदाश्च रथे हयाग्र्या
धरा सशैला च रथो महात्मनः ।
नक्षत्रवंशानुगतो वरूथी
यस्मिन् योद्धा सारथिनाऽभिरक्ष्यः ॥ ९

तत्र सारथिरेष्टव्यस् सर्वैरेतैर्विशेषवान् ॥ ९॥

तं प्रविष्टा रथं देवा रथयोद्धारमेव च ।
कवचानि च शस्त्राणि कार्मुकं च पितामह ॥ १०॥

त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ।
त्वं हि सर्वैर्गुणैर्युक्तो देवताभ्योऽधिकः प्रभो ॥ ११॥

त्वं देव शक्तो लोकेऽस्मिन् नियन्तुं प्रद्रुतानिमान् ।
वेदाश्वान सोपनिषदस् सारथिर्भव नस्स्वयम् ॥ १२॥

योद्धुं बलेन सत्त्वेन वीर्येण विनयेन च ।

अधिकस्सारथिः कार्यो नास्ति चान्योऽधिको भवात् ॥ १३॥

स भवांस्तारयत्वस्मान् कुरु सारथ्यमव्ययम् ।
भवानभ्यधिकस्त्वत्तो नान्योऽस्तीह पितामह ॥ १४॥

त्वं हि देवेश सर्वैस्तु विशिष्टो वदतां वर ।
तं रथं त्वं समारुह्य संयच्छ परमान् हयान् ॥ १५॥

तव प्रसादाद्वध्येरन् देव दैवतकण्टकः ।
स नो रक्ष महाबाहो दैत्येभ्यो महतो भयात् ॥ १६॥

त्वं हि नो गतिरव्यग्र त्वं नो गोप्ता महाव्रत ।
त्वत्प्रसादात् सुरास्सर्वे पूज्यन्ते त्रिदिवे प्रभो ॥ १७॥

दुर्योधनः—

इति ते शिरसा नत्वा त्रिलोकेशं पितामहम् ।
देवाः प्रसादयामासुस् सारथ्यायेति नश्श्रुतम् ॥ १८॥

ब्रह्मा—

एवमेतत् सुरास्तथ्यं नान्यस्त्वभ्यधिको भवात् ।
सारथित्वं करिष्यामि शङ्करस्य महात्मनः ॥ १९॥

सर्वथा रथिनश्श्रेयान् कर्तव्यो रथसारथिः ॥ २०

तस्मादेतद्यथातत्त्वं ज्ञात्वा युष्मांश्च सङ्गतान् ।
संयच्छामि हयानेष विबुधाय कपर्दिने ॥ २१

दुर्योधनः—

एवमुक्त्वा जटाभारं संयम्य प्रपितामहः ।

परिधायाजिनं गाढं सन्यस्य च कमण्डलुम् ॥ २२
प्रतोदपाणिर्भगवान् आरुरोह रथं तदा ॥ २२॥

सारथ्ये कल्पिते देवैर् ईशानस्य महात्मनः ।
तस्मिन्नारोहति रथं कल्पितं लोकसम्भृतम् ॥ २३॥
शिरोभिः पतिता भूमौ तुरगा वेद[1]सम्भृताः ॥ २४

उभाभ्यां लोकनाथाभ्याम् आस्थितं रथसत्तमम् ।
वोढुं न शक्ता वेदाश्वा जानुभ्याम[2]गमन्महीम् ॥ २५

अभीशुभिस्तु भगवान् उद्यम्य च हयान् विभुः ।
अस्तु शौर्यं च वीर्यं च वेदाश्वानामिति प्रभुः ॥ २६
रथं सञ्चोदयामास देवानां प्रभुरव्ययः ॥ २६॥

ततोऽधिरूढे वरदे रथं पशुपतिस्तदा ।
साधु साध्विति देवेशं स्मयमानोऽभ्यभाषत ॥ २७॥

रुद्रः—

याहि देव यतो दैत्याश् चोदयाश्वानरिन्दम ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतश्शात्रवान् रणे ॥ २८॥

दुर्योधनः—

ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ॥ २९॥

ततस्ते सहसोत्पत्य वेदाख्या रथवाजिनः ।

---

1. क-घ-ङ—सम्भवाः 2. क-ङ—पतन्महीम्

क्षणेन तानि दैत्यानां पुराणि प्रापयन्[1] हरम् ॥　　३०॥

अथर्वाङ्गिरसौ चास्तां चक्ररक्षौ महात्मनः ॥　　३१

अथाधिज्यं धनुः कृत्वा शर्वस्सन्धाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥　　३२

तस्मिन् स्थिते ततो राजन् रुद्रे विततकार्मुके ।
पुराणि तेन कालेन जग्मुरेकत्वमाशु वै ॥　　३३

एकीभावं गते चैव त्रिपुरत्वमुपागते ।
बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥　　३४

ततो देवगणास्सर्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुस् संस्तुवन्तो महेश्वरम् ॥　　३५

ततोऽग्रतः प्रादुरभूत् त्रिपुरं जघ्नुषोऽसुरान् ।
अनिर्देश्याग्र्यवपुषो देवस्यासह्यतेजसः ॥　　३६

त्रीणि दृष्ट्वैकसंस्थानि पुराण्यथ पिनाकधृत् ।
स तद्विकृष्य भगवान् दिव्यं लोकेश्वरो धनुः ॥　　३७

त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥　　३७॥

एकबाणेन तं देवस् त्रिपुरं परमेश्वरः ।
निजघ्ने सासुरगणं देवदेवो महेश्वरः ॥　　३८॥

बाणतेजोभिदग्धं तत् प्रविशीर्णं सहस्रधा ।

---

1. ख-घ-ङ—प्रभुम्

महद्दार्तरवं कृत्वा नावशेषमुपागतम् ॥ ३९॥
मद्रेश सासुरगणं प्रापतत् पश्चिमार्णवे ॥ ४०

एवं हि त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ ४१

स चात्मक्रोधजो वह्निर् दहेत्युक्तो निवारितः ।
त्रैलोक्यमविशेषेण पुनर्दग्धुं प्रचक्रमे ॥ ४२

कालाग्निमिव निर्दग्धुम् उत्थितं तं पुनः पुनः ।
मा कार्षीर्भस्मसाल्लोकान् इति त्र्यक्षोऽब्रवीद्वचः ॥ ४३

ततः प्रकृतिमापन्ना देवलोकास्तथर्षयः ।
तुष्टुवुर्वाग्भिरग्र्याभिस् स्थाणुं त्रिपुरवैरिणम् ॥ ४४

तेऽनुज्ञाता भगवता सर्वे जग्मुर्यथागतम् ।
कृतकामाः प्रसन्नेन प्रजापतिमुखास्सुराः ॥ ४५

एवं रुद्रस्य कृतवान् सारथ्यं तु पितामहः ।
संयच्छ तुरगानस्य राधेयस्य महात्मनः ॥ ४६

त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च गुणाधिकः ।
बलतो रूपतो योगाद् अस्त्रसम्पद एव च ॥ ४७

समासक्तं महीपाल कुरु मे हितमीप्सितम् । ४८
युद्धे ह्ययं रुद्रकल्पस् त्वं च ब्रह्मसमो नये ॥
तस्माच्छक्तौ युवां जेतुं शत्रूंस्ताविव चासुरान् ॥ ४८॥

स यथा शल्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम् ।
प्रमथ्य हन्यात् कौन्तेयं तथा नीतिर्विधीयताम् ॥ ४९॥

त्वयि राज्यं सुखं चैव जीवितं जय एव च ।
समासक्तं महीपाल कुरु मे हितमीप्सितम् ॥ ५०॥

संयच्छास्य हयान् राजन् मत्प्रियार्थं परन्तप ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये ५१ श्लोकाः ]

---

## ॥ अष्टाविंशोऽध्यायः ॥

---

दुर्योधनेन कर्णसारथ्ये शङ्कमानं शल्यं प्रति परशुरामचरितकीर्तनपूर्वकं कर्णस्य तदन्तेवासित्वादिगुणवत्तया तत्सारथ्यकरणे दोषाभावप्रतिपादनम् ॥

---

दुर्योधनः—

इमं चाप्यपरं भूय इतिहासं निबोध मे ।
पितुर्मम सकाशे वै ब्राह्मणः प्राह धर्मवित् ॥ १

श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थतत्त्ववित् ।
कुरु शल्यं विनिश्चित्य मा भूदत्र विचारणा ॥ २

भार्गवाणां कुले जातो जमदग्निर्महातपाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः ॥ ३

स तीव्रं तप आस्थाय सम्प्रसादितवान् भवम् ।
अस्त्रहेतोः प्रसन्नात्मा नियतस्संयतेन्द्रियः ॥ ४

तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शङ्करः ॥ ५
प्रत्यक्षेण महादेवस् स्वां तनुं सर्वशङ्करः ॥ ५॥

शङ्करः—
राम तुष्टोऽस्मि भद्रं ते विदितं मे तवेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ ६॥

दास्यामि ते तदाऽस्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ ७॥

दुर्योधनः—
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।
प्रत्युवाच महात्मानं शिरसाऽवनतः प्रभुम् ॥ ८॥

रामः—
यदा जानासि देवेश पात्रं मामस्त्रधारणे ।
तदा शुश्रूषतेऽस्त्राणि भवान् मे दातुमर्हति ॥ ९॥

दुर्योधनः—
ततस्स तपसा चैव व्रतेन नियमेन च ।
पूजोपहारबलिभिर् होममन्त्रपुरस्कृतैः ॥ १०॥
समाराधितवाञ् शर्वं बहुवर्षगणांस्तदा ॥ ११
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ।

असकृच्चाब्रवीत् तस्य गुणान् देव्यास्सकाशतः ॥ १२

शङ्करः—

भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ १२॥

दुर्योधनः—

एवमस्य गुणान् देवो बहुशोऽकथयत् प्रभुः ।
देवतानां पितॄणां च समक्षमरिसूदन ॥ १३॥

एतस्मिन्नेव काले तु दैत्या ह्यासन् महाबलाः ।
तैस्तदा दर्पमोहाद्वै अबाध्यन्त दिवौकसः ॥ १४॥

ततस्सम्भूय विबुधास् तान् हन्तुं कृतनिश्चयाः ।
चक्रुश्शत्रुवधे यत्नं न च जेतुमशक्नुवन् ॥ १५॥

अभिगम्य ततो देवा महेश्वरमुमापतिम् ।
प्रासादयंस्तदा भक्त्या जहि शत्रुगणानिति ॥ १६॥

प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् ।
रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः ॥ १७॥

शङ्करः—

रिपून् भार्गव देवानां जहि सर्वान् समागतान् ।
लोकानां हितकामार्थं मत्प्रियार्थं तथैव च ॥ १८॥

परशुरामः—

का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे ।
निहन्तुं दानवान् सर्वान् कृतास्त्रान् युद्धदुर्मदान् ॥ १९॥

ईश्वरः—

गच्छ त्वं मदनुध्यानान्निहनिष्यसि शात्रवान् ।

विजित्य च रिपून् सर्वान् गुणान् प्राप्स्यसि पुष्कलान् ॥२०॥

दुर्योधनः—

एतच्छ्रुत्वा तु वचनं प्रतिगृह्य च सर्वशः ।
रामः कृतस्वस्त्ययनः प्रययौ दानवान् प्रति ॥ २१॥

ततोऽवधीद्देवशत्रून् मदद्दर्पबलान्वितान् ।
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ २२॥

स दानवैः क्षततनुर् जामदग्न्यो नृपोत्तमः ।
संस्पृष्टस्स्थाणुना सद्यो निर्व्रणस्समपद्यत ॥ २३॥

प्रीतश्च भगवान् देवः कर्मणा तेन तस्य वै ।
वरान् प्रादाद्बहुविधान् भार्गवाय महात्मने ॥ २४॥

उक्तश्च प्रीतियुक्तेन देवदेवेन शूलिना ॥ २५

रुद्रः—

निपातात् तव शस्त्राणां शरीरे याऽभवद्रुजा ।
तया ते मानुषं कर्म व्यपोहं भृगुनन्दन ॥ २६

गृहाणास्त्राणि [1]सर्वाणि मत्सकाशाद्यथेप्सितम् ॥ २६॥

दुर्योधनः—

[2]ततोऽस्त्राणि समग्राणि वरांश्च मनसेप्सितान् ।
लब्ध्वा बहुविधान् रामः प्रणम्य शिरसा शिवम् ॥ २७॥
अनुज्ञां प्राप्य देवेशाज् जगाम स महातपाः ॥ २८

---

1. क-ख—दिव्यानि 2. क—नास्त्ययं श्लोकः

एवमेतत् पुरावृत्तं तथा कथितवानृषिः ॥ २८॥

भार्गवोऽपि ददौ सर्वं धनुर्वेदं महात्मने ।
कर्णाय पुरुषव्याघ्रस् सुप्रीतेनान्तरात्मना ॥ २९॥

वृजिनं न भवेत् किञ्चित् तस्य कर्णस्य भूपते ।
सूतेन वर्धितो नित्यं न सूतो नृप एव सः ॥ ३०॥

विशुद्धयोनिं विज्ञाय दिव्यान्यस्त्राण्यदाद्भृगुः ॥ ३१

नापि सूतकुले जातं मन्ये कर्णं कथञ्चन ।
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ ३२

विसृष्टमविबोधार्थं कुलस्येति मतिर्मम ।
सर्वथा न ह्यसौ कर्णश् शल्य सूतकुलोद्भवः ॥ ३३

सकुण्डलं सकवचं दिव्यबाहुमरिन्दमम् ।
कथमादित्यसङ्काशं मृगी सिंहं प्रसूयते ॥ ३४

पश्य ह्यस्य भुजावेतौ नागराजकरोपमौ ।
वक्षः पश्य विशालं च सर्वशस्त्रसहं रणे ॥ ३५

न त्वेवं प्राकृतः कश्चित् कर्णो वैकर्तनो वृषा ।
महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान् ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

## ॥ एकोनत्रिंशोऽध्यायः ॥

**दुर्योधनप्रार्थितेन शल्येन समयकरणपूर्वकं कर्णरथसारथ्यस्वीकणम् ॥**

**दुर्योधनः—**

एवं स भगवान् देवो ब्रह्मा लोकपितामहः ।
सारथ्यमकरोत् तत्र यत्र रुद्रोऽभवद्रथे ॥ १

रथिनोऽभ्यधिको वीरः कर्तव्यो रथसारथिः ।
तस्मात् त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि ॥ २

**सञ्जयः—**

ततश्शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नं प्रीतो मद्राधिपस्तथा ॥ ३

**शल्यः—**

एवं चेन्मन्यसे राजन् गान्धरे प्रियदर्शनम् ।
तस्मात् ते यत् प्रियं किञ्चित् तत् सर्वं करवाण्यहम् ॥ ४

यस्मिंस्तु भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यधुरं तव ॥ ५

यद्यत् कर्णमहं ब्रूयां हितकामः प्रियाप्रियम् ।
मम तत् क्षमतां सर्वं भवान् कर्णश्च सर्वशः ॥ ६

**कर्णः—**

ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।

तथा नित्यं हिते युक्तो मद्रराज भवस्व मे ॥ ७

शल्यः—

आत्मनिन्दा च पूजा च परनिन्दाऽऽत्मनस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुष्टयम् ॥ ८

यत्तु विद्वन् प्रवक्ष्यामि प्रत्ययार्थमिदं तव ।
आत्मनस्तवसंयुक्तं तन्निबोध यथातथम् ॥ ९

अहं शक्रस्य सारथ्ये योग्यो मातलिवत् प्रभो ।
अप्रमादात् प्रयोगाच्च ज्ञानविद्याचिकित्सितैः ॥ १०

तस्मात् पार्थेन सङ्ग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान् विज्वरो भव सूतज ॥ ११

दुर्योधनः—

अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता वासवस्येव मातलिः ॥ १२

यथा हरिहयैर्युक्तं रथं गृह्णाति मातलिः ।
शल्यस्तथा तवाद्याऽयं संयन्ता रथवाजिनाम् ॥ १३

योधे त्वयि रथस्थे च मद्रराजे महारथे ।
रथश्रेष्ठं ध्रुवं सङ्ख्ये पार्थो नाभिभविष्यति ॥ १४

सञ्जयः—

ततो दुर्योधनो भूयो [1]मद्रराजं तरस्विनम् ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

उवाच राजन् सङ्ग्रामे प्रश्रितो मधुरं वचः ॥ १५

दुर्योधनः—

कर्णस्य यच्छ सङ्ग्रामे मद्रराज हयोत्तमान् ।
त्वयाऽभिगुप्तो राधेयो विजेष्यति धनञ्जयम् ॥ १६

सञ्जयः—

इत्युक्तो रथमास्थाय तथेति प्राह भारत ।
शल्येऽभ्युपगते कर्णस् सारथ्याय ततोऽब्रवीत् ॥ १७
स्वसूतं स्यन्दनं मह्यं कल्पयेत्यसकृत् त्वरन् ॥ १७॥
ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत् कल्पितं[1] भद्रं जयेत्युक्त्वा न्यवेदयत् ॥ १८॥
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
सम्पादितं ब्रह्मविदा पूर्वमेव पुरोधसा ॥ १९॥
कृत्वा प्रदक्षिणं यत्नाद् उपस्थाय च भास्करम् ।
समीपस्थं मद्रराजं समारोहेत्यथाब्रवीत् ॥ २०॥
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ।
आरुरोह महातेजाश् शल्यस्सिंह इवाचलम् ॥ २१॥
ततश्शल्यास्थितं राजन् कर्णस्स्वरथमुत्तमम् ।
अध्यतिष्ठद्यथाऽम्भोदं विद्युत्वन्तं दिवाकरः ॥ २२॥

---

1. च-ङ—भद्रे

तावेकरथमारूढावादित्याग्निसमद्युती ।
व्यभ्राजेतां तदा संख्ये सूर्याग्नी सहितौ दिवि ॥ २३॥

संस्तूयमानौ तौ वीरौ तदाऽऽस्तां द्युतिमत्तरौ ।
ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानौ यथाऽध्वरे ॥ २४॥

स शल्यसङ्गृहीताश्वे रथे कर्णस्थितो बभौ ।
धनुर्विष्फारयन् घोरं परिवेषीव भास्करः ॥ २५॥

आस्थितस्सरथश्रेष्ठं कर्णश्शरगभस्तिमान् ।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ २६॥

तं प्रयान्तं महाबाहुं युद्धायामिततेजसम् ।
दुर्योधनोऽथ राधेयम् इदं वचनमब्रवीत् ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

## ॥ त्रिंशोऽध्यायः ॥

कर्णस्य रणप्रयाणकाले दुर्निमित्तप्रादुर्भावः ॥ १ ॥ कर्णेनात्मश्लाघनपूर्वकं पार्थवधे प्रतिज्ञाते तदहसमानेन शल्येनार्जुनप्रशंसनपूर्वकं कर्णोपालम्भः ॥ २ ॥

दुर्योधनः—

अकृतं द्रोणभीष्माभ्याम् आहवे कर्म दुष्करम् ।
कुरुष्वातिरथे वीर मिषतां सर्वधन्विनाम् ॥ १

मनोगतं मम ह्यासीद् भीष्मद्रोणौ महारथौ ।
अर्जुनं भीमसेनं च [1]निहन्ताराविति ध्रुवम् ॥ २

ताभ्यां यन्न कृतं वीर कर्म कर्ण महाहवे ।
तत् कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ ३

गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम् ।
भीमसेनं च कौन्तेयं माद्रीपुत्रौ यमावपि ॥ ४

जयश्च तेऽस्तु भद्रं ते प्रयाहि त्वं नरर्षभ ।
पाण्डवेयानि सर्वाणि कुरु सैन्यानि भस्मसात् ॥ ५

सञ्जयः—

ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यशोभन्त मेघशब्दो यथा दिवि ॥ ६

---

1. क—न हन्ताराविति

प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।
अभ्यभाषत राधेयश् शल्यं युद्धविशारदः ॥ ७

कर्णः—

चोदयाश्वान् महेष्वास यावद्धन्मि धनञ्जयम् ।
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ॥ ८

अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ ९

अद्य क्षेप्स्याम्यहं शल्य शरान् परमतेजनान् ।
पाण्डवानां विनाशाय दुर्योधनजयाय च ॥ १०

सञ्जयः—

एतच्छ्रुत्वा वचस्तस्य शल्यः कर्णं वचोऽब्रवीत् ॥ १०॥

शल्यः—

कथं नु तान् महावीर्यान् पाण्डवानवमन्यसे ॥ ११

सर्वास्त्रज्ञान् महेष्वासान् सर्वानेव महारथान् ।
अनिवर्तिनो महाभागान् अजेयान् सत्यविक्रमान् ॥ १२
अपि सञ्जनयेयुस्ते भयं साक्षाच्छतक्रतोः ॥ १२॥

यदा श्रोतासि निर्घोषं विस्फूर्जितमिवाशनेः ।
राधेय पार्थधनुषस् तदा नैवं वदिष्यसि ॥ १३॥

यदा द्रष्टासि भीमेन कुञ्जरानीकमाहवे ।

विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि ॥ १४॥

[1]यदा ज्येष्ठं पाण्डवेयं माद्रीपुत्रौ च पाण्डवौ ।
शितैः पृषत्कैः कुर्वाणान् अभ्रच्छायामिवायसैः ॥ १५॥

द्रष्टासि लघुचित्रास्त्रैर् निघ्नतोऽरीन् सहस्रशः ।
पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ १६॥

सञ्जयः—

अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
द्रक्ष्यस्यद्येत्यवोचत् तं शल्यं कर्णो जनेश्वर ॥ १७॥

दृष्ट्वा कर्णं महावीर्यं युयुत्सुं समुपस्थितम् ।
चुक्रुशुः कुरवस्सर्वे हृष्टरूपाः परन्तपाः ॥ १८॥

ततो दुन्दुभिघोषेण शङ्खानां निस्वनेन च ।
बाणशब्दैश्च विविधैर् गर्जितैश्च तरस्विनाम् ॥ १९॥

निर्ययुस्तावकास्सर्वे मृत्युं कृत्वा निवर्तनम् ॥ २०

प्रयाते च ततः कर्णे रथेषु मुदितेषु च ।
चचाल च मही सर्वा ररास च सुविस्वरम् ॥ २१

निस्सरन्तो व्यदृश्यन्त सूर्यात् सप्त महाग्रहाः ।
उल्कापाताश्च सञ्जज्ञुर् दिग्दाहाश्च सुदारुणाः ॥ २२

तथाऽशन्यश्च सम्पेतुर् ववुर्वाताश्च भैरवम् ॥ २२॥

---

1. ङ—अर्धपद्यत्रयं नास्ति क—अर्धद्वयमेव नास्ति

मृगपक्षिगणाश्चैव पृतनां बहुशस्तव ।
अपसव्यं ततश्चक्रुर् वेदयन्तो महद्भयम् ॥ २३॥
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि ।
अस्थिवर्षं च पतितम् अन्तरिक्षाद्भयानकम् ॥ २४॥
जज्वलुश्चापि शस्त्राणि ध्वजाश्चास्य चकम्पिरे ।
अश्रूणि च व्यमुञ्चन्त वाहनानि विशां पते ॥ २५॥
एते चान्ये च बहव उत्पातास्तत्र मारिष ।
समुत्पेतुर्विनाशाय कौरवाणां सुदारुणाः ॥ २६॥
न च तान् गणयामासुस् सर्वे ते दैवमोहिताः ।
प्रस्थितं सूतपुत्रं च जयेत्यूचुर्नरा भुवि ॥ २७॥
शल्येन सहितं दृष्ट्वा कर्णमाहवशोभिनम् ।
निर्जितान् पाण्डवांश्चैव मेनिरे तत्र कौरवाः ॥ २८॥

ततो रथस्थः परवीरहन्ता
भीष्मद्रोणावात्तवीर्यौ समीक्ष्य ।
समुज्ज्वलन् भास्करपावकाभो
वैकर्तनोऽसौ रथकुञ्जरो वृषा ॥ २९॥

स शल्यमाभाष्य जगाद वाक्यं
पार्थस्य दृष्ट्वाऽप्रतिमं च कर्म ।
मानेन दर्पेण च दह्यमानः
क्रोधेन दीप्यन्निव निश्श्वसित्वा ॥ ३०॥

कर्णः—

नाहं महेन्द्रादपि वज्रपाणेः
क्रुद्धाद्बिभेम्यात्तधनू रथस्थः ।
दृष्ट्वाऽपि भीष्मप्रमुखान् शयानान्
न त्वेव मां सा स्थिरता जहाति ॥ ३१॥

महेन्द्रविष्णुप्रतिमावनिन्दितौ
रथाश्वनागारिवरप्रमाथिनौ ।
अवध्यकल्पौ निहतौ यदा परैस्
ततोऽपि मे नास्ति रणेऽद्य साध्वसम् ॥ ३२॥

समीक्ष्य सङ्ख्येऽतिबलान् नराधिपैर्
नराश्वमातङ्गरथान् परैर्हतान् ।
कथं नु सर्वानहितान् रणेऽवधी-
न्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः ॥ ३३॥

स संस्मरन् द्रोणमहं महाहवे
ब्रवीमि सत्यं कुरवो निबोधत ।
न वो मदन्यः प्रसहेद्रणेऽर्जुनं
समागतं मृत्युमिवोग्ररूपिणम् ॥ ३४॥

शिक्षा प्रदानं च बलं धृतिश्च
द्रोणे महास्त्राणि च सन्नतिश्च ।

स चेदगान्मृत्युवशं महात्मा
सर्वानन्यानातुरानद्य मन्ये ॥ ३५॥

नेह ध्रुवं किञ्चिदपि प्रचिन्तयन्
वदामि लोके कर्मणो नित्ययोगात् ।
सूर्योदये को हि विमुक्तसंशयो
भावं कुर्वीताद्य गुरौ निपातिते ॥ ३६॥

न नूनमस्त्राणि बलं पराक्रमः
क्रियास्सुनीताः परमायुधानि च ।
अलं मनुष्यस्य सुखाय वर्तितुं
तथाहि युद्धे निहतः परैर्गुरुः ॥ ३७॥

हुताशनादित्यसमानतेजसं
पराक्रमे विष्णुपुरन्दरोपमम् ।
नये बृहस्पत्युशनस्समं सदा
न चैनमस्त्रं निजघान दुस्सहम् ॥ ३८॥

असम्प्रहृष्टे रुदितस्त्रीकुमारे
पराजिते पौरुषे धार्तराष्ट्रे ।
कृत्यं मया नाद्य जानामि शल्य
प्रयाहि तस्माद्द्विषतामनीकम् ॥ ३९॥

यत्रैव राजा पाण्डवस्सत्यसन्धो
व्यवस्थितौ भीमसेनार्जुनौ च ।
स वासुदेवस्सात्यकिस्सृञ्जयाश्च
यमौ च कस्तान् विषहेन्मदन्यः ॥ ४०॥

तस्मात् क्षिप्रं मद्रपते प्रयाहि
रणे पाञ्चालान् पाण्डवान् सृञ्जयांश्च ।
तान् वा हनिष्यामि समेत्य सङ्ख्ये
यास्यामि वा द्रोणमुखो यमाय ॥ ४१॥

न त्वेवाहं न गमिष्यामि मध्यं
तेषां शूराणामिति शल्याद्य विद्धि ।
मित्रद्रोहे मर्षणीयो न चाहं
त्यक्त्वा प्राणाननुयास्यामि द्रोणम् ॥ ४२॥

प्राज्ञस्य मूढस्य च जीवितान्ते
नास्ति प्रमोक्षोऽन्तकसन्निभस्य ।
अतो विद्वन्नभियोत्स्यामि पार्थं
दिष्टं न शक्यं व्यतिवर्तितुं हि ॥ ४३॥

कल्याणवृत्तस्सततं हि राजा
वैचित्रवीर्यस्य सुतो ममासीत् ।
तस्यार्थसिद्ध्यर्थमहं त्यजामि
प्रियान् भोगान् दुस्त्यजं जीवितं च ॥ ४४॥

वैयाघ्रचर्माणमकूजिताक्षं
हैमं त्रिकोणं रजतत्रिवेणुम् ।
रथप्रबर्हं तुरगप्रवीरैर्
युक्तं प्रादान्मह्यमिमं हि रामः ॥ ४५॥

धनूंषि चित्राणि निरीक्ष्य शल्य
गदां घोरां सायकांश्चोग्ररूपान् ।
असींश्च दीप्तान् परमायुधांश्च
शङ्खं च शुभ्रं स्वनवन्तमुग्रम् ॥ ४६॥

अस्त्राणि दिव्यान्यददान्महात्मा
पताकिनं वज्रनिपातनिस्स्वनम् ।
सिताश्वयुक्तं शुभवेणुशोभितम्
रथप्रबर्हं पुरुषप्रबर्हः ॥ ४७॥

इमं समास्थाय रथर्षभं रणे
दृढं हनिष्याम्यहमर्जुनं बलात् ॥ ४८

तं चेन्मृत्युस्सर्वहरोऽभिरक्षेत्
सदाऽप्रमत्तस्समरे पाण्डुपुत्रम् ।
तं वा हनिष्यामि समेत्य सङ्ख्ये
यास्यामि वा द्रोणमुखो यमाय ॥ ४९

यमवरुणकुबेरवासवा
यदि युगपत् सगणा महाहवे ।
जुगुपुरिह समेत्य फल्गुनं
किमु बहुना सह तैर्जयामि तम् ॥ ५०

सञ्जयः—

इति रणरभसस्य कत्थतस्
तदुपनिशम्य वचस्स मद्रराट् ।
अपहसदवमत्य वीर्यवान्
प्रतिषिषिधे च जगाद चोत्तरम् ॥ ५१

शल्यः—

विरम विरम कर्ण कत्थनाद्
अतिरभसोऽप्यति चाप्ययुक्तवाक् ।
क्व च हि नरवरो धनञ्जयः
क्व पुनरिह त्वमहो नराधमः ॥ ५२

यदुसदनमुपेन्द्रपालितं
त्रिदिवमिवामरराजरक्षितम् ।
प्रसभमभिविलोड्य को हरेत्
पुरुषवरावरजामृतेऽर्जुनात् ॥ ५३

त्रिभुवनसृजमीश्वरेश्वरं
क इह पुमान् भवमाह्वयेद्युधि ।

मृगवधकलहेऽर्जुनादृते
　　सुरपतिवीर्यसमात् प्रभावतः ॥　　५४

असुरसुरनरोरगान् मृगान्
　　गरुडपिशाचसयक्षराक्षसान् ।
इषुभिरजयदग्निगौरवात्
　　स्वभिलषितं च हविर्ददौ जयः ॥　　५५

स्मरसि ननु यदा परैर्हृतस्
　　सहधृतराष्ट्रसुतो विमोक्षितः ।
अतिरथज नरोत्तमैर्युधा
　　मरुषु बहून् विनिहत्य तानरीन् ॥　　५६

प्रथममपि पलायिते त्वयि
　　प्रियकलहा धृतराष्ट्रसूनवः ।
स्मरसि ननु यदा प्रमोक्षिताः
　　खगमगणानतिपात्य पाण्डवैः ॥　　५७

प्रमुदितबलवाहनाः पुनः
　　कुरुवृषभेण जितास्तु गोग्रहे ।
सगुरुगुरुसुतास्सभीष्मकाः
　　किमु न जितस्स तदा त्वयाऽर्जुनः ॥　　५८

इदमपरमुपस्थितं पुनस्
तव निधनाय नियुद्धमद्य वै ।
यदि न रिपुभयात् पलायसे
समरगतोऽद्य हतोऽसि सूतज ॥ ५९

सञ्जयः—

इति बहुपरुषं प्रभाषति
प्रमनासि मद्रपतौ रिपुस्तवम् ।
भृशमतिरुषितः परन्तपः
कुरुपृतनापतिराह मद्रपम् ॥ ६०

कर्णः—

भवतु भवतु किं विकत्थसे
ननु मम तस्य नियुद्धमद्य वै ।
यदि जयति स मामिहाहवे
तत इदमस्तु विकत्थितं तव ॥ ६१

सञ्जयः—

एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान् ।
याहि शल्येति चाप्येनं कर्णः प्राह युयुत्सया ॥ ६२

स रथः प्रययौ शत्रून् निघ्नतश्शल्यसारथिः ।
निघ्नन्नमित्रान् समरे तमोघ्नस्सविता यथा ॥ ६३

ततः प्रायाद् द्युतिमान् वै रथेन
वैयाघ्रेण श्वेतयुजाऽथ कर्णः ।
आलोकयन् ध्वजिनीं पाण्डवानां
धनञ्जयं त्वरया पर्यपृच्छत् ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ७३ कर्णपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ६४ श्लोकाः ]

---

## ॥ एकत्रिंशोऽध्यायः ॥

कर्णेन स्वस्यार्जुनप्रदर्शकाय तदभिमतपारितोषिकप्रदानप्रतिज्ञानम् ॥

---

सञ्जयः—

प्रयत्नेन तदा कर्णो हर्षयंस्तव वाहिनीम् ।
एकैकं समरे दृष्ट्वा पाण्डवं पर्यपृच्छत ॥ १

कर्णः—

यो ममाद्य महात्मानं पाण्डवं दर्शयेद्युधि ।
तस्मै दद्यामभिप्रेतं वरं यं मनसेच्छति ॥ २

अथवा शकटं पूर्णं रत्नानां षड्गवायुतम् ।
धुरि क्षमैर्बृहद्भिश्च गोभिर्युक्तमकालिकम् ॥ ३

[1]न चेत् तदभिमन्येत तस्मै दद्यामहं पुनः ।
शकटं रत्नसम्पूर्णं यो मे ब्रूयाद्धनञ्जयम् ॥ ४

न चेत् तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
[2]ददाम्यस्मै गवामेकं शतं द्रोणदुहामहम् ॥ ५

अथवाऽस्मै पुनर्दद्यां श्वेतमश्वतरीरथम् ।
एकतश्श्यामकर्णीभिर् यो मे ब्रूयाद्धनञ्जयम् ॥ ६

अथवाऽस्मै पुनर्दद्यां वरमन्यं यथेप्सितम् ।
युक्तं हयवरैर्जैत्रं काम्भोजैरभिनिष्ठितम् ॥ ७

न चेत् तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यमस्मै वरं दद्यां सौवर्णं हस्तिषड्गवम् ॥ ८

न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
[3]अन्यमस्मै वरं दद्यां श्वेतान् पञ्चशतं हयान् ॥ ९

अथवाऽस्मै विचित्राङ्गान् विचित्रमणिमण्डितान् ।
रथान् जात्यैर्हयैर्युक्तान् दद्यामष्टादशैव तान् ॥ १०

अन्यमस्मै वरं दद्यां धुर्यान् दान्तांश्चतुश्शतम् ॥ १०॥
रोहिणी रूपसम्पन्ना हैमशृङ्गीश्चतुश्शतम् ।

---

1. क-ख—इदमर्धद्वयं नास्ति    2. ख—अर्धचतुष्टयं नास्ति
3. ख—अष्टार्धानि न सन्ति

दद्यामस्मै पयस्विन्यो यो मे ब्रूयाद्धनञ्जयम् ॥ ११॥

रथं च शुभ्रं सौवर्णं दद्यामस्मै स्वलङ्कृतम् ।
हयानष्टौ च काम्भोजान् यो मे ब्रूयाद्धनञ्जयम् ॥ १२॥

ददाम्यस्मै गवामेकं शतं द्रोणदुहामहम् ॥ १३

अथवाऽस्मै पुनर्दद्यां स्त्रीणां शतमलङ्कृतम् ।
श्यामानां निष्ककण्ठीनां यो मे ब्रूयाद्धनञ्जयम् ॥ १४

अन्यमस्मै वरं दद्यां कुञ्जरान् दश शोभनान् ।
काञ्चनैर्विविधैर्भाण्डैर् आच्छन्नान् हेममालिनः ॥ १५

[1]न चेत् तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
उत्पन्नानपरान्तेषु विनीतान् हस्तिशिक्षकैः ॥ १६

अन्यमस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ।
प्रकृष्टसीमान् सस्याढ्यान् प्रत्यासन्नवनोदकान् ॥ १७

आप्तोदयान् पशुमत उपभोग्याञ् जनायुतान् ॥ १७॥

दासीनां निष्ककण्ठीनां मागधीनां शतं तथा ।
प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम् ॥ १८॥

न चेत् तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ १९

[2]दद्यां वर्णस्य वर्णस्य हयाग्र्याणां शतं शतम् ।
धुर्याणां साधु दान्तानां शिक्षितानां नरोत्तमैः ॥ २०

1. अ-ख—अष्टार्धानि न सन्ति 2. अ—अर्धचतुष्टयं नास्ति

न चेत् तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यमस्मै वरं दद्यां यमसौ कामयेत् स्वयम् ॥ २१

पुत्रदारान् विहायैव यदन्यद्वित्तमस्ति मे ।
तच्च तस्मै पुनर्दद्यां यद्यच्च मनसेच्छति ॥ २२

हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात् केशवार्जुनौ ॥ २३

सञ्जयः—

एता वाचस्सुबहुशः कर्ण उच्चारयन् युधि ।
दध्मौ सागरसम्भूतं सस्वनं शङ्खमुत्तमम् ॥ २४

ता वाचस्सूतपुत्रस्य तथा युक्ता निशम्य तु ।
दुर्योधनो महाराज संहृष्टस्सानुजोऽभवत् ॥ २५

ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशः ।
सिंहनादस्सवादित्रः कुञ्जराणां च निस्स्वनः ॥ २६

प्रादुरासीत् तदा राजंस् त्वत्सैन्ये पुरुषर्षभ ॥ २६॥

योधानां च प्रहृष्टानां तदा समभवत् स्वनः ॥ २७

तथा प्रहृष्टे सैन्ये तं प्लवमानं महारथम् ।
विकत्थमानं च तदा राधेयमरिकर्शनम् ॥ २८

मद्रराजः प्रहस्यैनं वचनं प्रत्यभाषत ॥ २८॥

शल्यः—

मा सूतपुत्र मन्येथास् सौवर्णं हस्तिषङ्गवम् ।
प्रयच्छसि मुधैव त्वं द्रक्ष्यस्यद्य धनञ्जयम् ॥ २९॥

बलेन मत्तस्त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रक्ष्यस्यद्य धनञ्जयम् ॥ ३०॥

पुरा सृजसि यच्चापि वित्तं बहु च मूढवत् ।
अपात्रदानाद्ये दोषास् तान् मोहान्नावबुध्यसे ॥ ३१॥

यत् प्रवेदयसे वित्तं बहु तेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर् यष्टुं सूत यजस्व तैः ॥ ३२॥

यच्च प्रार्थयसे कृष्णौ मोहाद्धन्तुं मृषैव तत् ।
न हि शुश्रुम सम्मर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ३३॥

अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते ।
ये त्वां निवारयन्त्यद्य प्रपतन्तं हुताशने ॥ ३४॥

कार्याकार्यं न जानीषे कालपक्वोऽस्यसंशयम् ।
बह्वबद्धमकर्णीयं न हि ब्रूयाज्जिजीविषुः ॥ ३५॥

समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा शिलां यथा ।
गिर्यग्राद्वा निपतनं तादृक् तव चिकीर्षितम् ॥ ३६॥

सहितस्सर्वयोधैस्तु व्यूढानीकस्सुरक्षितः ।
धनञ्जयेन युध्यस्व जयं चेत् प्राप्तुमिच्छसि ॥ ३७॥

हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया ।
श्रद्धत्स्वेदं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥ ३८॥

कर्णः—

स्ववीर्येणाहमाश्वस्तः प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखश्शत्रुर् मां भीषयितुमिच्छसि ॥ ३९॥

न मामस्मादभिप्रायात् कश्चिदद्य निवर्तयेत् ।
अपीन्द्रो वज्रमुद्यम्य किमु मर्त्यः कथञ्चन ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ७३ ॥ कर्णपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

कर्णगर्वोक्तिमसहमानेन शल्येन तद्गर्हणम् ॥

सञ्जयः—

इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः ।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ १

शल्यः—

यदा वै त्वा फल्गुनबाहुवेगाज्
ज्याचोदिता वेगवन्तोऽग्निकल्पाः ।

अन्वेतारः कङ्कपत्राश्शिताग्रास्
त्यक्ष्यत्येषा त्वां तदा कर्ण बुद्धिः ॥ २

यदा दिव्यं धनुरादाय पार्थः
प्रतापयन् पृतनां सव्यसाची ।
त्वां मर्दयिष्यत्यसुखैः पृषत्कैस्
तदा पृच्छां त्यक्ष्यसे पाण्डवस्य ॥ ३

बालश्चन्द्रं मातुरङ्के शयानो
यथा कश्चित् प्रार्थयतेऽपहर्तुम् ।
तद्वन्मोहाद् द्योतमानं रथस्थं
जेतुं पार्थं काङ्क्षसे सूतपुत्र ॥ ४

[1]खन्यादसिं तीक्ष्णधारं यथाऽज्ञस्
सुतेजनं निहितं वै पृथिव्याम् ।
तथा खनस्यद्य शितान् पृषत्कान्
यत् प्रार्थयस्यर्जुनेनेह युद्धम् ॥ ५

त्रिशूलमाश्लिष्य सुतीक्ष्णधारं
सर्वाणि गात्राणि विकर्षसि त्वम् ।
सुतीक्ष्णशस्त्रोपमकर्मणेह
युयुत्ससे फल्गुनेनाद्य कर्ण ॥ ६

1. अ-ख—अर्धचतुष्टयं नास्ति

क्रुद्धं सिंहं केसरिणं बृहन्तं
बालो भूत्वा क्षुद्रमृगस्तरस्वी ।
समाह्वयेद्धृष्टमुपेत्य योद्धुं
तथा त्वमद्याह्वयसे ह पार्थम् ॥ ७

मा सूतपुत्राह्वय राजपुत्रं
महावीर्यं केसरिणं यथैव ।
वने सृगालः पिशिताभितृप्तः
पार्थं समासाद्य विनङ्क्ष्यसि त्वम् ॥ ८

ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशो भूत्वाऽऽह्वयस्यद्य युद्धे कर्ण धनञ्जयम् ॥ ९

सृगालो हि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत् सिंहं न पश्यति ॥ १०

तथा त्वमपि राधेय सिंहमात्मानमिच्छसि ।
अपश्यञ् शत्रुदमनं नरसिंहं रणेऽर्जुनम् ॥ ११

बिलस्थं कृष्णसर्पं त्वं सम्बोधयितुमिच्छसि ।
महाविषं कर्ण मोहाद्योऽद्याह्वयसि फल्गुनम् ॥ १२

सिंहं केसरिणं क्रुद्धम् अभिक्रम्याभिनर्दसे ।
सृगाल इव मूढस्त्वं नृसिंहं कर्ण पाण्डवम् ॥ १३

सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् ।

लट्वैवाह्वयसे पार्थं तथा कर्ण धनञ्जयम् ॥ १४
सर्वाम्भसां निधिं भीमम् ऊर्मिमन्तं झषाकुलम् ।
चन्द्रोदयेन वर्धन्तम् अप्लवस्त्वं तितीर्षसि ॥ १५
यथा वत्सतरो भूत्वा जातस्कन्धेन शुष्मिणा ।
युद्धमिच्छेद्द्रोपतिना तथेच्छसि किरीटिना ॥ १६
महामेघं महाघोषं दर्दुरः प्रतिनर्दसे ।
कामतोयप्रदं काले नरपर्जन्यमर्जुनम् ॥ १७
यथा च श्वा गृहस्थस्तु व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ॥ १८
व्याघ्रं त्वं मन्यसे त्मानं यावत् कृष्णौ न पश्यसि ।
समास्थितावेकरथे सूर्याचन्द्रमसाविव ॥ १९
यावद्गाण्डीवघोषं च न शृणोषि महामृधे ।
तावदेव त्वया कर्ण वक्तुं शक्यं यथेष्टतः ॥ २०
रथशङ्खधनुश्शब्दैर् नादयन्तं दिशो दश ।
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ॥ २१
[1]नित्यमेव सृगालस्त्वं नित्यं सिंहः कपिध्वजः ।
वीरप्रद्वेषणान्मूढ तस्मात् क्रोष्टेव लक्ष्यसे ॥ २२
यथाऽऽखुस्स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा सृगालस्सिंहश्च यथा च शशकुञ्जरौ ॥ २३

---

1. ख—पद्धानि न सन्ति

यथाऽनृतं च सत्यं च यथा वाऽपि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकीर्तिभिः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ७३ ॥ कर्णपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

कर्णेन मर्मोद्घाटनपूर्वकं शल्यगर्हणम् ॥

सञ्जयः—

अधिक्षिप्तस्तु राधेयश् शल्येनामिततेजसा ।
प्रत्यब्रवीन्महाराज वाक्शल्यमविचारयन् ॥ १

कर्णः—

गुणान् गुणवतां शल्य गुणवान् वेत्ति नागुणः ।
त्वं तु नित्यं गुणैर्हीनः किं ज्ञास्यसि गुणागुणान् ॥ २

अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुश्शरान् ।
अहं शल्याभिजानामि न त्वं जानासि तत् तथा ॥ ३

एवमेवात्मनो वीर्यं महद्वैरं च पाण्डवैः ।
पाण्डवस्याभिजानामि विक्रमं च महात्मनः ॥ ४

तथा कृष्णस्य माहात्म्यम् ऋषभस्य महात्मनः ।

यथाऽहं शल्य जानामि मूढ शल्य न जानसि ॥ ५

अहमेवात्मना वीर्यं महद्वीर्यं च पाण्डवे ।
जानंस्तावाह्वये युद्धे शल्य नाग्निं पतङ्गवत् ॥ ६

अस्ति चायमिषुश्शल्य सुमुखो रक्तभोजनः ।
एकस्तूणीशयः पत्री सुधौतस्समलङ्कृतः ॥ ७

शेते चन्दनचूर्णेन पूजितो बहुलास्समाः ॥ ७॥

[1]आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा ॥ ८

एकरूपो महानुग्रस् तनुत्रास्थिविदारणः ।
निर्भिन्द्यां येन रुष्टोऽहम् अपि मेरुं महागिरिम् ॥ ९

तमहं जातु नास्येयम् अन्यस्मिन् फल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात् सत्यं चात्र शृणुष्व मे ॥ १०

तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ ।
योत्स्ये परमसंरब्धौ तत् कर्तुं सदृशं मम ॥ ११

सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ १२

उभयं तत् समासाद्य कोऽतिवर्तितुमर्हति ॥ १२॥

तावेतौ पुरुषव्याघ्रौ समाने स्यन्दने स्थितौ ।
मामेकमभिसंयुक्तौ सुजातं पश्य शल्य मे ॥ १३॥

---

1. क-ख—आहवे

पितृष्वसामातुलजौ भ्रातरावपराजितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥ १४॥

अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ ।
भीरूणां त्रासजननौ शल्य हर्षकरौ मम ॥ १५॥

त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावतीर्णस्संत्रासाद् अबद्धं बहु भाषसे ॥ १६॥

संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ।
तौ हत्वा समरे हन्ता त्वामप्यद्य सबान्धवम् ॥ १७॥

पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ।
सुहृद्रूपो रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि ॥ १८॥

तौ वा मामद्य हन्तारौ हनिष्ये तौ न संशयः ।
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ॥ १९॥

वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
अहमेको हनिष्यामि जोषमास्स्व कुदेशज ॥ २०॥

स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः ।
या गाथास्सम्प्रगायन्ति कुर्वन्तोऽध्ययनं यथा ॥ २१॥

ता गाथाश्शृणु मे शल्य मद्रकेषु दुरात्मसु ॥ २२

ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूर्ख मम वा ब्रूहि चोत्तरम् ॥ २३

मित्रध्रुङ्मद्रको नित्यम् यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥　　२४

दुरात्मा मद्रको नित्यं नित्यमानृतिकोऽनृजुः ।
यच्चान्यदपि दौरात्म्यं मद्रकेष्विति नश्श्रुतम् ॥　　२५

पिता माता च पुत्राश्च श्वश्रूश्वशुरमातुलाः ।
भगिनी दुहिता भ्राता नप्ता चान्ये च बान्धवाः ॥　　२६

वयस्याभ्यागताश्चान्ये दासीदासाश्च सङ्गताः ।
पुम्भिर्विमिश्रिता नार्यो ज्ञाताज्ञातास्स्वयेच्छया ॥　　२७

[1]येषां गृहेष्वशिष्टानां सक्तुमद्याशिनां सदा ।
पीत्वा शीधु सगोमांसं क्रन्दन्ति च हसन्ति च ॥　　२८

गायन्ति चाप्यबद्धानि प्रवर्तन्ते च कामतः ।
कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथं भवेत् ॥　　२९

मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्मसु ।
नापि वैरं न सौहार्दं मद्रकेषु समाचरेत् ॥　　३०

मद्रके सङ्गतं नास्ति मद्रको हि सदा मलः ।
मद्रकेषु च संसृष्टं शौचं गान्धारकेषु च ॥　　३१

राजयाजकयाज्याभ्यां यथा दत्तं हविर्नशेत् ।

---

1. ख—अर्धचतुष्टयं नास्ति

शूद्रसंस्कारको विप्रो यथा याति पराभवम् ॥ ३२

[1]यथा ब्रह्मद्विषोऽत्यन्तं गच्छन्तीह पराभवम् ।
तथैव सङ्गतं चापि मद्रकेषु दुरात्मसु ॥ ३३

बालेष्वपि सदा न स्म धनं वृश्चिकतो विषम् ।
आथर्वणेन मन्त्रेण सर्वशान्तिः कृता मया ॥ ३४

इति वृश्चिकदष्टस्य नानाविषहतस्य च ।
कुर्वन्ति भेषजं प्राज्ञास् सद्यस्तच्चापि दृश्यते ॥ ३५

[2]भूयस्त्वं शृणु मे वाचो ब्रूहि चात्रोत्तरं वचः ।
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो मद्यविमोहिताः ॥ ३६

मैथुनेऽसङ्गतायाश्च तथा कामकराश्च ह ।
तासां पुत्रः कथं धर्मं मद्रको वोढुमर्हति ॥ ३७

यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रा यथैडकाः ।
तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः ॥ ३८

त्वं पुत्रस्तादृशानां हि धर्मं वक्तुमिहेच्छसि ॥ ३८॥

सौवीरकं याच्यमाना माद्रिका घर्षति स्फिचौ ।
अदातुकामा वचनम् इदमाह सुदारुणम् ॥ ३९॥

---

1. ख—इदमर्धं नास्ति

2. घ—एवं विद्वानास्व जोषं शृणु चोक्तमिदं वचः । [ पाठान्तरम् ]

न मां सौवीरकं कश्चिद् याचेत दयितं मम ।
पुत्रं दद्यां पतिं दद्यां न तद्दद्यां सुवीरकम् ॥ ४०॥

गौर्यो बृहत्यो निर्ह्रीका माद्रिकाः कम्बलावृताः ।
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ॥ ४१॥

प्रमेहित्वा स्फिचौ भूमौ घर्षन्त्यो हीनशोधनाः ।
स्पृष्ट्वा वाऽद्भिर्न मृद्भिश्च नित्योच्छिष्टा भवन्ति हि ॥ ४२॥

एवमादि मयाऽन्यैर्वा शक्यं वक्तुं भवेद्बहु ।
आकेशादानखाग्राच्च वक्तव्येषु कुवर्त्मसु ॥ ४३॥

मद्रकास्सिन्धुसौवीरा धर्मं विद्युः कथं त्विह ।
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ॥ ४४॥

एष मुख्यतमो धर्मः क्षत्रियस्येति नश्श्रुतम् ।
यदाजौ निहतश्शेते सद्भिस्समभिपूजितः ॥ ४५॥

आयुधानां साम्पराये यन्मुञ्चेयमहं तनुम् ।
य एष प्रथमः कल्पस् स एव स्वर्गगामिनाम् ॥ ४६॥

सोऽहं प्रियस्सखा चैव धार्तराष्ट्रस्य धीमतः ।
तदर्थो हि मम प्राणा यच्च मे विद्यते वसु ॥ ४७॥

व्यक्तं त्वमस्युपहितः पाण्डवैः पापदेशज ।
तथा ह्यमित्रवत् सर्वं त्वमस्मासु प्रवर्तसे ॥ ४८॥

कामं खलु न शक्योऽहं त्वद्विधानां शतैरपि ।
सङ्ग्रामाद् विमुखीकर्तुं सद्धर्मे इव नास्तिकैः ॥ ४९॥

सारङ्ग इव घर्मार्तः कामं विलप शुष्य च ।
नाहं भीषयितुं शक्यः क्षत्रधर्मे व्यवस्थितः ॥ ५०॥

तनुत्यजां नृसिंहानाम् आहवेष्वनिवर्तिनाम् ।
या गतिर्गुरुणा प्रोक्ता प्रेम्णा रामेण तां स्मरे ॥ ५१॥

स्वेषां त्राणार्थमुद्युक्तं वधार्थं द्विषतामपि ।
विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ॥ ५२॥

न तं भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ।
यो मामस्मादभिप्रायद्वारयेदिति मे मतिः ॥ ५३॥

एवं विद्वानास्स्व जोषं किं त्रासाद्बहु भाषसे ।
मा त्वा हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधिप ॥ ५४॥

मित्रप्रतीक्षया शल्य धृतराष्ट्रस्य चोभयोः ।
अपवादतितिक्षाभिस् त्रिभिरेतैर्हि जीवसि ॥ ५५॥

पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यति ।
शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥ ५६॥

श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज ।
कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥ ५७॥

एवमुक्त्वा तु राधेयः पुनरेव विशां पते ।
अब्रवीन्मद्रराजानं याहि याहीति सम्भ्रमात् ॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[अस्मिन्नध्याये ५८॥ श्लोकाः ]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

---

शल्येन कर्णं प्रति हंसकाकीयाख्यानकथनम् ॥

---

सञ्जयः—

मारिषातिरथेश्श्रुत्वा वचो युद्धाभिनन्दिनः ।
शल्योऽब्रवीत् कर्णमिदं निदर्शनमुदाहरन् ॥ १

शल्यः—

यथैव मत्तो मद्येन त्वं तथा पानपो यथा ।
तथाऽपि त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ २

इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।
श्रुत्वा यथेष्टं कुर्यास्त्वं विहीन कुलपांसन ॥ ३

नाहमात्मनि किञ्चिद्वै किल्बिषं कर्ण संस्मरे ।
येन मां त्वं महाबाहो हन्तुमिच्छस्यनागसम् ॥ ४

अवश्यं तु मया वाच्यं बुद्ध्वा तव हिताहितम् ।

विशेषतो रथस्थेन राज्ञश्चापि हितार्थिना ॥ ५

समं च विषमं चैव रथिनश्च बलाबलम् ।
श्रमः खेदश्च सततं हयानां रथिना सह ॥ ६

आयुधानां परीमाणं रुतं च मृगपक्षिणाम् ।
सारं चैवाप्यसारं च शल्यानां च प्रतिक्रिया ॥ ७

अस्त्रयोगं च युद्धं च निमित्तानि तथैव च ।
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना ॥ ८

अतस्त्वां कथये कर्ण दर्शयामि पुनः पुनः ॥ ८॥

वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान् ।
यज्वा दानपतिश्शान्तस् स्वधर्मनिरतश्शुचिः ॥ ९॥

बहुपुत्रः प्रियापत्यस् सर्वभूतानुकम्पनः ।
राष्ट्रे धर्मप्रधानस्य राज्ञो वसति निर्भयः ॥ १०॥

पुत्राणां तस्य बालानां कुमाराणां च धीमताम् ।
काको बहूनामभवद् उच्छिष्टकृतभोजनः ॥ ११॥

तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः ।
मांसोदनं दधि क्षीरं पायसं सर्पिषा सह ॥ १२॥

तथोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान् पक्षिणो मत्तश् श्रेयसश्चावमन्यते ॥ १३॥

अथ हंसास्समुद्रान्ते प्रजग्मुरतिपातिनः ।

गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ॥ १४॥

कुमारकास्ततो दृष्ट्वा हंसान् काकमथाब्रुवन् ॥ १५

वैश्यपुत्राः—

भवानेव विशिष्टोऽसि पतत्रिभ्यो विहङ्गम ।

एतेऽतिपातिनः पश्य विहङ्गान् वियदाश्रितान् ॥ १६

एभिस्त्वमपि शक्तो हि कस्मान्न पतितं त्वया ॥ १६॥

शल्यः—

प्रतार्यमाणस्तु स तैर् अल्पबुद्धिभिरण्डजः ।

तद्वचस्सत्यमित्येव मौढ्याद्दर्पाच्च जज्ञिवान् ॥ १७॥

तान् सोऽतिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।

उच्छिष्टदर्पितः काको बहूनामेकपातिनाम् ॥ १८॥

तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।

तमाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ॥ १९॥

तच्छ्रुत्वा प्राहसन् हंसा ये तत्रासन् समागताः ।

भाषतो बहु काकस्य बालिश्यात् पततां वराः ॥ २०॥

इदमूचुस्तु चक्राङ्गा वचः काकं विहङ्गमाः ॥ २१

हंसाः—

वयं हंसाश्चरामेमां पृथिवीं मानसौकसः ।

पक्षिणां च वयं नित्यं दूरपातेन पूजिताः ॥ २२

कथं नु बलिनं हंसं समाह्वयसि दुर्मते ।

काको भूत्वा निपतने चक्राङ्गान् दूरपातिनः ॥ २२
कथं त्वं पतसे काक सहास्माभिः प्रचक्ष्व तत् ॥ २३॥

शल्यः—

अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्राहोत्तरं वचः काकः कत्थनस्सोऽतिलाघवात् ॥ २४॥

काकः—

शतमेकं च पातानां पतितास्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ २५॥

उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निड्डीनमथ सण्डीनं तिरश्चीनगतानि च ॥ २६॥

आडीनं परडीनं च पराडीनं सुडीनकम् ।
अतिडीनं महाडीनं विडीनमुपडीनकम् ॥ २७॥
प्रतिडीनं निडीनं चाप्यनुडीनं कुडीनकम् ॥ २८

गतागतप्रतिगता बह्वीश्चैव कुडीनकाः ।
कर्तास्मि मिषतां वोऽद्य नूनं द्रक्ष्यथ मे बलम् ॥ २९

तद्भावध्वं विनिश्चित्य कुरुध्वं सहिताः खगाः ।
पातैरेतैस्सह मया पतितुं खे निराश्रये ॥ ३०

शल्यः—

एवमुक्ते तु काकेन तेषामेको विहङ्गमः ।
प्रहसन्नब्रवीत् काकम् इदं राधेय तच्छृणु ॥ ३१

हंसः—

शतमेकं च पातानां काक त्वं पतिता ध्रुवम् ।
[1]एकमेव तु सम्पातं विदुस्सर्वे विहङ्गमाः ॥　　३२

एतेनाहं पते काक नान्यं जानामि कञ्चन ॥　　३२॥

काकः—

पत त्वमपि तत्राशु येन पातेन मन्यसे ॥　　३३

शल्यः—

अथ काकं प्रजहसुर् ये तत्रासन् समागताः ।
कथमेकेन पातेन जयेम शतपातिनम् ॥　　३४

एकेन वायस त्वेनं पातेनाभिभविष्यति ॥　　३४॥

शल्यः—

हंसश्चोत्पतितः काको बलवानाशुविक्रमः ।
प्रपेततुस्तथेत्युक्त्वा तावुभौ हंसवायसौ ॥　　३५॥

उपर्युपरि वेगेन समुद्रं मकरालयम् ॥　　३६

हंसस्त्वेकेन पातेन काकः पातशतेन च ।
स्पर्धिनौ महितौ तूर्णं खमास्थाय तरस्विनौ ॥　　३७

हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे ।
[2]पूर्वमेव तु वै काकस् तूर्णं गन्तुं प्रचक्रमे ॥　　३८

---

1. ख—कोश एकस्मिन्नेवेदमर्धं वर्तते

2. ख—इदमर्धं नास्ति

नात्यहीयत काकश्च मुहूर्तमिव सूतज ॥ ३८॥

काकोऽथ हंसं चापल्याच् छीघ्रतां प्रतिदर्शयन् ।
वेगेनातीत्य तरसा पुनरेति मुहुर्मुहुः ॥ ३९॥

तुण्डेनाभ्यहनच्चैनं कुर्वन्नामापसव्यतः ।
रोरूयन्निति चाप्येनं समाह्वयति वै मुहुः ॥ ४०॥

विसिस्मापयिषुः पातैर् दर्शयन्नात्मनः क्रियाम् ॥ ४१

अथ काकस्य चित्राणि पतितानीतराणि च ।
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैस्स्वरैः ॥ ४२

हंसाश्चापहसन्ति स्म प्रवदन्तोऽप्रियाणि च ।
कुर्वाणा विविधान् रावान् इच्छन्तो जयमात्मनः ॥ ४३

उत्पत्योत्पत्य च प्राहुर् मुहूर्तमिति चेति च ।
वृक्षाग्रेभ्यस्स्थलेभ्यश्च निपतन्त्युत्पतन्ति च ॥ ४४

अवमत्य च हंसं तम् इदं काकोऽब्रवीद्वचः ॥ ४४॥

काकः—

योऽसावुत्पतितो हंसस् सोऽसावेव प्रहीयते ॥ ४५

शल्यः—

अथ हंसस्तु तच्छ्रुत्वा भाषितं पततां वरः ।
विगाह्य हंसो विक्षोभ्य प्रापतत् पश्चिमां दिशम् ॥ ४६

उपर्युपरि वेगेन सागरं मकरालयम् ।

बहुसत्त्वसमाकीर्णं वीचीभिर्भीमदर्शनम् ॥ ४७

अथाचिरेण राधेय काको वेगादहीयत ।
ततोऽतीव परिश्रान्तः कथञ्चिद्धंसमन्वगात् ॥ ४८

भीश्चैनमाविशत् तीव्रं काकं कर्ण विचेतसम् ।
द्वीपान् द्रुमान्वितान् पश्यन् विश्रमार्थं श्रमातुरः ॥ ४९

निपतेयं कनु श्रान्त इति तस्मिञ्जलार्णवे ॥ ४९॥

अविषह्यस्समुद्रो हि बहुसत्त्वगणालयः ।
महान् भूतशतोद्भासी नभसस्तु विशिष्यते ॥ ५०॥

गाम्भीर्याद्धि समुद्रस्य न विशेषं कुलाधम ॥ ५१

दिशश्च नाम्भसां कर्ण समुद्रस्था विदुर्जनाः ।
विपश्चितोऽप्यपारत्वात् किं पुनः कर्ण वायसः ॥ ५२

अथ हंसोऽप्यतिक्रामन्मुहूर्तमिव दूरतः ॥ ५२॥

अतिक्रभ्य च चक्राङ्गः काकं तं समुदैक्षत ।
शनकैः परिहीनं तं परिश्रान्तमचेतसम् ॥ ५३॥

अवेक्षमाणस्तं काकं प्रत्यागम्य हसन्निव ।
तं प्रहस्य च चक्राङ्गः काकं मन्दगतिं तदा ॥ ५४॥

हीयमानमथो दृष्ट्वा हंसः प्राह यथार्थवत् ।
उज्जिहीर्षुर्निमज्जन्तं स्मरन् सत्पुरुषव्रतम् ॥ ५५॥

हंसः—

बहूनि पतितानि त्वम् आचक्षाणो मुहुर्मुहुः ।
पतस्यव्याहरन् खेदं ततो गुह्यं प्रभाषसे ॥ ५६॥

किं नाम पतितं काक यत् त्वं पतसि साम्प्रतम् ।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः ॥ ५७॥

प्रब्रूहि कतमोऽयं ते पातो वर्तति वायस ।
एह्येहि काक शीघ्रं त्वम् एष त्वां परिपालये ॥ ५८॥

शल्यः—

स पक्षाभ्यां स्पृशन्नार्तस् तुण्डेन च जलं तदा ।
काको दृढं परिश्रान्तस् सहसा निपपात ह ॥ ५९॥

सागराम्भसि तं दृष्ट्वा पतन्तं दीनचेतसम् ।
म्रियमाणमिदं वाक्यं हंसः काकमुवाच ह ॥ ६०॥

हंसः—

शतमेकं च पातानां पताम्यहमिति स्म ह ।
श्लाघन्नात्मानमद्य त्वं काक भाषितवानसि ॥ ६१॥

स त्वमेकशतं पातं पतन्नभ्यधिको मया ।
कथमेवं परिश्रान्तः पतितोऽसि महार्णवे ॥ ६२॥

शल्यः—

प्रत्युवाच ततः काकस् सीदमान इदं वचः ।
उपरिस्थं तदा हंसं प्रसमीक्ष्य प्रसादयन् ॥ ६३॥

**काकः—**

उच्छिष्टान्नेन पुष्टोऽहं दर्पोत्सिक्तः कुसत्त्वतः ।
सुपर्ण इव चात्मानं ज्ञातवान् बुद्धिलाघवात् ॥　　६४॥

शरणं त्वां प्रपन्नोऽहम् उदकान्तमवाप्नुयाम् ।
[1]हंसेदानीं परिश्रान्तम् आपदो मां समुद्धर ॥　　६५॥

यदि नाम पुनर्जीवन् गच्छेयं स्वं निवेशनम् ।
नैवं पुनर्हीनमपि क्षेप्ताऽहं खे विचारिणम् ॥　　६६॥

**शल्यः—**

तमेवं करुणं दीनं विलपन्तमचेतनम् ।
काक काकेति वाश्यन्तं निमज्जन्तं महार्णवे ॥　　६७॥

कृपयाऽभिपरीतो हि कृपां चक्रे दुरात्मनि ॥　　६८

अथ तं पतितं दीनं जलक्लिन्नमचेतनम् ।
पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारोपयत् तदा ॥　　६९

स हंसः पृष्ठमारोप्य काकं कर्ण विचेतसम् ।
अविस्मयस्तदा कर्ण पुनरेनं समानयत् ॥　　७०

तमेव देशं तरसा स्पर्धया पेततुर्यतः ॥　　७०॥

उत्सृजंश्चाब्रवीन्नैवं पुनः कार्यं त्वयेति हि ।
स्थाप्य चैनं पुनर्द्वीपे समाश्वस्य च विक्लवम् ॥　　७१॥

---

1. ख—अर्धचतुष्टयं नास्ति

गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ७२

एवमुच्छिष्टपुष्टस्स काको हंसपराजितः ।
बलं वीर्यं मदं कर्ण त्यक्त्वा क्षान्तिमुपागमत् ॥ ७३

उच्छिष्टभोजनः काको यथा वैश्यकुले पुरा ।
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ॥ ७४

सदृशाञ् श्रेयसश्चापि सर्वान् कर्णावमन्यसे ।
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ॥ ७५

विराटनगरे पार्थम् एकं किं नावधीस्तदा ।
यत्र व्यस्तास्समस्ताश्च निर्जितास्स्थ किरीटिना ॥ ७६

सृगाल इव सिंहेन क ते वीर्यं तदा गतम् ॥ ७६॥

भ्रातरं निहतं दृष्ट्वा समरे सव्यसाचिना ।
पश्यतां कुरुवीराणां प्रथमं त्वं पलायथाः ॥ ७७॥

तथा द्वैतवने कर्ण गन्धर्वैस्समभिद्रुतान् ।
कुरून् सदारानुत्सृज्य त्वमेवाग्रे पलायथाः ॥ ७८॥

हत्वा जित्वा च गन्धर्वांश् चित्रसेनमुखान् रणे ।
कर्ण दुर्योधनं पार्थस् सभ्रातृकममोचयत् ॥ ७९॥

पुनः प्रभावः पार्थस्य पुराणः केशवस्य च ।
कथितः कर्ण रामेण सभायां कुरुसंसदि ॥ ८०॥

सततं च त्वमश्रौषीर् वचनं द्रोणभीष्मयोः ।

अवध्यौ वदतोः कृष्णौ सन्निधाने महीक्षिताम् ॥　　८१॥

कियन्तं तत्र वक्ष्यामि येन येन धनञ्जयः ।
त्वत्तोऽतिरिक्तो भूतेभ्यस् सर्वेभ्यो ब्राह्मणो यथा ॥　　८२॥

द्रक्ष्यसि त्वमिदानीं तौ प्रधाने स्यन्दने स्थितौ ।
पुत्रं च वसुदेवस्य कुन्तीपुत्रं च पाण्डवम् ॥　　८३॥

[1]यथाऽश्रयत चक्राङ्गं वायसो बुद्धिमास्थितः ।
त्वं शीघ्रमेहि वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥　　८४॥

देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ ॥　　८५

यथाऽशिक्षत चक्राङ्गं वायसो बुद्धिमाश्रितः ।
तद्वच्छिक्षस्व वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥　　८६

सूर्याचन्द्रमसौ यद्वत् तद्वदच्युतपाण्डवौ ।
प्रकाशेनाद्य विख्यातौ　त्वं तु खद्योतवन्नृषु ॥　　८७

तौ माऽवमंस्था मौढ्यात् त्वं खद्योत इव रोचनौ ॥　　८७॥

एवं विद्वन् माऽवमंस्थास् सूतपुत्राच्युतार्जुनौ ।
नरसिंहौ नरश्वा त्वं जोषमास्स्व विकत्थनात् ॥　　८८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये ८८॥ श्लोकाः ]

---

1. अ-ब—नास्तीदमर्धम्

## ॥ पञ्चत्रिंशोऽध्यायः ॥

कर्णेन शल्यं प्रति परशुरामात् तथा कुतश्चिद् ब्राह्मणाच्च शापप्राप्तिकथनम् ॥

[1]सञ्जयः—

मद्राधिपस्याधिरथिर्महात्मा
वचो निशम्याप्रियमप्रतीतः ।
उवाच शल्यं विदितं ममैतद्
यथाविधावर्जुनवासुदेवौ ॥ १

शौरे रथं वाहयतोऽर्जुनस्य
बलं महास्त्राणि च पाण्डवस्य ।
अहं विजानामि यथावदद्य
परोक्षभूतं तव तत् तु शल्य ॥ २

तौ चाप्यहं शस्त्रभृतां वरिष्ठौ
व्यपेतभीर्योधयिष्यामि कृष्णौ ।
सन्तापयत्यभ्यधिकं हि रामाच्
छापोऽद्य मां ब्राह्मणसत्तमाच्च ॥ ३

1. अ—एकोनचत्वारिंशश्लोका न सन्ति

पुरा महेन्द्राद्रिवरे समृद्धे
  तपस्विनं राममुपेत्य शल्य ।
अस्त्रार्थिनं मामद्य शिष्यं गृहाणे-
  त्यथाब्रुवं ब्राह्मणच्छद्मना च ॥ ४

तत्रावसं ब्राह्मण इत्यविप्रो
  ब्रह्मास्त्रलोभादनृतेन चाहम् ।
तज्जामदग्न्येन परं महास्त्रं
  समन्त्रयुक्तं विहितं ममासीत् ॥ ५

अस्त्रं यदा तद्विदितं ममासीत्
  तदाऽब्रवीद् ब्राह्मणो मां महर्षिः ।
आपद्गतेनास्त्रमिदं प्रयोज्यं
  त्वया रणे गच्छता साधयेति ॥ ६

तत्रापि मे देवराजेन विघ्नो
  हितार्थिना फल्गुनस्यैव शल्य ।
कृतो विभेदेन ममोरुमेत्य
  प्रविश्य कीटस्य तनुं विरूपाम् ॥ ७

गुरोर्भयाच्चापि न चेलिवानहं
  तच्चैव बुद्धो ददृशे स विप्रः ।

स धैर्ययुक्तं प्रसमीक्ष्य मां वै
न त्वं विप्रः कोऽसि सत्यं वदेति ॥ ८

तस्मै तदाऽऽत्मानमहं यथावद्
आख्यातवान् सूत इत्येव शल्य ।
स मां निशम्याथ महातपस्वी
संशप्तवान् रोषपरीतचेताः ॥ ९

सूतोपधावाप्तमिदं महास्त्रं
न कर्मकाले प्रतिभास्यतीति ।
अन्यत्र तु स्यात् तव मृत्युकालाद्
अब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ॥ १०

तदद्य पर्याप्ततीव मेऽस्त्रम्
उपस्थितेऽस्मिंस्तुमुले विमर्दे ।
ध्रुवं कुरूणामयमन्तकालो
महाभयश्शोणितौघप्रवाही ॥ ११

ध्रुवः क्षयः क्षत्रियपुङ्गवानां
महाभयोऽयं समुपस्थितोऽद्य ।
अस्त्रं हि मे न प्रतिभामुपैति
येन क्षयं शत्रुगणान् नयिष्ये ॥ १२

तस्मात् तदासादय मद्रराज
  दिव्यं धनुर्यस्य महेषवश्च ।
अस्त्राणि दिव्यानि च सन्ति यस्मिंस्
  तस्मिन् रथं प्रापय शीघ्रमद्य ॥ १२

श्रोष्यन्तीमं कथ्यमानं विचित्रं
  यावद्भूमौ भवितारो मनुष्याः ॥ १३॥

शल्योऽप्रधन्वानमहं वरिष्ठं
  तरस्विनं भीममसह्यवीर्यम् ।
सत्यप्रतिज्ञं युधि पाण्डवेयं
  धनञ्जयं मृत्युवशं नयिष्ये ॥ १४॥

अपांपतिर्वेगवानप्रमेयो
  निमज्जयिष्यन् बहुलाः प्रजा इव ।
महारवं यः कुरुते समुद्रो
  वेलेव तं वारयाम्यप्रमेयम् ॥ १५॥

प्रमुञ्चन्तं बाणसङ्घानमोघान्
  मर्मच्छिदः प्रवरान् कङ्कपत्रान् ।
कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे
  ज्याकर्षिणामुत्तमं मर्त्यलोके ॥ १६॥

एवं बलेनातिबलं महास्त्रं
समुद्रकल्पं सुदुरापमुग्रम् ।
शरौघिणं पार्थिवान् मज्जयन्तं
वेलेव पार्थमिषुभिर्वारयिष्ये ॥ १७॥

कृती कृतास्त्रो दृढहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
सुरासुरान् युधि वै यो जयेत
तेनाद्य मे पश्य युद्धं सुघोरम् ॥ १८॥

अभीर्मानी पाण्डवो युद्धकामो
योऽमानुषैरस्यति मां महास्त्रैः ।
तस्यास्त्रमस्त्रैरभिभूय सङ्ख्ये
बाणोत्तमैः पातयिष्यामि पार्थम् ॥ १९॥

सहस्ररश्मिप्रतिमं ज्वलन्तं
दिशश्च सर्वाः प्रतपन्तमुग्रम् ।
तमोनुदं मेघ इवातिमात्रो
धनञ्जयं छादयिष्यामि बाणैः ॥ २०॥

वैश्वानरं धूमकेतुं ज्वलन्तं
तेजस्विनं नरवीरान् दहन्तम् ।

पर्जन्यभूतश्शरवर्षैर्यथाऽग्निं
निर्वापयिष्यामि रणे हि पार्थम् ॥ २१॥

आशीविषं दृष्टिविषं सुघोरं
सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावम् ।
क्रोधात् प्रदीप्तानलवद्दहन्तं
कुन्तीसुतं शमयिष्यामि भल्लैः ॥ २२॥

प्रवाहिणं बलवन्तं महौजसं
प्रभञ्जनं मातरिश्वानमुग्रम् ।
युद्धे सहिष्ये हिमवानिवाचलः
क्रोधोद्धतं पार्थममृष्यमाणम् ॥ २३॥

विशारदं रथमार्गेष्वसक्तं
धुर्यं नित्यं समरेषु प्रवीरम् ।
लोके वरं सर्वधनुर्धराणां
धनञ्जयं समरेऽहं हनिष्ये ॥ २४॥

अद्याहवे यस्य न तुल्यमन्यं
मन्ये मनुष्यं धनुराददानम् ।
सर्वामिमां यः पृथिवीं सहेत
तथाऽपि तेनाद्य रणे समेष्ये ॥ २५॥

यस्सर्वभूतानि सदैवतानि
प्रस्थेऽजयत् खाण्डवे सव्यसाची ।
को जीवितं रक्षमाणो हि तेन
युयुत्सतेऽन्यैर्मानुषैर्मामृतेऽन्यः ॥ २६॥

मानी दृढास्त्रः कृतहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
तस्याहमद्यातिरथस्य कायाच्
छिरो हरिष्यामि शितैः पृषत्कैः ॥ २७॥

योत्स्याम्यहं शल्य धनञ्जयेन
मृत्युं पुरस्कृत्य रणे जयं वा ।
अन्यो हि नास्त्येकरथो न मत्तो
युध्येत यः पाण्डवमिन्द्रकल्पम् ॥ २८॥

तस्याहवे पौरुषं पाण्डवस्य
ब्रूयाः पृष्टस्समितौ क्षत्रियाणाम् ।
किं त्वं मूर्खः प्रसभं मूढचेता
आख्यासि मे पौरुषमर्जुनस्य ॥ २९॥

अत्यप्रियो यः पुरुषो नीचकर्मा
क्षुद्रः क्षेप्ता क्षमिणामक्षमावान् ।

हन्यामहं त्वादृशानां शतानि
क्षमामि त्वा क्षमिणां काल एषः ॥ ३०॥

अवोचस्त्वं पाण्डवार्थेऽप्रियाणि
प्रधर्षयन् मूढवत् पापकर्मा ।
मय्यार्जवे जिह्ममतिर्यतस्त्वं
मित्रद्रोही साप्तपदं हि मित्रम् ॥ ३१॥

कालस्त्वयं प्रत्युपयाति दारुणो
दुर्योधनो युद्धमुपागमद्यत् ।
तस्यार्थसिद्धिमभिकाङ्क्षमाणस्
तमन्वेष्ये यत्र चैकान्तमस्ति ॥ ३२॥

[1]तथाऽप्यहं पाण्डववासुदेवौ
योत्स्ये रणे मद्विधस्यैव कर्म ।
न प्राकृतस्सज्जते वै कदाचिद्
यः प्रत्युदीयात् कृष्णधनञ्जयौ तौ ॥ ३३॥

मित्रं मिधेर्नन्दतेः प्रीयतेर्वा
सन्त्रायतेर्मन्यतेर्मोदतेर्वा ।
ब्रवीमि ते सर्वमिदं ममास्ति
तच्चापि सर्वं मम वेत्ति राजा ॥ ३४॥

---

1. क-ख-ङ—कोशेष्वेव सप्तार्धानि वर्तन्ते

[1]प्रमीयते भजते यच्च मित्रं
तच्चापि सर्वं मम दुर्योधनेऽस्ति ॥ ३५
शातेश्शत्रुश्शासतेर्वा सदेर्वा
शृणोतेर्वा श्वसतेस्स्यन्दतेर्वा ।

श्रमेश्शुचो बहुशस्सूदतेश्च
प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ३६

दुर्योधनार्थं तव चाप्रियार्थं
यशोऽर्थमर्थार्थमथेश्वरार्थम् ।
तस्मादहं पाण्डववासुदेवौ
योत्स्ये यत्तः कर्म च पश्य मेऽद्य ॥ ३७

शल्याद्याहं सङ्गतः पाण्डवेन
मुच्येयं चेज्जीवमानः कथञ्चित् ।
शश्वन्मृत्योस्स्यामनाधृष्यरूपो
व्यक्तं तस्मात् संयुगाद्विप्रमुक्तः ॥ ३८

अस्त्रं ब्राह्मं मनसा यज्जपन् वै
यदाऽस्यते क्रोधितस्सव्यसाची ।
तदाऽपि मे नैव मुच्येत पार्थो
न चेत् पतेद्विषमे मेऽद्य चक्रम् ॥ ३९

1. ख—अर्धद्वयं नास्ति

अस्त्राणि विद्धा समरे गतानि
ब्राह्माणि दिव्यान्यथ मानुषाणि ।
आसादयिष्याम्यहमुग्रवीर्यं
नागोत्तमं नाग इव प्रभिन्नः ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ षट्त्रिंशोऽध्यायः ॥

कर्णेन शल्यं प्रति स्वस्यकुतश्चिद्ब्राह्मणाच्छा पप्राप्तिकथनम् ॥

कर्णः—

वैवस्वताद्दण्डहस्ताद् वरुणाद्वाऽपि पाशिनः ।
सगदाद्वा धनपतेस् सवज्राद्वा सुराधिपात् ॥ १

तथाऽन्यस्मादपि सुराद् अमित्रादाततायिनः ।
इति शल्य विजानीहि यथाऽहं न बिभेम्युत ॥ २

तस्मान्न मे भयं पार्थान्नैव चापि जनार्दनात् ।
सह युद्धं हि मे ताभ्यां साम्पराये भविष्यति ॥ ३

श्वभ्रे ते पतिता चक्रम् इति मां ब्राह्मणोऽब्रवीत् ।
युध्यमानस्य सङ्ग्रामे प्राप्तस्यैकायनं भयम् ॥ ४

तस्माद्बिभेमि बलवद् ब्राह्मणव्याहृतादहम् ।
एते हि सोमराजान ईश्वरास्सुखदुःखयोः ॥ ५

कदाचिद्ब्राह्मणस्याथ योग्यहेतेरहं नृप ।
अजानन्नक्षिपं बाणं घोररूपं भयावहम् ॥ ६

होमधेन्वास्ततो वत्सः प्रमत्त इषुणा हतः ।
चरन् वै विजने शल्य ततो मां व्याजहार सः ॥ ७

ब्राह्मणः—

यस्माद्वत्सस्त्वया चात्र होमधेन्वा हतो नृप ।
तस्मात् त्वमपि राधेय वाक्शल्यं महदाप्नुहि ॥ ८

श्वभ्रे ते पतिता चक्रं युध्यमानस्य शत्रुणा ।
प्राप्त एकायने काले मृत्युसाधारणे त्वयि ॥ ९

स्पर्धसे येन सङ्ग्रामे यदर्थं घटसेऽनिशम् ।
तत एव ध्रुवं मृत्युं सूत प्राप्स्यसि संयुगे ॥ १०

कर्णः—

अहं प्रसादयाञ्चक्रे ब्राह्मणं संशितव्रतम् ॥ १०॥

गवां दशशतं वित्तं बलीवर्दांश्च षट्शतम् ।
प्रयच्छन् नालभं कामं ब्राह्मणात् तमहं तदा ॥ ११॥

दासीशतं निष्ककण्ठं शतमश्वतरीरथान् ।
कन्यानां निष्ककण्ठीनां सहस्रं समलङ्कृतम् ॥ १२॥

ईषादन्तान् सप्तशतान् दासीर्दशशतानि च ।

ददतो द्विजमुख्यो मे प्रसादं न चकार वै ॥　　१३॥

कृष्णानां श्वेतवत्सानां गोशतानि चतुर्दश ।
अददं न लभे तस्मात् प्रसादं द्विजसत्तमात् ॥　　१४॥

यत् किञ्चिन्मामकं वित्तं त्वदधीनं करोमि तत् ।
इति मां याचमानं वै ब्राह्मणः प्रत्यवारयत् ॥　　१५॥

ब्राह्मणः—

क्रोधदीप्तेक्षणश्शल्य निर्दहन्निव चक्षुषा ॥　　१६

यन्मया व्याहृतं सूत तत् तथा न तदन्यथा ।
अनृतोक्तं प्रजा हन्यात् ततः पापमवाप्नुयाम् ॥　　१७

तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ।
मा त्वं ब्राह्मणगर्ह्यस्त्याः प्रायश्चित्तं कृतं त्वया ॥　　१८

नैतत् तदनृतं कुर्यात् सर्वलोकोऽपि सूतज ।
यन्मयोक्तं सरोषेण गच्छ सूतज मा चिरम् ॥　　१९

कर्णः—

इति मामसकृत् क्रुद्धस् स उवाच द्विजोत्तमः ॥　　१९॥

एते हि सोमराजेन ईश्वरास्सुखदुःखयोः ॥　　२०

नाहं बिभेमि बीभत्सोर् न शल्य मधुसूदनात् ।
तस्माद्बिभेम्यहं शापात् तेन सत्येन ते शपे ॥　　२१

सह युद्धं समेताभ्याम् अद्येदं समुपस्थितम् ।
युद्धेऽस्मिञ्जीवितं मेऽद्य शल्ये संशयमागतम् ॥　　२२

शक्रोऽप्यमरराट् ताभ्याम् उपगम्याहवं सह ।
संशयं परमं गच्छेत् कथं वा मन्यते भवान् ॥ २३

इत्येवं ते मयाऽऽख्यातं क्षिप्तेन च सुहृत्तया ।
जानामि त्वाऽधिक्षिपन्तं दोषमात्मगतं शृणु ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ ७३ ॥ कर्णपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

कर्णेन सोपहासं शल्यगर्हणम् ॥

---

सञ्जयः—

ततः पुनर्महाराज मद्रराजमरिन्दमम् ।
अभ्यभाषत राधेयस् संनिवार्योत्तरं वचः ॥ १

कर्णः—

निदर्शनार्थं शल्य त्वं यत् तु जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ २

यदि मां देवतास्सर्वा योधयेयुस्समागताः ।
ततोऽपि मे भयं न स्यात् किमु पार्थात् सकेशवात् ॥ ३

नाहं भीषयितुं शक्यश् शुद्धकर्माऽहमाहवे ।

अभिजानीहि शक्तस्त्वम् अन्यं भीषयितुं रणे ॥ ४

नीचस्य बलमेतावत् परुषं यत् त्वमात्थ माम् ।
अशक्तो हि गुणान् वक्तुं वल्गसे बहु दुर्मते ॥ ५

न हि कर्णस्समुद्भूतो भयार्थमिह मारिष ।
विक्रमार्थमहं जातो यशोर्थं च तथैव हि ॥ ६

सखिभावेन सौहार्दान्मित्रभावेन चैव हि ।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि साम्प्रतम् ॥ ७

[1]राज्ञश्च धार्तराष्ट्रस्य कार्यं हि महदुद्यतम् ।
मयि तच्चाहितं शल्य तेन जीवसि मे क्षणम् ॥ ८

कृतश्च समयः पूर्वं क्षन्तव्यं विप्रियं तव ।
समयः परिपाल्यो मे तेन जीवसि साम्प्रतम् ॥ ९

ऋते शल्यसहस्रेण विजयेयमहं परान् ।
[2]मित्रद्रोहस्तु पापीयान् इति जीवसि मद्रक ॥ १०

शल्यः—

आर्तप्रलापांस्त्वं कर्ण यान् ब्रवीषि परान् प्रति ।
न ते कर्णसहस्रेण शक्या जेतुं परे युधि ॥ ११

---

1. क-ङ—कोशयोरेवेदमर्धचतुष्टयं वर्तते
2. घ—राज्ञश्च धार्तराष्ट्रस्य कार्यं हि महदुद्यतम् ।
मयि तच्चाहितं शल्य तेन जीवसि मे क्षणम् ॥
[ अत्रवर्ततेऽधिकः पाठः ]

सञ्जयः—

तथा ब्रुवन्तं परुषं शल्यं वैकर्तनस्तदा ।
परुषं द्विगुणं भूयः प्रोवाचाप्रियवादिनम् ॥ १२

कर्णः—

इदं त्वमेकाग्रमनाश् शृणु मद्रजनाधिप ।
सन्निधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ १३

देशांश्च विविधांश्चित्रान् पूर्ववृत्तांश्च पार्थिवान् ।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रसमीपतः ॥ १४

तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः ।
बाह्लीकदेशान् मद्रांश्च कुत्सयन् वाक्यमब्रवीत् ॥ १५

ब्राह्मणः—

बहिष्कृता हिमवता गङ्गया च तिरस्कृताः ।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ १६

पञ्चानां सिन्धुषष्ठानां नदीनामुत्तराश्रिताः ।
तान् धर्मबाह्यानशुचीन् बाह्लीकान् परिवर्जयेत् ॥ १७

[1]पटच्चरं नाम वटं सुभाण्डं नाम पत्तनम् ।
एतद्राजकुलद्वारम् आकुमारात् स्मराम्यहम् ॥ १८

कार्येणात्यर्थगाढेन बाह्लीकेषूषितं मया ।
तत एषां समाचारस् समासाद्विदितो मया ॥ १९

---

1. ख-ङ—गोवर्धनो नाम वटः क—गोवर्धननाम वटः पट्टणम्

शाकलं नाम नगरम् अनापगमनिम्नगम् ।
चण्डाला नाम बाह्लीकास् तेषां वृत्तं सुनिन्दितम् ॥ २०

पानं गुडासवं पीत्वा गोमांसं लशुनैस्सह ।
अपूपसक्तुमद्यानाम् आशिताश्शीलवर्जिताः ॥ २१

हसन्ति गान्ति नृत्यन्ति स्त्रीभिर्मत्ता विवाससः ।
नगरापणवेशेषु बहिर्माल्यानुलेपनाः ॥ २२

मत्तापगीतविरुतैः खरोष्ट्रनिनदोपमैः ।
सुरामैरेयपुष्टाश्च सर्वे नग्ना मदोत्कटाः ॥ २३

हेहते हेहतेत्येवं स्वामिभर्तृहतेति च ।
आक्रोशन्तः प्रनृत्यन्ति सर्वे सर्वा मदोत्कटाः ॥ २४

तेषां मदावलिप्तानां निवसन् कुरुजाङ्गले ।
कश्चिद्बाह्लीकमत्तानां नातिहृष्टमना जगौ ॥ २५

सा नूनं बृहती गौरी मत्ता कम्बलवासिनी ।
मामनुस्मरती शेते बाह्लीकी कुरुवासिनम् ॥ २६

शतद्रुं तरसा तीर्त्वा चन्द्रभागामिरावतीम् ।
गत्वा स्वदेशं द्रक्ष्यामि स्थूलजङ्घाश्शुभास्स्त्रियः ॥ २७

मनश्शिलोज्ज्वलापाङ्ग्यो गौर्यस्ताः काककुञ्जकाः ।
कम्बलाजिनसंवीता रुदन्त्यः प्रियदर्शनाः ॥ २८

मृदङ्गानां च शङ्खानां पटहानां च निस्स्वनैः ।

खरोष्ट्राश्वतरीयानैः कथं यास्यामहे सुखम् ॥ २९

शमीपीलुकरीराणां वनेषु शुभवर्त्मसु ।
अपूपान् सक्तुपिण्डांश्च प्राश्नन्तो मदिरान्विताः ॥ ३०

पथिषु प्रबला भूत्वा तथा सम्पततोऽध्वगान् ।
चेलापहारं कुर्वाणास् ताडयिष्याम भूयशः ॥ ३१

एवंशीलेषु व्रात्येषु बाह्लीकेषु दुरात्मसु ।
कश्चेतयानो निवसेन्मुहूर्तमपि मानवः ॥ ३२

कर्णः—

ईदृशा ब्राह्मणेनोक्ता बाह्लीका मोघचारिणः ।
येषां षड्भागहर्ता त्वम् उभयोः पुण्यपापयोः ॥ ३३

इत्युक्त्वा ब्राह्मणस्साधुर् उत्तरं पुनरब्रवीत् ।
बाह्लीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् ॥ ३४

ब्राह्मणः—

तत्र स्म राक्षसी गाति सदा कृष्णचतुर्दशीम् ।
शाकले नगरे स्फीते आहत्य निशि दुन्दुभिम् ॥ ३५

कथं वा तादृशा गाथाः पुनर्गास्यामि शाकले ।
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं वरासवम् ॥ ३६

गौरीभिस्सह नारीभिर् बृहतीभिस्स्वलङ्कृताः ।
पलाण्डुगण्डूषयुतान् खादन्तश्चैलुकान् बहून् ॥ ३७

वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रकम ।
धानाश्च ये न खादन्ति तेषां जन्म निरर्थकम् ॥ ३८

कर्णः—

एवं गायन्ति ये मत्ताश् शीधुना पीलुकावने ।
सबालवृद्धाः क्रन्दन्ति तेषां धर्मः कथं भवेत् ॥ ३९

यत्र लोकेश्वरः कृष्णो देवदेवो जनार्दनः ।
विस्मृतः पुरुषैरुग्रैस् तेषां धर्मः कथं भवेत् ॥ ४०

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

## ॥ अष्टात्रिंशोऽध्यायः ॥

कर्णेन शल्यदेशगर्हणम् ॥

कर्णः—

यदन्योऽप्युक्तवांस्तत्रा ब्राह्मणः कुरुसंसदि ॥ ॥
पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्युत ॥ १

शतद्रूश्च विपाशा च तृतीयैरावती तथा ।
चन्द्रभागा वितस्ता च सिन्धुषष्ठा महानदी ॥ २

आरट्टा नाम बाह्लीका एतेष्वार्यो हि नो वसेत् ॥ २॥

व्रात्यानां निन्दनीयानां विदेहानामयज्वनाम् ।
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ॥ ३॥

तेषां प्रनष्टधर्माणां बाह्लीकानामिति श्रुतिः ।
ब्राह्मणेन यथा प्रोक्तं विदुषा साधुसंसदि ॥ ४॥

काष्ठकुण्डेषु बाह्लीका मृण्मयेषु च भुञ्जते ।
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः ॥ ५॥

आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ।
तद्विकारांश्च बाह्लीकाः खादन्ति च पिबन्ति च ॥ ६॥

पात्रसङ्करिणो जाल्मास् सर्वान्नक्षीरभोजनाः ।
आरट्टा नाम बाह्लीका वर्जनीया विपश्चिताम् ॥ ७॥

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवान् वाक्यं ब्राह्मणः कुरुसंसदि ॥ ८॥

युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।
तद्वद्भूतिपथे स्नात्वा कथं स्वर्गं गमिष्यति ॥ ९॥

पञ्च नद्यो वहन्त्येता यत्र निस्सृत्य पर्वतान् ।
आरट्टा नाम बाह्लीका न तेष्वार्योऽवतिष्ठते ॥ १०॥

बाह्लीका नाम भीकश्च पिशाची च पिशाचकः ।
तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः ॥ ११॥

ते कथं विविधान् धर्माञ् ज्ञास्यन्ते हीनयोनयः ॥ १२

कारस्करान् माहिषकान् करम्भान् कीकटान् शकान् ।
कर्कराान् वीरकाश्मन्तान् उन्मार्गांश्च विवर्जयेत् ॥ १३

इति तीर्थानुसञ्चारा राक्षसी काचिदब्रवीत् ।
एकरात्रमुषित्वेह महोलूखलमेखला ॥ १४

आरट्टा नाम ते देशा बाह्लीकं नाम तद्वनम् ।
वसातिसिन्धुसौवीरा इति प्रायोहि कुत्सिताः ॥ १५

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उच्यमानं मया सम्यक् त्वं ह्येकाग्रमनाश्शृणु ॥ १६

ब्राह्मणः किल नो गेहम् अभ्यागच्छत् पुराऽतिथिः ।
आचारं तत्र सम्प्रेक्ष्य प्रीतो वचनमब्रवीत् ॥ १७

ब्राह्मणः—

मया हिमवतश्शृङ्गे एकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमावृताः ॥ १८

न च केन च धर्मेण विरुध्यन्त इमाः प्रजाः ।
सर्वांश्चाप्यवदद्धर्मान् यथोक्तं वेदपारगैः ॥ १९

अटता तु मया देशान् नानाधर्मसमाकुलान् ।
आगच्छता महाराज बाह्लीकेषु निशामितम् ॥ २०

तत्र वै ब्राह्मणो भूत्वा पुनर्भवति क्षत्रियः ।

वैश्यश्शूद्रश्च बाह्लीकस् ततो भवति नापितः ॥ २१

नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा हि तत्रैव पुनर्दासोऽपि जायते ॥ २२

भवन्त्येककुला विप्राश् शिष्टा ये ब्रह्मचारिणः ।
गान्धारका मद्रकाश्च बाह्लीकाश्चाप्यचेतसः ॥ २३

एवं श्रुतं मया तत्र धर्मसङ्करकारकम् ।
कृत्स्नामटित्वा पृथिवीं बाह्लीकेषु विपर्ययः ॥ २४

कर्णः—

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदप्यन्योऽब्रवीद्वाक्यं बाह्लीकानां विकुत्सितम् ॥ २५

आनीयेहाक्षता काचिद् आरट्टे किल दस्युभिः ।
अधर्मतश्चोपयाता सा तानभ्यशपत् ततः ॥ २६

स्त्री—

बालां बन्धुमतीं यन्माम् अधर्मेणोपगच्छथ ।
तस्मात् कुमार्यस्स्वैरिण्यो भविष्यन्ति कुलेषु वः ॥ २७

नैव तस्माद्विमोक्ष्यध्वं घोराच्छापान्नराधमाः ॥ २७॥

कर्णः—

तस्मात् तेषां भागहरः कथं धर्मान् वदिष्यसि ॥ २८

कुरवस्सहपाञ्चालास् साल्वा मात्स्याश्च नैमिशाः ।
कौसलाः काशयश्चैव कालिङ्गा मागधास्तथा ॥ २९

चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम् ।
नानादेशेषु सन्तश्च प्रायो बाह्यालयादृते ॥ ३०

आमत्स्येभ्यः कुरुपाञ्चालसाल्वैस्
ते नैमिशाश्चेदयो ये विशिष्टाः ।
धर्मं पुराणमुपजीवन्ति सन्तो
मद्रानृते पाञ्चनदांश्च जिह्मान् ॥ ३१

एवं जानन् धर्मकथासु नित्यं
तूष्णींभूतश्शल्य भवेस्सदा त्वम् ।
त्वं तस्य गोप्ता च जनस्य राजा
षड्भागहर्ता शुभदुष्कृतस्य ॥ ३२

अथवा दुष्कृतानि त्वं हर्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं तु पापभाक् ॥ ३३

पूज्यमाने तथा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं श्रुत्वा धिगित्याह पितामहः ॥ ३४

व्रात्यानां दाशमीयानां कृतेऽप्यशुभकारिणाम् ।
ब्रह्मणा गर्हितान् सर्वान् कश्चित् सिद्धात्मकोऽब्रवीत् ॥ ३५

इति पाञ्चनदान् धर्मान् अवमेने पितामहः ।
स्वधर्मस्थेषु वर्णेषु सोऽप्येनान् नात्यपूजयत् ॥ ३६

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ३६॥

कल्माषपादस्सरसि निमज्जन् राक्षसोऽब्रवीत् ॥ ३७

क्षत्रियस्य मलं भैक्षं ब्राह्मणस्याश्रुतं मलम् ।
मलं पृथिव्या बाह्लीकास् स्त्रीणां कौतूहलं मलम् ॥ ३८

निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत् तेन चाख्यातं तच्छृणुष्व नराधिप ॥ ३९

मानुषाणां मलं म्लेच्छा म्लेच्छानां मुष्टिका मलम् ।
मुष्टिकानां मलं षण्ढाष् षण्ढानां राजयाजकाः ॥ ४०

राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ ४१

इति रक्षोपसृष्टेषु विषवीर्यहतेषु च ।
विद्वद्भिर्भेषजं दृष्टं संसिद्धं वचनोत्तरम् ॥ ४२

ब्राह्माः पाञ्चालाः कौरवेयाश्च धर्म्यास्
सत्या मत्स्याश्शूरसेनास्तु याज्याः ।
प्राच्या दासा वृषला दाक्षिणात्यास्
स्तेना बाह्लीकास्सङ्करा वै सुराष्ट्राः ॥ ४३

कृतघ्ना वै परवित्तापहारा
मत्ताः पानैर्गुरुदारावमर्दाः ।

येषां धर्मस्तान् प्रति नास्ति धर्म
　　आरट्टजान् पाञ्चनदान् धिगस्तु ॥　　४४

आपाञ्चालाः कुरवो नैमिशाश्च
　　मत्स्याश्चैवाप्यनुजानन्ति धर्मम् ।
अथोदीच्याश्चेदयो मागधाश्च
　　शिष्टान् धर्मानुपजीवन्ति वृद्धाः ॥　　४५

प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः ।
दक्षिणा पितृभिर्गुप्ता यमेन शुभकर्मणा ॥　　४६

प्रतीचीं वरुणः पाति पालयन्नसुरान् बहून् ।
उदीचीं भगवान्त्सोमो ब्रह्मा च ब्राह्मणैस्सह ॥　　४७

रक्षःपिशाचान् हिमवान् गुह्यकान् गन्धमादनः ।
ध्रुवं सर्वाणि भूतानि विष्णुः पाति सुरोत्तमः ॥　　४८

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

शल्यकर्णयोः कलहः ॥ १ ॥ दुर्योधनेन तयोस्सान्त्वनम् ॥ २ ॥

कर्णः—

इङ्गितज्ञास्तु मगधाः प्रेक्षितज्ञास्तु कोसलाः ।
अर्धोक्ताः कुरुपाञ्चालास् सर्वोक्ता दाक्षिणापथाः ॥ १

पार्वतीयास्तु विषमा यथैव गिरयस्तथा ।
सर्वज्ञा यवना राजञ् शूराश्चैव विशेषतः ॥ २

म्लेच्छास्स्वसंज्ञानिरता नानुक्तमितरे जनाः ।
प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः ॥ ३

स त्वमेतादृशश्शल्य मा ब्रूया वाक्यमुत्तरम् ॥ ३॥

एवं ज्ञात्वा जोषमास्व त्वमद्य
मा स्म क्रुधः पापभृतां वरिष्ठ ।
पूर्वं हत्वा त्वां सपुत्रं बलैश्च
पश्चाद्धंस्ये वासुदेवार्जुनौ च ॥ ४॥

शल्यः—

आतुराणां परित्यागस् स्वदाराणां च विक्रयः ।
तान् विदित्वाऽऽत्मनो दोषान् निर्मन्युर्भव मा क्रुधः ॥ ५॥

अङ्गेषु वर्तते कर्ण येषामधिपतिर्भवान् ॥ ६

रथातिरथसङ्ख्यायां यत् त्वां भीष्मस्तथोचिवान् ॥ ६॥

सर्वत्र ब्राह्मणास्सन्ति क्षत्रियास्सन्ति सर्वशः ।
वैश्याश्शूद्रास्तथा कर्ण स्त्रियस्सत्यश्च सुव्रताः॥ ७॥

रमन्ते चोपहासेन पुरुषाः पुरुषैस्सह ।
[1]अन्योन्येन मदक्षीबा देशे देशे च मैथुनम् ॥ ८॥

परवाच्येषु निपुणस् सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानाति जानन्नपि स मुह्यते ॥ ९॥

[2]सर्वत्र सन्ति राजानस् स्वं स्वं धर्ममनुव्रताः ।
दुर्मनुष्यान् निगृह्णन्तस् सन्ति सर्वत्र धार्मिकाः ॥ १०॥

न कर्ण देशसामान्यात् सर्वः पापं निषेवते ।
यादृशास्तु स्वभावेन देवास्तांस्तादृशान् विदुः ॥ ११॥

सञ्जयः—

ततो दुर्योधनो राजा कर्णशल्याववारयत् ।
सखिभावेन राधेयं शल्यं सौजन्यकेन च ॥ १२॥

ततो निवारितः कर्णो धार्तराष्ट्रेण मारिष ।
प्रहस्य तत्र राजेन्द्र याहि शल्येत्यचोदयत् ॥ १३॥

ततः प्रयान्तं राधेयं मद्रराजस्स्मयन्निव ।
अवधूय इदं वाक्यम् अब्रवीत् कुरुसन्निधौ ॥ १४॥

---

1. ख—इदमर्धं नास्ति 2. अ-ख—नास्तीदमर्धम्

शल्यः—

चमूं तवेमां विपुलं समृद्धाम्
असङ्ख्येयामश्वनराकुलां च ।
तथा प्रवेष्टा समरे धनञ्जयः
कक्षं दहन् दीप्त इवाश्रयाशी ॥ १५॥
रथे स्थितौ वीरवरौ वरेण्यौ
सिंहस्कन्धौ लोहितपद्मनेत्रौ ।
द्रष्टा भवानद्य विना प्रयत्नात्
तथाहीमे शकुना वेदयन्ति ॥ १६॥
अद्य द्रष्टाऽसि तं वीरं श्वेताश्वं कृष्णसारथिम् ।
निघ्नन्तं शात्रवान् सङ्ख्ये यं कर्ण परिपृच्छसि ॥ १७॥
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ ।
वासुदेवार्जुनौ कर्ण द्रष्टाऽस्यमितविक्रमौ ॥ १८॥
सारथिर्यस्य गोविन्दो गाण्डीवं यस्य कार्मुकम् ।
तं चेद्धन्तासि राधेय त्वं नो राजा भविष्यसि ॥ १९॥
प्रवात्येष महावायुर् अभितस्तव वाहिनीम् ।
क्रव्यादा व्याहरन्त्येते मृगाः कुर्वन्ति भैरवम् ॥ २०॥
पश्य कर्ण महाघोरं भयं वै रोमहर्षणम् ।
अर्के जीमूतसङ्काशः कबन्धो वार्य तिष्ठति ॥ २१॥
पश्य यूथं बहुशतं मृगाणां सर्वतोदिशम् ।

ररास दीप्तलाङ्गूलम् आदित्यमभितस्स्थितम् ॥ २२॥

पश्य काकांश्च गृध्रांश्च समवेतान् सहस्रशः ।
[1]आदित्यमभिवीक्षन्ते ह्यशिवाः कर्ण सस्वराः ॥ २३॥

श्वेतवाजिसमायुक्ते तव कर्ण महारथे ।
पताकाः प्रज्वलन्त्येता ध्वजश्चातीव कम्पते ॥ २४॥

सवेपथून् हयान् पश्य महाकायान् मनोजवान् ।
प्लवमानान् महावीर्यान् आकाशे गरुडानिव ॥ २५॥

ध्रुवमेषु निमित्तेषु भूमिमावृत्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ॥ २६॥

शङ्खानां तुमुलश्शब्दश् श्रूयते रोमहर्षणः ।
आनकानां च राधेय मृदङ्गानां च हन्यताम् ॥ २७॥

शृणु शब्दान् बहुविधान् नराश्वरथदन्तिनाम् ।
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम् ॥ २८॥

हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्मिताः ।
सहेमचन्द्रताराभाः पताकाः किङ्किणीयुताः ॥ २९॥

नानावर्णा रणे भान्ति श्वसनेन प्रकम्पिताः ।
पश्य कर्णार्जुनस्यैतास् सौदामिन्य इवाम्बुदे ॥ ३०॥

ध्वजाः कणकणायन्ते वातेनातिसमीरिताः ।
सपताका रथाश्चापि पाञ्चालानां महात्मनाम् ॥ ३१॥

एष रेणुस्समुद्भूतो दिवमावृत्य तिष्ठति ।
गजवाजिप्रणुन्ना च कम्पते कर्ण मेदिनी ॥ ३२॥

श्रूयते मेघसङ्काशो रथनेमिस्वनस्तथा ।
पश्य कुन्तीसुतं वीरं बीभत्सुमपराजितम् ॥ ३३॥

प्रहरिष्यन्तमायान्तं कपिप्रवरकेतनम् ॥ ३४

रथाश्वगजपत्त्योघांस् तावकान् युधि निघ्नतः ।
ध्वजाग्रं दृश्यते ह्यस्य ज्याशब्दश्चैव श्रूयते ॥ ३५

एष संशप्तकाहूतस् तानेवाभिमुखो गतः ।
करोति कदनं चैष सङ्ग्रामे द्विषतां बली ॥ ३६

सञ्जयः—

इति ब्रुवाणं मद्रेशं कर्णः प्रोवाच मन्युमान् ॥ ३६॥

कर्णः—

पश्य संशप्तकैः क्रुद्धैस् समन्तात् समभिद्रुतम् ।
एष सूर्य इवाम्भोदैश् छन्नः पार्थो न दृश्यते ॥ ३७॥

एष दान्तोऽर्जुनश्शल्य निमग्नश्शोकसागरे ॥ ३८

शल्यः—

वरुणं कोऽम्भसा हन्याद् इन्धनेन च कोऽनलम् ।
को वाऽनिलं निगृह्णीयात् पिबेद्वा को महार्णवम् ॥ ३९

ईदृग्रूपमहं मन्ये पार्थस्य युधि निर्जयम् ।
न हि शक्योऽर्जुनो जेतुं युधि देवासुरैरपि ॥ ४०

अथैवं परितोषस्ते वाग्भिस्त्वं सुमना भव ।
न हि शक्यो युधा जेतुम् अन्यं कुरु मनोरथम् ॥ ४१

बाहुभ्यामुद्धरेद्भूमिं दहेत् क्रुद्ध इमाः प्रजाः ।
पातयेत् त्रिदिवाद्देवान् नार्जुनं समरे जयेत् ॥ ४२

पश्य कुन्तीसुतं भीमं वीरमक्लिष्टकारिणम् ।
प्रहसन्तं महाबाहुं स्थितं मेरुमिवाचलम् ॥ ४३

अमर्षी पुरुषव्याघ्रस् सदा वैरमनुस्मरन् ।
एष भीमो जयप्रेप्सुर् युधि तिष्ठति वीर्यवान् ॥ ४४

एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
तिष्ठत्यसुकरस्सङ्ख्ये परैः परपुरञ्जयः ॥ ४५

एतौ च पुरुषव्याघ्रावाश्विनेयौ महारथौ ।
नकुलस्सहदेवश्च तिष्ठतो युधि दुर्जयौ ॥ ४६

एते तिष्ठन्ति वार्ष्णेयाः पञ्च पञ्चाचला इव ।
योत्स्यमाना महावीर्या भीमार्जुनसमा युधि ॥ ४

एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः ।
हीनास्सत्यजिता वीरास् तिष्ठन्ति परमौजसः ॥ ४८

यत्र कृष्णार्जुनौ वीरौ यत्र राजा युधिष्ठिरः ।
तत्र धर्मश्च सत्यं च यतो धर्मस्ततो जयः ॥ ४९

सञ्जयः—

इति संवदतोरेवं तयोः पुरुषसिंहयोः ।
ते सेने समसज्जेतां गङ्गायमुनवद्भृशम् ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

---

## ॥ चत्वारिंशोऽध्यायः ॥

दुर्योधनेन सेनाप्रोत्साहनम् ॥ १ ॥ भीमेन दुर्योधनपराजयपूर्वकं गजानीकवधः ॥ २ ॥

---

सञ्जयः—

दुर्योधनस्ततः कर्णम् उपेत्य भरतर्षभ ।
अब्रवीन्मद्रराजं च तथैवान्यान् महारथान् ॥ १

दुर्योधनः—

यदृच्छयाऽयमभ्यगमो धर्मः परमकस्सखा ।
सुखिनः क्षत्रिया[1]श्शल्य लभन्ते युद्धमीदृशम् ॥ २

यादृशं क्षत्रियैश्शूरैश् शूराणां दीव्यतां युधि ।
इष्टं भवति राधेय तदिदं समुपस्थितम् ॥ ३

---

1. क-ङ—कर्ण घ—:पार्थाः

हत्वा तु पाण्डवान् युद्धे स्थिरामुर्वीं प्रशासथ ।
निहता वा परैर्युद्धे वीरलोकानवाप्स्यथ ॥ ४

सञ्जयः—
दुर्योधनस्य वचनं श्रुत्वा तत् क्षत्रियर्षभाः ।
सिंहनादानुदक्रोशन् वादित्राणि च जघ्निरे ॥ ५

तस्मिन् प्रमुदिते सैन्ये त्वदीये भरतर्षभ ।
हर्षयंस्तावकान् योधान् द्रौणिर्वचनमब्रवीत् ॥ ६

अश्वत्थामा—
प्रत्यक्षं सर्वसैन्यानां भवतां चापि पश्यताम् ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ७

स तेनाहममर्षेण पित्रर्थे चापि भारत ।
धृष्टद्युम्नमहत्वाऽहं न विमोक्ष्यामि दंशनम् ॥ ८

कृत्वाऽनृतां प्रतिज्ञां वो नास्मि प्राप्तो महत् फलम् ।
अर्जुनं भीमसेनं च यश्च मां प्रतियोत्स्यति ॥ ९
सर्वांस्तान् प्रमथिष्यामि इति मे निश्चिता मतिः ॥ ९॥

सञ्जयः—
एवमुक्ते ततस्सर्वा हर्षिता भारती चमूः ।
अभ्यवर्तत कौन्तेयांस् तथा तां चापि पाण्डवाः ॥ १०॥

स सन्निपातो रथयूथपानां
महाहवे भारत लोभनीये ।

जनक्षयः कालयुगान्तकल्पः
प्रावर्तताग्रे कुरुसृञ्जयानाम् ॥ ११॥

ततः प्रवृत्ते युधि सम्प्रहारे
भूतानि सर्वाणि सदैवतानि ।
आसन् समेतानि सहाप्सरोभिर्
[1]निरीक्षतीभिर्युधि वीरसङ्घान् ॥ १२॥

दिव्यैश्च गन्धैः परमैश्च पुष्पैर्
अन्यैश्च रत्नैर्विविधैर्नराग्र्यान् ।
रणेषु कर्मोद्वहतः प्रहृष्टान्
अनन्दयन्नप्सरसः प्रहृष्टाः ॥ १३॥

समीरणस्तांस्तु निषेव्य गन्धान्
निषेवते तानपि योधमुख्यान् ।
निषेव्यमाणास्त्वनिलेन योधाः
परस्परं चुक्रुशुराजिमध्ये ॥ १४॥

तथा तु तस्मिंस्तुमुले प्रवृत्ते
दुर्योधनः क्रोधममृष्यमाणः ।
अवेक्ष्य भीमं बलिनं बलस्थस्
समार्पयत् क्षुद्रकाणां शतेन ॥ १५॥

---

1. ख-ध—निनीषतीभिर

दुश्शासनश्चित्रसेनश्च वीरस्
तथोलूकः कितवस्सौबलश्च ।
गजानीकैस्सर्वतो भीमसेनं
तथा विषक्तं सहसैवाभ्यगच्छन् ॥ १६॥

तमापतन्तं सम्प्रेक्ष्य गजानीकं वृकोदरः ।
दुर्योधनं महाबाहुश् शरवर्षैरवाकिरत् ॥ १७॥

दुर्योधनं ततो भीमस् सायकैश्शतशश्शितैः ।
पाण्डवो विमुखीकृत्य गजानभ्यद्रवद्बली ॥ १८॥

ततः पावकसङ्काशैर् भीमबाणैरवक्रगैः ।
शलभैरिव नागांस्तान् अर्दयामास पाण्डवः ॥ १९॥

ततः कुञ्जरयूथानि भीमसेनो महाबलः ।
व्यधमन्निशितैर्बाणैर् महावातो घनानिव ॥ २०॥

[1]नित्यमत्ताश्च मातङ्गाश् शूरैर्मत्तैरधिष्ठिताः ।
आरोहकैर्महामात्रैस् तोमराङ्कुशपाणिभिः ॥ २१॥

सुवर्णजालैः प्रच्छन्ना मणिजालैश्च कुञ्जराः ।
रूप्यजाम्बूनदाभासाः क्षुरमालाभ्यलङ्कृताः ॥ २२॥

वध्यमानाश्शरै राजन् भीमसेनेन ते गजाः ।

---

1. अ-ख—इत आरभ्य षोडशार्धानि उपरितनाध्याये भिन्नभिन्नस्थलेषु दृश्यन्ते

विभिन्नहृदयाः केचित् तत्रैव ह्यपतन् भुवि ॥ २३॥

निपतद्भिर्महावेगैर् हेमभाण्डविभूषितैः ।
अशोभत महाराज धातुचित्रैरिवाचलैः ॥ २४॥

दीप्ताभरणवद्भिश्च गजपृष्ठान्निपातितैः ।
सञ्चरद्भिशुशुभे राजन् क्षीणपुण्यैरिवामरैः ॥ २५॥

महापरिघसङ्काशौ चन्दनागरुरूषितौ ।
अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ २६॥

तस्य ज्यातलनिर्घोषम् अस्यतस्सव्यदक्षिणम् ।
तं श्रुत्वाऽभ्यद्रवन् नागा भीमसेनभयार्दिताः ॥ २७॥

तस्य भीमस्य तत् कर्म राजन्नेकस्य धीमतः ।
अपश्याम महाराज तदद्भुतमिवाभवत् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ७२ ॥ कर्णपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

## ॥ एकचत्वारिंशोऽध्यायः ॥

सेनाद्वये व्यूहरचनावर्णनम् ॥

[1]ततः परानीकमिदं व्यूढमप्रतिमं महत् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ १

प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥ २

वेपमानभुजः क्रोधाद् युद्धशौण्डः प्रतापवान् ।
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥ ३

व्यधमत् पाण्डवीं सेनाम् आसुरीं मघवानिव ।
युधिष्ठिरं चाभिभवन्नपसव्यं चकार ह ॥ ४

कर्णस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
सङ्ग्राहेण च रश्मीनां समकम्पन्त सृञ्जयाः ॥ ५

तानि सर्वाणि सैन्यानि कर्णे दृष्ट्वा विशां पते ।
बभूवुस्सम्प्रहृष्टानि तावकानि युयुत्सया ॥ ६

अश्रूयन्त ततो वाचस् तावकानां विशां पते ॥ ६॥

सैनिकाः—

कर्णार्जुनमहायुद्धम् एतदद्य भविष्यति ॥ ७

1. अ-ख—श्लोकार्धानि न सन्ति

[1]अद्य दुर्योधनो राजा हतामित्रो भविष्यति ।
अद्य कर्णं रणे दृष्ट्वा फल्गुनो विद्रविष्यति ॥ ८

अद्य तावद्वयं युद्धे कर्णस्यैवानुगामिनः ।
कर्णबाणमयं भीमं युद्धं द्रक्ष्याम संयुगे ॥ ९

चिरकालागतमिदम् अद्येदानीं भविष्यति ।
अद्य द्रक्ष्याम सङ्ग्रामं घोरं दैवासुरोपमम् ॥ १०

अद्येदानीं महद्युद्धं भविष्यति भयानकम् ।
अद्येदानीं जयो नित्यम् एकस्यैकस्य वा रणे ॥ ११

अर्जुनं किल राधेयो वधिष्यति महारणे ।
अथवा कं नरं लोके न स्पृशन्ति मनोरथाः ॥ १२

सञ्जयः—

इत्युक्त्वा विविधा वाचः कुरवः कुरुनन्दन ।
आजघ्नुः पटहांश्चैव तूर्यांश्चैव सहस्रशः ॥ १३

भेरीनादांश्च विविधान् सिंहनादांश्च पुष्कलान् ।
मुरजानां महाशब्दान् आनकानां महारवान् ॥ १४

नृत्यमानाश्च बहवस् तर्जमानाश्च मारिष ।
अन्योन्यमभ्ययुर्युद्धे युद्धरङ्गगता नराः ॥ १५

तेषां पदाता नागानां पादरक्षास्समन्ततः ।

---

1. ख—इदमर्धं नास्ति

पट्टसासिधराश्शूराश् चापबाणमुसुण्ठिनः ॥　　　　१६

भिण्डिपालधराश्चैव शूलहस्तास्सुचक्रिणः ।
तेषां समागमो घोरो देवासुररणोपमः ॥　　　　१७

धृतराष्ट्रः—

कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् ।
धृष्टद्युम्नमुखान् सङ्ख्ये भीमसेनाभिरक्षितान् ॥　　　　१८

के वा पक्षे प्रपक्षे च मम सैन्यस्य सञ्जय[1] ।

---

सञ्जयः—

1. अ—ततः परानीकभिदं व्यूहमप्रतिमं महत् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥

प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥

वेपमान इव क्रोधाद् युद्धशौण्डः प्रतापवान् ।
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥

व्यधमत् पाण्डवीं सेनाम् आसुरीं मघवानिव ।
युधिष्ठिरं चाभिभवन्नपसव्यं चकार ह ॥

तेषां पदाता नागानां पादरक्षास्समन्ततः ।
पट्टसासिधराश्शूराश् चापबाणमुसुंठिनः ॥

भिण्डिपालधराश्चैव शूलहस्तास्सुचक्रिणः ।
तेषां समागमो घोरो देवासुररणोपमः ॥

प्रविभज्य यथान्यायम् अवतस्थुस्सुदंशिताः ॥ १

कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान् ।
कथं चैतन्महद्युद्धं प्रावर्तत सुदारुणम् ॥ २

क्व च बीभत्सुरभवत् कर्णो यत्र व्यवस्थितः ।
को ह्यर्जुनस्य सान्निध्ये शक्तो जेतुं युधिष्ठिरम् ॥ २

सर्वभूतानि यो ह्येकः खाण्डवे जितवान् पुरा ।
कस्तमन्यस्तु राधेयात् प्रतियुद्ध्येज्जिजीविषुः ॥ २

सञ्जयः—

शृणु व्यूहस्य रचनाम् अर्जुनश्च यथा गतः ।
परिवार्य नृपान् सर्वान् सङ्ग्रामश्चाभवद्यथा ॥ २

कृपश्शारद्वतो राजन् मागधाश्च तरस्विनः ।
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ॥ २

तेषां प्रपक्षे शकुनिर् उलूकश्च महाबलः ।
सादिभिर्विमलप्रासैस् तदानीमभ्यरक्षताम् ॥ २

---

धृतराष्ट्रः—

कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् ।
धृष्टद्युम्नमुखान् सङ्ख्ये भीमसेनाभिरक्षितान् ॥
के वा पक्षे प्रपक्षे च मम सैन्यस्य सञ्जय ।

[ अधिकः पाठः

गान्धारैश्चाप्यसम्भ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पार्वतीयैश्च दुर्जयैः ॥ २६
शलभानामिव व्रातैः [1]पिशाचैरिव दुर्दृशैः ॥ २६॥
चतुर्विंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामं पक्षमपालयन् ॥ २७॥
समूहितास्तव सुतैः कृष्णार्जुनजिघांसवः ॥ २८
तेषां प्रपक्षाः काम्भोजाश् शकाश्च यवनैस्सह ।
निदेशात् सूतपुत्रस्य सरथाश्वेभपत्तयः ॥ २९
आह्वयन्तोऽर्जुनं तस्थुः केशवं च जिघांसवः ॥ २९॥
ततस्सेनामुखे कर्णो व्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदस्स्रग्वी पालयन् ध्वजिनीमुखम् ॥ ३०॥
रक्ष्यमाणस्सुसंरब्धैः पुत्रैश्शस्त्रभृतां वरैः ।
वाहिनीप्रमुखं वीरैस् सम्प्रकर्षन्नशोभत ॥ ३१॥
अशोकस्तु महाबाहुश् चन्द्रवैश्वानरद्युतिः ।
महाद्विपस्कन्धगतः पिङ्गलः प्रियदर्शनः ॥ ३२॥
दुश्शासनो वृतस्सैन्यैस् स्थितो व्यूहस्य पृष्ठतः ॥ ३३
तन्मध्ये स महाबाहुस् स्वयं दुर्योधनो नृपः ।
चित्राश्वैश्चित्रसन्नाहैस् सोदर्यैरभिरक्षितः ॥ ३४

1. ख—इतः षट् पादा न सन्ति

रक्ष्यमाणो महावीर्यैस् सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः ॥ ३५

अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ।
नित्यमत्ताश्च मातङ्गाश् शूरैर्म्लेच्छैरधिष्ठिताः ॥ ३६
अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ ३६॥

ते ध्वजैर्वैजयन्तीभिर् ज्वलद्भिः परमायुधैः ।
सादिभिश्चास्थिता रेजुर् धूयमाना इवाचलाः ॥ ३७॥

तेषां पदाता नागानां पादरक्षास्सहस्रशः ।
पट्टसासिधराश्शूरा बभूवुरनिवर्तिनः ॥ ३८॥

सादिभिस्स्यन्दनैर्नागैः पत्तिभिश्चाप्यलङ्कृतः ।
स व्यूहराजो विबभौ देवराजचमूपमः ॥ ३९॥

बार्हस्पत्यस्सुविहितो नायकेन विपश्चिता ।
नृत्यन्निव महाव्यूहः परेषामदधाद्भयम् ॥ ४०॥

तस्य पक्षप्रपक्षेभ्यो निस्सरन्ति युयुत्सवः ।
पत्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ ४१॥

ततस्सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः ।
धनञ्जयममित्रघ्नम् एकवीरमुवाच ह ॥ ४२॥

युधिष्ठिरः—

पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे ।

युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ४३॥

तत्समीपगतं ह्येतत् प्रत्यमित्रं महद्बलम् ।
यथा नाभिभवत्यस्मांस् तथा नीतिर्विधीयताम् ॥ ४४॥

सञ्जयः—
एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्भूपमब्रवीत् ॥ ४५

अर्जुनः—
यथा यथा भवानाह तत् सत्यं न तदन्यथा ।
यत्तस्य विहितं तात तत् करिष्यामि भारत ॥ ४६
प्रधानमथ चैवास्य विनाशं च करोम्यहम् ॥ ४६॥

युधिष्ठिरः—
तस्मात् त्वं जहि राधेयं भीमसेनस्सुयोधनम् ।
वृषसेनं च नकुलस् सहदेवोऽपि सौबलम् ॥ ४७॥

दुश्शासनं शतानीको हार्दिक्यं शिनिपुङ्गवः ।
धृष्टद्युम्नस्तथा द्रौणिं स्वयं योत्स्याम्यहं कृपम् ॥ ४८॥

द्रौपदेया धार्तराष्ट्राञ् छेषान् सह शिखण्डिना ।
ततस्तानहितान् शीघ्रम् अस्माकं घ्नन्तु मामकाः ॥ ४९॥

सञ्जयः—
इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः ।
व्यादिदेश स्वसैन्यानि स्वयमागाच्चमूमुखम् ॥ ५०॥

धनञ्जयो महाराज दक्षिणं पक्षमास्थितः ।

भीमसेनो महाबाहुर् वामं पक्षमुपाश्रितः ॥ ५१॥

सात्यकिर्द्रौपदेयाश्च स्वयं राजा च पाण्डवः ।
व्यूहस्य प्रमुखे तस्थुस् स्वेनानीकेन संवृताः ॥ ५२॥

स्वबलेनारिसैन्यं तत्:प्रत्यवस्थाप्य पाण्डवः ।
प्रत्यव्यूहत् पुरस्कृत्य धृष्टद्युम्नशिखण्डिनौ ॥ ५३॥

तत् सादिनागकलिलं पदातिरथसङ्कुलम् ।
[1]धृष्टद्युम्नमुखं व्यूहम् अशोभत महाबलम् ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ७३ ॥ कर्णपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[1][ अस्मिन्नध्याये ५४॥ श्लोकाः ]

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

---

धृतराष्ट्रः—

तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय ।
संशप्तकाः कथं पार्थं कथं कर्णश्च पाण्डवान् ॥ १

एतद्विस्तरतो युद्धं प्रब्रूहि कुशलो ह्यसि ।

---

1. ख—इदमर्धं नास्ति

न हि तृप्यामि वीराणां शृण्वानो युधि विक्रमम् ॥ २

सञ्जयः—

ततः संस्थितमथो दृष्ट्वा प्रत्यमित्रं महद्बलम् ।
प्रत्यव्यूहत् ततः कर्णो हितार्थं तनयस्य ते ॥ ३

तत् सादिनागकलिलं पदातिरथसङ्कुलम् ।
धृष्टद्युम्नमुखं घोरम् अशोभत महद्बलम् ॥ ४

पारावतसवर्णाश्वैश् चन्द्रसूर्यसमद्युतिः ।
स पार्षतो बभौ धन्वी कालो विग्रहवानिव ॥ ५

पार्षतं त्वभितस्तस्थुर् द्रौपदेया युयुत्सवः ।
सानुगा दीप्तवपुषश् चन्द्रं तारागणा इव ॥ ६

अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान् रणे ।
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन् गाण्डिवं धनुः ॥ ७

अथ संशप्तकाः पार्थम् अभ्यधावन् वधैषिणः ।
विजये धृतसङ्कल्पा मृत्युं कृत्वा निवर्तनम् ॥ ८

तदश्वसङ्घबहुलं पत्तिनागरथाकुलम् ।
उदीर्यमाणं संरब्धं धनञ्जयमभिद्रवत् ॥ ९

तदुद्यतं महत् सैन्यं सागरौघसमं जवे ।
पार्थवेलां समासाद्य विष्ठितं समदृश्यत ॥ १०

मृद्नन्तं शरवर्षौघैर् बलमर्जुनमार्दयत् ॥ १०॥

स सम्प्रहारस्तुमुलस् तेषामासीत् किरीटिना ।
तस्यैव तु यथा राजन् निवातकवचैस्सह ॥ ११॥

रथिनोऽश्वान् ध्वजान् पत्तीन् गजान् गजगतानपि ।
इषून् धनूंषि खड्गांश्च सगदान् सपरश्वथान् ॥ १२॥

सायुधानुद्यतान् बाहून् विविधान्यायुधानि च ।
चिच्छेद द्विषतां पार्थश् शिरांसि च सहस्रशः ॥ १३॥

तस्मिन् सैन्यमहावर्ते पातालावर्तसन्निभे ।
निमग्नं तं रथं दृष्ट्वा नेदुस्संशप्तका मुदा ॥ १४॥

[1]स पुरस्तादरीन् हत्वा पुनरुत्तरतोऽवधीत् ।
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ॥ १५॥

अथ पाञ्चालचेदीनां पाण्डवानां च सर्वशः ।
त्वदीयैस्सह सङ्ग्रामो बभूव भुवि दारुणः ॥ १६॥

कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः ।
धृष्टसेनास्सुसंरब्धा रथानीकैःप्रहारिभिः ॥ १७॥

कोसलैः काशिभिर्मत्स्यैः कारूशैः केकयैरपि ।
शूराश्शूरैर्भृशं जघ्नुस् सङ्ग्रामे रोमहर्षणे ॥ १८॥

तेषां तदाऽभवद्युद्धं देहपाप्मविनाशनम् ।
शूद्रविट्क्षत्रविप्राणां धर्म्यं स्वर्ग्यं यशस्करम् ॥ १९॥

---

1. ख—अर्धचतुष्टयं नास्ति

दुर्योधनोऽपि सहितो भ्रातृभिर्भरतर्षभ ।
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः ॥ २०॥

पाण्डवैस्सह पाञ्चालैश् चेदिभिः केकयैस्सह ।
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् ॥ २१॥

कर्णोऽपि निशितैर्बाणैर् विनिपात्य महाचमूम् ।
प्रमृद्य च युधि श्रेष्ठान् युधिष्ठिरमपीडयत् ॥ २२॥

विपत्रायुधदेहासून् कृत्वा योधान् सहस्रशः ।
युक्तान् स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् ॥ २३॥

तद्विगाह्य रथानीकं सूतपुत्रो महारथः ।
नदीं प्रवर्तयामास शोणितौघतरङ्गिणीम् ॥ २४॥

शोणितोदां क्षुद्रमत्स्यां नागनक्रां दुरत्ययाम् ।
[1]मांसमज्जाकर्दमिनीं चक्रकूर्ममहोडुपाम् ॥ २५॥

पातितैर्मेघसङ्काशैस् तत्र तत्र महाद्विपैः ।
अशनीभिरिव ध्वस्ता नदी राजन् विराजते ॥ २६॥

तां शरोर्मिमहावर्तां छत्रहंससमाकुलाम् ।
तनुत्रोष्णीषसङ्घाटाम् अस्थिपाषाणसङ्कुलाम् ॥ २७॥

अपारामनपारां च शङ्खदुन्दुभिघोषिणीम् ।
रौद्रां नदीं महाराज रजसा सर्वतोवृताम् ॥ २८॥

---

1. ख—अर्धचतुष्टयं नास्ति

अतितीक्ष्णां नराकीर्णां नदीमन्तकगामिनीम् ।
समं च विषमं चैव समायान्तीं महाभयाम् ॥ २९॥

आगुल्फाश्चात्र सीदन्ति नराश्शोणितकर्दमैः ।
नरैरभिपरिक्षिप्ता यथा राजन् महाद्रुमाः ॥ ३०॥

ततस्ते तत्र तत्रैव प्रतरन्तो महानदीम् ।
विचेरुस्सर्वतो योधा नौवारणमहारथैः ॥ ३१॥

शोणितेन समं राजन् कृतमासीत् समन्ततः ।
नदीवेगैर्यथा भूमिस् तद्वदासीद्विशां पते ॥ ३२॥

एवं भारत सङ्ग्रामो गजवाजिजनक्षयः ।
कुरूणां सृञ्जयानां च देवासुरसमोऽभवत् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ७३ ॥ कर्णपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[ अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

धृतराष्ट्रः—

[1]युक्तां प्रविश्य पार्थानां सेनां कुर्वन् बलक्षयम् ।
कर्णो राजानमायच्छत् तन्ममाचक्ष्व सञ्जय ॥ १

के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर् युधिष्ठिरमपीडयत् ॥ २

सञ्जयः—

धृष्टद्युम्नमुखान् पार्थान् दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत् त्वरितः पाञ्चालाञ् छत्रुकर्शनः ॥ ३

तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महाराज हंसास्सर इवोष्णगे ॥ ४

ततश्शङ्खसहस्राणां निस्स्वनो हृदयङ्गमः ।
प्रादुरासीदुभयतो भेरीशब्दस्सुदारुणः ॥ ५

नानाबाणनिनादश्च द्विपाश्वरथनिस्स्वनः ।
सिंहनादश्च वीराणाम् अभवद्दारुणस्तदा ॥ ६

साद्रिद्रुमार्णवा भूमिस् सघनाम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ॥ ७

1. अ—अर्धचतुष्टयं नास्ति

इति भूतानि तं शब्दं मेनिरे विव्यथुस्तदा ।
यानि चाप्यल्पसत्त्वानि प्रायस्तानि मृतानि वै ॥ ८

अथ कर्णो भृशं क्रुद्धश् शीघ्रमस्त्रमुदीरयन् ।
जघान पाण्डवीं सेनाम् आसुरीं मघवानिव ॥ ९

स पाण्डवचमूं कर्णः प्रविश्य विविधैश्शरैः ।
प्रभद्रकाणां प्रवरान् न्यहनत् सप्तसप्ततिम् ॥ १०

ततस्सुपुङ्खैर्विशिखैर् अथ श्रेष्ठान् रथेषुभिः ।
अहनत् पञ्चविंशत्या पाञ्चालान् पञ्चविंशतिम् ॥ ११

सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः ।
चेदिकानवधीद्वीरश् शतशोऽथ सहस्रशः ॥ १२

तं तथा समरे कर्म कुर्वाणमपराजितम् ।
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ॥ १३

ततस्सन्धाय विशिखान् पञ्च भारत दुस्सहान् ।
पाञ्चालानवधीत् पञ्च कर्णो वैकर्तनो वृषा ॥ १४

भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत ।
तपनं शूरसेनं च पाञ्चालानहनद्रणे ॥ १५

पाञ्चालेषु तु वीरेषु वध्यमानेषु सायकैः ।
हाहाकारो महानासीत् पाञ्चालानां महाहवे ॥ १६

तेषां सङ्कीर्यमाणानां हाहाकारं प्रकुर्वताम् ।

पुनरेव च तान् कर्णो जघानाशु पतत्रिभिः ॥ १७

चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ ।
सुषेणस्सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ॥ १८

पृष्ठगोपस्तु कर्णस्य ज्येष्ठः पुत्रो महारथः ।
वृषसेनोऽन्वयात् कर्णं पृष्ठतः परिपालयन् ॥ १९

धृष्टद्युम्नस्सात्यकिश्च द्रौपदेया वृकोदरः ।
जनमेजयश्शिखण्डी च प्रवीराश्च प्रभद्रकाः ॥ २०

चेदिकेकयपाञ्चाला यमौ मात्स्याश्च दंशिताः ।
समभ्यधावन् राधेयं जिघांसन्तः प्रहारिणः ॥ २१

तथा तं विविधैश्शस्त्रैश् शरधाराभिरेव च ।
समभ्यवर्षन्नर्दन्तः प्रावृषीवाम्बुदा गिरिम् ॥ २२

पितरं च परीप्सन्तः कर्णपुत्राः प्रहारिणः ।
त्वदीयाश्चापरे वीराः परवीरानवारयन् ॥ २३

सुषेणो भीमसेनस्य च्छित्त्वा भल्लेन कार्मुकम् ।
नाराचैस्सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ॥ २४

अथान्यद्धनुरादाय बलवद्वेगवत्तरम् ।
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ २५

विव्याध चैनं दशभिः क्रुद्धो राजन् महेषुभिः ।
कर्णं तु तूर्णं विव्याध त्रिसप्तत्या शितैश्शरैः ॥ २६

सत्यसेनं च दशभिस् साश्वसूतायुधध्वजम् ।
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ २७

क्षुरप्रकृत्तं तत्तस्य शिरश्चन्द्रनिभाननम् ।
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ २८

हत्वा कर्णसुतं भीमस् तावकान् पुनरार्दयत् ।
कृपहार्दिक्ययोश्चापे च्छित्वा तावप्यमर्दयत् ॥ २९

दुश्शासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः ।
उलूकं च पतत्रिं च चकार विरथावुभौ ॥ ३०

हे सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम् ।
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ॥ ३१

अथ प्रगृह्यान्यमपि सुपर्वाणं सुतेजनम् ।
सुषेणायासृजद्भीमस् तमप्यस्याच्छिनद्वृषा ॥ ३२

पुनः कर्णस्त्रिसप्तत्या भीमसेनमथेषुभिः ।
पुत्रं परीप्सन् विव्याध क्रुद्धश्शत्रुजिघांसया ॥ ३३

[1]नकुलं पञ्चभिर्बाणैर् बाह्वोरुरसि चार्पयत् ॥ ३३॥

नकुलस्तं तु विंशत्या विद्ध्वा भारत संयुगे ।
ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ३४॥

तं सुषेणो महाराज विद्ध्वा दशभिरायसैः ।

---

1. अ—षडर्धानि न सन्ति

धनुरस्याच्छिनच्छीघ्रं क्षुरप्रेण महारथः ॥ ३५॥

अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुषेणं बहुभिर्बाणैर् वारयामास संयुगे ॥ ३६॥

तस्य बाणैर्दिशो राजन्नाच्छाद्य परवीरहा ।
आजघ्ने सारथिं क्रुद्धस् सुषेणं च पतत्रिभिः ॥ ३७॥
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्तदा ॥ ३८

अथान्यद्धनुरादाय सुषेणः परवीरहा ।
अविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ॥ ३९

तद्युद्धमभवत् तेषां घोरं दैवासुरोपमम् ।
निघ्नतां सायकैस्तूर्णम् अन्योन्यस्य वधं प्रति ॥ ४०

सात्यकिर्वृषसेनं तु विद्ध्वा सप्तभिरायसैः ।
पुनर्विव्याध सप्तत्या सारथिं च त्रिभिश्शरैः ॥ ४१

वृषसेनस्तु शैनेयं शरेणानतपर्वणा ।
आजघान महाराज शङ्खदेशे महारथम् ॥ ४२

शैनेयो वृषसेनेन पत्रिणा परिपीडितः ।
कोपं चक्रे महाराज क्रुद्धो वेगं च दारुणम् ॥ ४३
जग्राहेषुवरान् वीरश् शीघ्रं वै दश पञ्च च ॥ ४३॥

सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभिश्शरैः ।
धनुश्चिच्छेद चैकेन जघानाश्वांश्च सप्तभिः ॥ ४४॥

ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत् ।
अथापतच्च स्वरथे मुहूर्तात् पुनरुत्थितः ॥ ४५॥

अथो जिघांसुश्शैनेयं खड्गचर्मभृदभ्ययात् ॥ ४६

तस्य चापततश्शीघ्रं वृषसेनस्य सात्यकिः ।
वाराहकर्णैर्दशभिर् विव्याधास्यासिचर्मणी ॥ ४७

दुश्शासनस्तु तं दृष्ट्वा विरथं व्यायुधं तथा ।
आरोप्य स्वरथं तूर्णम् अपोवाह रथान्तरम् ॥ ४८

अथान्यं रथमास्थाय वृषसेनो महारथः ।
कर्णस्य युधि दुर्धर्षे पुनः पृष्ठमपालयत् ॥ ४९

युयुधानं तु राधेयो नवैर्नवभिरायसैः ।
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ॥ ५०

स चान्यं रथमास्थाय विधिवत् कल्पितं पुनः ।
युयुधे पाण्डवैस्सार्धं कर्णस्य व्यधमद्बलम् ॥ ५१

धृष्टद्युम्नस्ततः कर्णम् अविध्यद्दशभिश्शरैः ।
[1]द्रौपदेयास्त्रिसप्तत्या युयुधानश्च सप्तभिः ॥ ५२

भीमसेनश्चतुष्षष्ट्या सहदेवश्च सप्तभिः ।
नकुलस्त्रिंशता बाणैश् शतानीकश्च सप्तभिः ॥ ५३

शिखण्डी दशभिर्वीरो धर्मराजश्शतेन च ।

---

1. ख—इदमर्धं नास्ति

एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः ॥ ५४

अभ्यर्दयन् महेष्वासं सूतपुत्रं विशां पते ॥ ५४॥

तान् सूतपुत्रो विशिखैर् दशभिर्दशभिश्शितैः ।
रथप्रचारान् विचरन् प्रत्यविध्यदरिन्दमः ॥ ५५॥

[1]सात्यकिं भीमसेनं च धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयांश्च संरब्धान् यतमानान् महारथान् ॥ ५६॥

पश्यतां सर्वसैन्यानाम् अथैतान् सूतनन्दनः ।
विरथान् रथिनां श्रेष्ठान् निमेषार्धाच्चकार ह ॥ ५७॥

अमोघत्वाच्च बाणानां भूतसङ्घा विसिस्मिरे ॥ ५८

तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः ।
अपश्याम महाराज तदद्भुतमिवाभवत् ॥ ५९

नाप्याददानं ददृशुस् सन्दधानं च सायकान् ।
विमुञ्चन्तं च संरम्भाद् अपश्यन्नैव तं जनाः ॥ ६०

प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात् ।
न तं पश्याम राजेन्द्र क नु कर्णोऽद्य तिष्ठति ॥ ६१

इषूनेव स्म पश्यामो विनिकीर्णान् समन्ततः ।
[2]छादयानान् दिशो राजञ् शलभानामिव प्रजान् ॥ ६२

---

1. क—अर्धद्वयं नास्ति
2. ख—अर्धद्वयं नास्ति

तस्य तैरिषुभिस्तीक्ष्णैस् सम्पतद्भिस्सहस्रशः ।
[1]मरीचिभिरिवोष्णांशोश् शरैस्सन्नतपर्वभिः ॥ ६३

व्याप्तास्सर्वा दिशो राजन् योधाश्च ददृशुस्तदा ॥ ६३॥

शरैस्संवृतमाकाशं ताम्राभ्रैरिव चाभवत् ॥ ६४

द्यौर्वियद्भूर्दिशश्चैव प्रच्छन्ना निशितैश्शरैः ।
अरुणाभ्रावृताकारास् तस्मिन् देशेऽभवंस्तदा ॥ ६५

ततः पुनरमेयात्मा कर्णो राजन् महारथः ।
न्यहनत् समरे योधान् योधवृत्तमनुष्ठितः ॥ ६६

नृत्यन्निव हि राधेयश् चापहस्तो रणाजिरे ।
यैर्विद्धः प्रत्यविद्ध्यत् तान् एकैकं त्रिगुणैश्शरैः ॥ ६७

दशभिर्दशभिश्चैव पुनर्विव्याध नानदत् ।
साश्वसूतध्वजच्छत्रास् ततस्ते विवरं ददुः ॥ ६८

ते हन्यमानाः कर्णेन पलायन्ते दिशो दश ।
नादयन्तो दिशस्सर्वाः कर्णत्रस्ता विचेतसः ॥ ६९

तान् प्रमृद्य महेष्वासान् राधेयश्शरवृष्टिभिः ।
राजानीकमसम्बाधं प्राविशच्छत्रुकर्शनः ॥ ७०

स रथांस्त्रिशतं हत्वा चेदीनामनिवर्तिनाम् ।
राधेयो निशितैर्बाणैस् ततोऽभ्यागाद्युधिष्ठिरम् ॥ ७१

---

1. अ-ख-घ-ङ—अर्धद्वयं नास्ति

ततस्ते विरथाश्शूरा रथानन्यान् समास्थिताः ।
परिवव्रुर्महाराज धर्मपुत्रं युधिष्ठिरम् ॥ ७२

ततस्ते च परे राजञ् छिखण्डी च ससात्यकिः ।
राधेयात् परिरक्षन्तो राजानं पर्यवारयन् ॥ ७३
मुञ्चन्तो विविधान् बाणान् स्वर्णपुङ्खाञ् शिलाशितान् ॥ ७३॥

तथैव तावकास्सर्वे कर्णं दुर्वारणं रणे ।
यत्तसेना महेष्वासा पर्यरक्षन्त सर्वशः ॥ ७४॥

नादो वादित्रघोषाणां प्रादुरासीत् समन्ततः ।
सिंहनादाश्च सञ्जज्ञुश् शूराणामनिवर्तिनाम् ॥ ७५॥

ततः पुनस्समाजग्मुर् अभीताः कुरुसृञ्जयाः ।
युधिष्ठिरमुखाः पार्थास् सूतपुत्रमुखा वयम् ॥ ७६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ७६॥ श्लोकाः ]

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

कर्णयुधिष्ठिरयुद्धम् ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥

सञ्जयः—

विदार्य कर्णस्तां सेनां धर्मराजमुपाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितम् ॥ १

नानायुधसहस्राणि प्रेषितान्यरिभिर्वृषा ।
हत्वा बाणगणैरुग्रैस् तानविध्यदसम्भ्रमः ॥ २

उच्चकर्त शिरांस्युग्रो बाहूनूरूंश्च सूतजः ।
ते हता भूतले पेतुः प्रद्रुताश्चापरे दिशः ॥ ३

द्रविलान्ध्रनिषादास्तु पुनस्सात्यकिचोदिताः ।
अभ्यद्रवञ्जिघांसन्तः पत्तयः कर्णमाहवे ॥ ४

ते विबाहुशिरश्शस्त्रास् सहसा कर्णसायकैः ।
निपेतुरुर्व्यां युगपच् छिन्नं तालवनं यथा ॥ ५

एवं योधशतान्याजौ सहस्राण्ययुतानि च ।
हतान्यगुर्महीं देहैर् यशसाऽऽपूर्य वै दिशः ॥ ६

अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम् ।
रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधा इव ॥ ७

[1]स तान् प्रमृद्याभ्यपतत् पुनरेव युधिष्ठिरम् ।
मन्त्रौषधं विना व्याधिर् विधिहीनाः क्रिया इव ॥ ८

स राजगृध्नुभी रुद्धः पाण्डुपाञ्चालकेकयैः ।
नाशकत् तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ९

ततो युधिष्ठिरः कर्णम् अदूरस्थं निवारितम् ।
तैर्योधप्रमुखैर्वीरं दृष्ट्वा विव्याध सायकैः ॥ १०

कर्णः पार्थशरैर्विद्धस् तोत्रार्दित इव द्विपः ।
प्रमथ्य सहितान् वीरान् युधिष्ठिरमपीडयत् ॥ ११

ततो युधिष्ठिरः कर्णम् आसाद्य जयतां वरम् ।
अब्रवीत् परवीरघ्नं क्रोधसंरक्तलोचनः ॥ १२

युधिष्ठिरः—

कर्ण कर्ण वृथादृष्टे सूतपुत्र वचश्शृणु ।
सदा स्पर्धसि सङ्ग्रामे फल्गुनेन यशस्विना ॥ १३

यथाऽस्मान् द्विषसे नित्यं धार्तराष्ट्रमनुव्रतः ।
यद्बलं यच्च ते वीर्यं प्रद्वेषो यश्च पाण्डुषु ॥ १४

तत् सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ।
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महारणे ॥ १५

सञ्जयः—

एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्ततः ।

---

1. क—अर्धचतुष्टयं नास्ति

सुवर्णपुङ्खैर्दशभिर् विव्याधायस्मयैश्शरैः ॥ १६

तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिन्दमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १७

सोऽवज्ञाय च निर्विद्धस् सूतपुत्रेण पाण्डवः ।
प्रजज्वाल महाबाहुर् हविषा हव्यवाडिव ॥ १८

ततो विष्फार्य सुमहच् चापं हेमपरिष्कृतम् ।
समाधत्त शितं बाणं गिरीणामपि दारणम् ॥ १९

[1]ततः पूर्णायतं तीक्ष्णं यमदण्डनिभं शरम् ।
मुमोच त्वरितं राजा सूतपुत्रजिघांसया ॥ २०

स तु वेगवता मुक्तो बाणो वज्राशनिप्रभः ।
बिभेद समरे कर्णं सव्यपार्श्वे स्तनान्तरे ॥ २१

स तु तेन प्रहारेण पीडितः प्रमुमोह वै ।
स्रस्तबाहुर्महेष्वासो धनुरुत्सृज्य कम्पितः ॥ २२

ततो हाहाकृतं सर्वं धार्तराष्ट्रबलं महत् ।
विवर्णमुखमार्तं च कर्णं दृष्ट्वा तथागतम् ॥ २३

सिंहनादाश्च सञ्जज्ञुः क्ष्वेलाः किलकिलास्तथा ॥ २३॥
पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमम् ॥ २४

प्रतिलभ्य तु राधेयस् संज्ञां नातिचिरादिव ।

1. ङ—सन्धाय धनुषि श्रेष्ठे

दध्रे राजविनाशाय मनः क्रूरपराक्रमः ॥ २५

स हेमविकृतं चापं विष्फार्य विजयं महत् ।
अवाकिरदमेयात्मा पाण्डवं निशितैश्शरैः ॥ २६

ततः क्षुराभ्यां पाञ्चालौ चक्ररक्षौ महात्मनः ।
जघान चन्द्रदेवं च [1]दण्डधारं च वैशसे ॥ २७

तावुभौ धर्मराजस्य प्रवीरौ युधि भारत ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ २८

युधिष्ठिरः पुनः कर्णम् अविद्ध्यत् त्रिंशता शरैः ।
[2]सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ २९

शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांश्चास्य गोप्तॄन् विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ ३०

ततः प्रहस्यातिरथिषू षष्ट्या राजञ्शितैश्शरैः ।
विद्ध्वा युधिष्ठिरं सङ्ख्ये ननादातिरथस्तदा ॥ ३१

ततः प्रवीराः पाण्डूनाम् अभ्यधावन्नमर्षिताः ।
युधिष्ठिरं परीप्सन्तः कर्णं चाभ्यर्दयञ् शरैः ॥ ३२

[3]सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च ।

---

1. क—अयं पादः अनन्तरश्च आहत्य अर्धं नास्ति
2. अ—नास्तीदमर्धम्
3. ख—सात्यकिं चेकितानं च युयुत्सुं पाण्ड्यमेव च ।
 चोलं च केरलं चैव सिंहलद्वीपवासिनः ॥
 कर्णो विव्याध संक्रुद्धो दाक्षिणात्यान् सहस्रशः । [अधिकः पाठः]

धृष्टद्युम्नश्शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ३३

यमौ च भीमसेनश्च शिशुपालस्य चात्मजः ।
[1]कारूशा मात्स्यशेषाश्च केकयाः काशिकोसलाः ॥ ३४

एते तु त्वरिता वीरा वसुषेणमवारयन् ॥ ३४॥

जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ॥ ३५

वराहकर्णनालीकैर् नाराचैर्विविधैश्शरैः ।
वत्सदन्तैर्विपाठैश्च क्षुद्रकैश्चटकामुखैः ॥ ३६

नानाप्रहरणैश्चोग्रैर् हस्त्यश्वरथसादिनः ।
सर्वतोऽभ्यद्रवन् कर्णं परिवार्य जिघांसया ॥ ३७

स पाण्डवानां प्रवरैस् सर्वतस्समभिद्रुतः ।
छाद्यमानश्शितैर्घोरैस् स्वस्वनामाङ्कितैश्शरैः ॥ ३८

न चचाल रणे कर्णो महेन्द्रो दानवैरिव ॥ ३८॥

उदीरयन् ब्राह्ममस्त्रं शरैरापूरयन् दिशः ।
निजघान महेष्वासान् पाञ्चालानेकविंशतिम् ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

---

1. ख—अर्धचतुष्टयं नास्ति

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

कर्णेन युधिष्ठिरस्य पराजयपूर्वकमपहासः ॥

सञ्जयः—

[1]ततः पुनरमेयात्मा चेदीनां प्रवरान् दश ।
न्यहनत्कुरुश्रेष्ठ कर्णो वैकर्तनस्तदा ॥ १

तस्य बाणसहस्राणि सम्प्रपन्नानि मारिष ।
दृश्यन्ते दिक्षु सर्वासु शलभानामिव व्रजाः ॥ २

कर्णनामाङ्किता बाणास् स्वर्णपुङ्खास्सुतेजनाः ।
नराश्वकायान् निर्भिद्य पेतुरुर्व्यां समन्ततः ॥ ३

[2]कर्णेनैकेन समरे चेदीनां प्रवरा रथाः ।
सृञ्जयानां च सर्वेषां शतशो निहता रणे ॥ ४

कर्णस्य शरसञ्छन्नं बभूव विपुलं तमः ।
नाज्ञायत ततः किञ्चित् परेषामात्मनोऽपि वा ॥ ५

तस्मिंस्तमसि भूते च क्षत्रियाणां भयङ्करे ।
विचचार महाबाहुर् निर्दहन् क्षत्रियान् बहून् ॥ ६

---

1. ख—अर्धचतुष्टयं नास्ति

2. ख—तस्य बाणसहस्राणि सम्प्रवृत्तानि मारिष । [अधिकः पाठः]

ततश्शरमहाज्वालो वीर्यार्चिः कर्णपावकः ।
निर्दहन् पाण्डववनं चारु पर्यचरद्रणे ॥ ७

ततस्तेषां महाराज पाण्डवानां महारथाः ।
सृञ्जयानां च सर्वेषां शतशोऽथ सहस्रशः ॥ ८
अस्त्रैः कर्णं महेष्वासं समन्तात् पर्यवारयन् ॥ ८॥

स संवार्य महास्त्राणि महेष्वासो महात्मनाम् ।
प्रहस्य पुरुषेन्द्रस्य कर्णश्चिच्छेद कार्मुकम् ॥ ९॥

ततस्सन्धाय नवतिं निमेषान्नतपर्वणाम् ।
बिभेद कवचं राज्ञो रणे कर्णश्शितैश्शरैः ॥ १०॥

तद्वर्म हेमविकृतं रत्नचित्रं पतद्बभौ ।
सविद्युदभ्रं सवितुश् श्लिष्टं वातहतं यथा ॥ ११॥

तदङ्गात् पुरुषेन्द्रस्य भ्रष्टं वर्म व्यशोभत ।
रत्नैरलङ्कृतं पुण्यैर् व्यभ्रं निशि यथाऽम्बरम् ॥ १२॥

भिन्नवर्मा शरैः पार्थो रुधिरेण परिप्लुतः ।
बभासे पुरुषश्रेष्ठ उद्यन्निव दिवाकरः ॥ १३॥

स शराचितसर्वाङ्गश् छिन्नवर्माऽथ संयुगे ।
क्षत्रधर्मं समास्थाय सिंहनादमकुर्वत ॥ १४॥

नदित्वा सुचिरं कालं पाण्डवो रभसो रणे ।
शक्तिं चिक्षेप वेगेन प्रदीप्तामशनीमिव ॥ १५॥

तां ज्वलन्तीमिवाकाशे शक्तिं सप्तभिराशुगैः ।
भल्लैश्चिच्छेद राधेयस् सा व्यशीर्यत वै रणे ॥ १६॥

हृदि बाह्वोर्ललाटे च क्षिप्रकारी युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्णं ताडयित्वाऽनदन्मुदा ॥ १७॥

उद्भिन्नरुधिरः कर्णः क्रुद्धस्सर्प इव श्वसन् ।
जघान सूतं पार्थस्य पार्ष्णिं च नवभिश्शरैः ॥ १८॥

ध्वजं चिच्छेद नृपतेस् त्रिभिर्विव्याध चैव तम् ।
इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥ १९॥

एतस्मिन्नन्तरे शूराः पाण्डवानां महारथाः ।
ववृषुश्शरवर्षाणि राधेयं प्रति भारत ॥ २०॥

सात्यकिः पञ्चविंशत्या शिखण्डी नवभिश्शरैः ।
अवर्षतां महाराज राधेयं शत्रुकर्शनम् ॥ २१॥

शैनेयं तु ततः क्रुद्धः कर्णः पञ्चभिरायसैः ।
विव्याध समरे राजंस् त्रिभिश्चान्यैश्शिलीमुखैः ॥ २२॥

दक्षिणं तु भुजं तस्य त्रिभिः कर्णोऽप्यविध्यत ।
सव्यं षोडशभिर्बाणैर् यन्तारं चास्य सप्तभिः ॥ २३॥

अथास्य चतुरो वाहांश् चतुर्भिर्निशितैश्शरैः ।
सूतपुत्रोऽनयत् क्षिप्रं यमस्य सदनं प्रति ॥ २४॥

अपरेणाथ भल्लेन धनुश्छित्त्वा महारथः ।

सारथेस्सशिरस्त्राणं शिरः कायादपाहरत् ॥ २५॥

हताश्वसूते तु रथे स्थितस्स शिनिपुङ्गवः ।
शक्तिं चिक्षेप कर्णाय वैडूर्यमणिभूषिताम् ॥ २६॥

तामापतन्तीं सहसा द्विधा चिच्छेद भारत ।
कर्णो वै धन्विनां श्रेष्ठस् तांश्च सर्वानवारयत् ॥ २७॥

ततस्तान् निशितैर्बाणैः पाण्डवानां महारथान् ।
न्यवारयदमेयात्मा शिक्षया च बलेन च ॥ २८॥

अर्दयित्वा शरैस्तांस्तु सिंहः क्षुद्रमृगानिव ।
पीडयन् धर्मराजानं शरैस्सन्नतपर्वभिः ॥ २९॥

अभ्यद्रवत राधेयो धर्मपुत्रं शितैश्शरैः ॥ ३०

ततः पार्थो व्यपायासीद्धताश्वो हतसारथिः ।
अशक्नुवन् मुखे स्थातुं तदा कर्णस्य दुर्मनाः ॥ ३१

तमभिद्रुत्य राधेयः पाण्डुपुत्रं युधिष्ठिरम् ।
अब्रवीत् प्रहसन राजन् कुत्सयन्निव पाण्डवम् ॥ ३२

कर्णः—

कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात् समरे शत्रून् प्राणान् रक्षन् महाहवे ॥ ३३

न भवान् क्षत्रधर्मेषु कुशलोऽसीति मे मतिः ।
ब्राह्मे बले भवान् युक्तस् स्वाध्याये यज्ञकर्मणि ॥ ३४

[1]मा स्म युध्यस्व कौन्तेय मा स्म वीरान् समासदः ।
मा चैवं विप्रियं ब्रूहि मा च त्वं भज संयुगम् ॥　　३५

वक्तव्या मारिषाऽन्ये तु न वक्तव्यास्तु मादृशाः ।
मादृशान हि ब्रुवन् युद्धे एतदन्यच्च लप्स्यसे ॥　　३६

स्वगृहं गच्छ कौन्तेय यत्र वा केशवार्जुनौ ।
न हि त्वा समरे कर्णो हन्याद्राजन् कथञ्चन ॥　　३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[अस्मिन्नध्याये ३७ श्लोकाः ]

---

## ॥ षट्चत्वारिंशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

वरप्रदानं कुन्त्यास्तु कर्णस्स्मृत्वा महारथः ।
वधप्राप्तं च कौन्तेयं नावधीद्भरतर्षभ ॥　　१

एवमुक्त्वा ततः पार्थं विसृज्य च महारथः ।
न्यहनत् पाण्डवीं सेनां वज्रहस्त इवासुरीम् ॥　　२

---

1. ख—इदमर्धं नास्ति

ततोऽपायाद्द्रुतं राजा व्रीडन्निव जनेश्वरः ॥ २॥

अपयातं च राजानम् अन्वयासिषुरच्युतम् ।
चेदिपाण्डवपाञ्चालास् सात्यकिश्च महारथः ॥ ३॥

द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ॥ ४

ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिस्सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ॥ ५

शङ्खभेरीनिनादाश्च कार्मुकाणां च निस्स्वनाः ।
बभूवुर्धार्तराष्ट्राणां सिंहनादरवैस्सह ॥ ६

युधिष्ठिरस्तु कौरव्यो रथमारुह्य मारिष ।
श्रुतकीर्तेर्महाराज दृष्टवान् कर्णविक्रमम् ॥ ७

काल्यमानं बलं दृष्ट्वा सूतपुत्रेण पाण्डवः ।
तान् योधानब्रवीत् क्रुद्धो निघ्नतैनान् सहस्रशः ॥ ८

ततो राज्ञाऽभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखास्सर्वे पुत्रास्ते प्रत्युपाद्रवन् ॥ ९

बभूव तुमुलश्शब्दो योधानां तत्र भारत ।
रथहस्त्यश्वपत्तीनां द्रवतां निनदो महान् ॥ १०

उद्यतप्रतिविष्टानां शस्त्राणां च ततस्ततः ॥ १०॥

आगच्छत प्रहरत क्षिप्रं विपरिधावत ।

इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा रणाजिरे ॥ ११॥
अभ्रच्छायेव तत्रासीच् छस्त्रवृष्टिभिरम्बरे ।
समावृतैर्नरवरैर् निघ्नद्भिरितरेतरम् ॥ १२॥
विपताकध्वजच्छत्रा व्यश्वसूतायुधा रथाः ।
[1]व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणा हतेश्वराः ॥ १३॥
शिखराणीव शैलानां वज्रभिन्नानि मारिष ॥ १४
सारोहा निहताः पेतुर् द्विपा भिन्ना महीतले ।
छिन्नभिन्नविपर्यस्तवर्मालङ्कारविग्रहाः ॥ १५
सारोहास्तुरगाः पेतुर् हतवीरास्सहस्रशः ।
विप्रविद्धायुधाङ्गाश्च द्विरदा रथिभिर्हताः ॥ १६
प्रतिवीरैश्च सम्मर्दे पत्तिसङ्घास्सहस्रशः ।
विशालायतताम्राक्षैः पद्मेन्दुप्रतिमाननैः ॥ १७
शिरोभिर्युद्धशौण्डानां युद्धशौण्डैस्तृता मही ॥ १७॥
यथा भुवि तथा व्योम्नि निस्स्वनं शुश्रुवुर्जनाः ।
विमानेऽप्सरसां सङ्घैर् गीतवादित्रनिस्स्वनैः ॥ १८॥
हतानभिमुखान् वीरैश् शतशोऽथ सहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानैरप्सरोगणाः ॥ १९॥
तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ।

---

1. ख—इदमर्धं नास्ति

प्रहृष्टमनसश्शूराः क्षिप्रं जघ्नुः परस्परम् ॥ २०॥

रथिनो रथिभिस्सार्धं चित्रं युयुधुराहवे ।
पत्तयः पत्तिभिर्नागास् सह नागैर्हया हयैः ॥ २१॥

एवं प्रवृत्ते सङ्ग्रामे नरवाजिगजक्षये ।
सैन्येन रजसा व्याप्ते स्वे स्वाञ्जघ्नुः परे परान् ॥ २२॥

कचाकचं रणं ह्यासीद् दन्तादन्तं नखानखम् ।
मुष्टियुद्धं नियुद्धं च देहपापविनाशनम् ॥ २३॥

वर्तमाने तथा युद्धे जगतो रोमहर्षणे ।
नराश्वगजदेहेभ्यः प्रसृता लोहितापगा ॥ २४॥

नराश्वगजदेहांस्तान् उवाह पतितान् बहून् ।
नराश्वगजसम्बाधे गजाश्वनरयोधिनाम् ॥ २५॥

लोहितोदा महाघोरा नदी लोहितकर्दमा ।
नराश्वगजदेहान् वै वहन्ती भीरुभीषणा ॥ २६॥

तस्या नद्याः परं पारं व्रजन्ति विजयैषिणः ।
नागेन च प्लवन्तो वै निमज्ज्योन्मज्ज्य चापरे ॥ २७॥

ते तु लोहितदिग्धाङ्गा रक्तवर्माम्बरायुधाः ।
सस्नुस्तस्यां पपुश्चासृङ् मम्लुश्च भरतर्षभ ॥ २८॥

रथानश्वान् नरान् नागान् आयुधाभरणानि च ।

वर्माणि चाप्यपश्याम [1]पतितानि सहस्रशः ॥ २९॥

खं द्यां भूमिं दिशश्चापि प्रायः पश्याम लोहिताः ॥ ३०

लोहितस्य च गन्धेन स्पर्शेन च रसेन च ।
रूपेण चातिरक्तेन शब्देन च विसर्पता ॥ ३१

विषादस्सुमहानासीत् प्रायस्सैन्यस्य मारिष ॥ ३१॥

तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव ।
भूयस्समाद्रवन् वीरास् सात्यकिप्रमुखा रथाः ॥ ३२॥

तेषामापततां वेगम् अविषह्यं निरीक्ष्य वै ।
पुत्राणां ते महत् सैन्यम् आसीद्राजन् पराङ्मुखम् ॥ ३३॥

तद्विदीर्णनराश्वेभं रथवाजिसमाकुलम् ।
विध्वस्तवर्मकवचं प्रविद्धायुधकार्मुकम् ॥ ३४॥

व्यद्रवत् तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितमिवारण्ये यथा गजकुलं तथा ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ ७३ ॥ कर्णपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ अस्मिन्नध्याये ३५॥ श्लोकाः ]

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

कर्णं पराजित्य जिघांसोर्भीमस्य शल्येन हेतुकथनपूर्वकं निषेधनम् ॥

सञ्जयः—

तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम् ।
क्रोशतस्सूतपुत्रस्य न स्म राजन् न्यवर्तत ॥ १

ततः पक्षप्रपक्षस्थाः प्रकुक्षिस्थाश्च भारत ।
उदात्तशस्त्राः कुरवो भीममभ्यद्रवन् रणे ॥ २

कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान् पराङ्मुखान् ।
हंसवर्णान् हयानग्र्यान् प्रैषयद्यत्र पाण्डवः ॥ ३

ते प्रेषिता महाराज शल्येनाहवशोभिना ।
भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ॥ ४

दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः ।
मतिं दध्रे विनाशाय कर्णस्य भरतर्षभ ॥ ५

सोऽब्रवीत् सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम् ॥ ५॥

भीमः—

एनं रक्षत राजानं धर्मात्मानं युधिष्ठिरम् ।
संशयान्महतो मुक्तं कथञ्चित् प्रेक्षतो मम ॥ ६॥

अग्रतो मे कृतो राजा भिन्नसर्वपरिच्छदः ।

दुर्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना ॥ ७॥

अन्तमद्य गमिष्यामि तस्य दुःखस्य मारिष ॥ ८

हन्ता वाऽस्मि रणे कर्णं स मां वा निहनिष्यति ।
सङ्ग्रामेऽद्य सुघोरेऽस्मिन् सत्यमेतद्ब्रवीमि वः ॥ ९

राजानमद्य भवतां न्यासभूतं ददानि वै ।
अस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ॥ १०

सञ्जयः—

एवमुक्त्वा महाबाहुः प्रायादातिरथिं प्रति ।
सिंहनादेन महता सर्वान् सन्नादयन् दिशः ॥ ११

दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम् ।
सूतपुत्रमथोवाच मद्राणामीश्वरः प्रभुः ॥ १२

शल्यः—

पश्य कर्ण महाबाहुं सङ्क्रुद्धं पाण्डुनन्दनम् ।
दीर्घकालार्जितं क्रोधं मोक्तुकामस्त्वयि ध्रुवम् ॥ १३

ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन ।
अभिमन्यावपि हते राक्षसे वा घटोत्कचे ॥ १४

त्रैलोक्यस्य समग्रस्य शक्तः क्रुद्धो निवारणे ।
बिभर्ति यादृशं रूपं कालाग्न्यनिलवर्चसम् ॥ १५

सञ्जयः—

एवं ब्रुवति राधेयं मद्राणामीश्वरे नृप ।
अभ्यवर्तत वै कर्णं क्रोधदीप्तो वृकोदरः ॥ १६

तथा गतं तु सम्प्रेक्ष्य भीमं युद्धाभिनन्दिनम् ।
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ १७

कर्णः—

यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर ।
भीमसेनं प्रति विभो तत् सत्यं नात्र संशयः ॥ १८

एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः ।
निरपेक्षश्शरीरे च प्राणतश्च बलाधिकः ॥ १९

अज्ञातवासं वसता विराटनगरे तदा ।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ॥ २०

प्रसह्य विक्रमेणाजौ कीचकस्सगणो हतः ॥ २०॥

सोऽद्य सङ्ग्रामशिरसि सन्नद्धः क्रोधमूर्च्छितः ।
किङ्करोद्यतदण्डेन मृत्युनाऽपि व्रजेद्रणम् ॥ २१॥

चिरकालाभिलषितो मम यस्तु मनोरथः ।
अर्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः ॥ २२॥

स मे कदाचिदद्यैव भीमसेनसमागमात् ॥ २३

निहते भीमसेने तु यदि वा विरथीकृते ।

अभियास्यति मां पार्थस् तन्मे साधु भविष्यति ॥　　२४

अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं सम्प्रधारय ॥　　२४॥

सञ्जयः—

एतच्छ्रुत्वा तु वचनं राधेयस्यामितौजसः ।

उवाच वचनं शल्यस् सूतपुत्रं तथा गतम् ॥　　२५॥

शल्यः—

अभियाहि महाबाहो भीमसेनं महाबलम् ।

निरपेक्षश्च युध्यस्व शक्तिं स्वां सम्प्रदर्शयन् ॥　　२६॥

यस्ते कामोऽभिलषितश् चिरात् प्रभृति हृद्गतः ।

स ते सम्पत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥　　२७॥

सञ्जयः—

एवमुक्तस्तु राधेयश् शल्यं पुनरुवाच ह ॥　　२८

कर्णः—

हन्ताऽहमेनं संरब्धं मां वा हन्याद्वृकोदरः ॥　　२८॥

सञ्जयः—

[1]एवमुक्त्वा ततो राजन् राधेयो रथिनां वरः ।

युद्धे मनस्समाधाय याहि याहीत्यचोदयत् ॥　　२९॥

ततः प्रायाद्रथेनाशु शल्यस्तत्र विशां पते ।

यतो भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥　　३०॥

ततस्तूर्यनिनादाश्च भेरीणां च महास्वनाः ।

---

1. ख—इदमर्धं नास्ति

उदतिष्ठन्त राजेन्द्र कर्णभीमसमागमे ॥ ३१॥

भीमसेनो हि सङ्क्रुद्धस् तव सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर् दिशः प्राद्रावयद्बली ॥ ३२॥

स सन्निपातस्तुमुलो घोररूपो विशां पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ३३॥

ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्रादिवसन्निव ।
भीमसेनो महाबाहुः कर्णप्रेप्सुरभिद्रवत् ॥ ३४॥

तमापतन्तं सम्प्रेक्ष्य कर्णो वैकर्तनो वृषा ।
आजघानोरसि क्रुद्धो नाराचेन परन्तपः ॥ ३५॥

पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ॥ ३६

स विद्धस्सूतपुत्रेण च्छादयामास पत्रिभिः ।
विव्याध निशितैः कर्णं नवभिर्नतपर्वभिः ॥ ३७

तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिणा ।
अथैनं छिन्नधन्वानं प्रत्यविध्यत् स्तनान्तरे ॥ ३८

नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ॥ ३८॥

सोऽन्यत् कार्मुकमादाय सूतपुत्रं वृकोदरः ।
राजन् मर्मसु मर्मज्ञो विव्याध निशितैश्शरैः ॥ ३९॥

ननाद बलवान्नादं कम्पयन्निव रोदसी ॥ ४०

तं कर्णः पञ्चविंशत्या नाराचानां समर्पयत् ।
मदोत्कटं रणे दृप्तम् उल्काभिरिव कुञ्जरम् ॥ ४१

स कर्णबाणाभिहतः पाण्डवः क्रोधमूर्च्छितः ।
संरम्भामर्षताम्राक्षस् सूतपुत्रजिघांसया ॥ ४२

स कार्मुके महावेगं भारसाधनमुत्तमम् ।
गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ४३

व्याकृष्य बलवच्चापम् आकर्णान्तमविच्युतम् ।
तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ४४

स विसृष्टो बलवता बाणो वज्राशनिस्वनः ।
अदारयद्रणे कर्णं वज्रवेगो यथाऽचलम् ॥ ४५

स भीमसेनाभिहतस् सूतपुत्रोऽप्यरिन्दमः ।
निषसाद रथोपस्थे विसंज्ञः पृतनापतिः ॥ ४६

[1]रुधिरेणावसिक्ताङ्गो गतासुवदरिन्दमः ॥ ४६॥

एतस्मिन्नन्तरे दृष्ट्वा मद्रराजो वृकोदरम् ।
जिह्वां छेत्तुं समायान्तं सान्त्वयन्निदमब्रवीत् ॥ ४७॥

शल्यः—

भीमसेन महाबाहो यत् त्वां वक्ष्यामि तच्छृणु ।
वचनं हेतुसम्पन्नं श्रुत्वा चैतत् तथा कुरु ॥ ४८॥

---

1. अ-ब—नास्तीदमर्धम्

अर्जुनेन प्रतिज्ञातो वधः कर्णस्य शुष्मिणः ।
तां तथा कुरु भद्रं ते प्रतिज्ञां सव्यसाचिनः ॥ ४९॥

भीमः—

दृढव्रतत्वं पार्थस्य जानामि नृपसत्तम ।
राज्ञस्तु धर्षणं पापः कृतवान् मम सन्निधौ ॥ ५०॥

ततः कोपाभिभूतेन शेषं न गणितं मया ।
पतिते चापि राधेये न मे मन्युश्शमं गतः ॥ ५१॥

जिह्वोद्धरणमेवास्य प्राप्तकालं मतं मम ॥ ५२

अनेन सुनृशंसेन समवेतेषु राजसु ।
अस्माकं शृण्वतां कृष्णा यानि वाक्यानि मातुल ॥ ५३

असह्यानि च नीचेन बहूनि श्रावितानि भो ॥ ५३॥

नूनं चैतत् परिज्ञातं दूरस्थस्यापि पार्थिव ।
छेदनं चास्य जिह्वायास् तदेवाकाङ्क्षितं मया ॥ ५४॥

राज्ञस्तु प्रियकामेन कालोऽयं परिपालितः ॥ ५५

भवता तु यदुक्तोऽस्मि वाक्यं हेत्वर्थसंहितम् ।
तद्गृहीतं महाराज कटुकस्थमिवौषधम् ॥ ५६

हीनप्रतिज्ञो बीभत्सुर् न हि जीवेत कर्हिचित् ।
अस्मिन् विनष्टे नष्टास्स्मस् सर्व एव सकेशवाः ॥ ५७

अद्य चैव नृशंसात्मा पापः पापकृतां वरः ।

गमिष्यति पराभावं दृष्टमात्रः किरीटिना ॥ ५८

युधिष्ठिरस्य कोपेन पूर्वं दग्धो नृशंसकृत् ।
त्वया संरक्षितस्त्वद्य मत्समीपादुपायतः ॥ ५९

सञ्जयः—

एवं मद्राधिपश्श्रुत्वा विसंज्ञं सूतनन्दनम् ।
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ॥ ६०

पराजिते ततः कर्णे धार्तराष्ट्री महाचमूः ।
व्यपायात् सर्वतो भग्ना हाहाभूता समन्ततः ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

भीमकर्णयोर्युद्धम् ॥ १ ॥ भीमेन दुर्योधनानुजानां कतिपयानां हननम् ॥ २ ॥ सङ्कुलयुद्धं च ॥ ३ ॥

---

धृतराष्ट्रः—

सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महेष्वासो रथोपस्थे निपातितः ॥ १

कर्णो ह्येको रणे हन्ता पाण्डवान् सृञ्जयैस्सह ।
इति दुर्योधनस्सूत प्रोक्तवान् मां मुहुर्मुहुः ॥ २

पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत् पुत्रो दुर्योधनो मम ॥ ३

सञ्जयः—

विसंज्ञं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
महत्या सेनया सार्धं सोदरानिदमब्रवीत् ॥ ४

दुर्योधनः—

शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत ।
भीमसेनभये घोरे मज्जन्तं व्यसनार्णवे ॥ ५

सञ्जयः—

ते तु राज्ञा समादिष्टा भीमसेनजिघांसया ।
अभ्यवर्तन्त सहसा पतङ्गा इव पावकम् ॥ ६

श्रुतायुर्दुर्धरः क्राथो विवित्सुर्विकटस्समः ।
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥ ७

दुष्प्रधर्षस्सुबाहुश्च वातवेगसुवर्चसौ ।
दुर्धरो दुर्मदश्चैव तथा सन्धिश्शमस्सहः ॥ ८

एते रथैः परिवृता वीर्यवन्तो बलान्विताः ।
भीमसेनं समासाद्य समन्तात् पर्यवारयन् ॥ ९

ते किरन्तश्शरव्रातान् नानालिङ्गान् समन्ततः ॥ ९॥
स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः ॥ १०

तेषामापततां शीघ्रं पुत्राणां ते जनाधिप ।
रथैः पञ्चशतैस्सार्धं पञ्चाशन्यहनद्रथान् ॥ ११

विवित्सोस्तु ततः क्रुद्धो भल्लेनापाहरच्छिरः ।
भीमसेनो महाराज तत् पपात ततो भुवि ॥ १२

सकुण्डलशिरस्त्राणं पूर्णचन्द्रनिभाननम् ।
अशोभत महाराज पूर्णचन्द्र इवाम्बरे ॥ १३

तं दृष्ट्वा निहतं शूरं भ्रातरस्सर्वतस्तदा ।
अभ्यवर्तन्त समरे भीमं भीमपराक्रमम् ॥ १४

ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते जनाधिप ।
जहार समरे प्राणाञ् छिताभ्यां पाण्डुनन्दनः ॥ १५

तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ ।
विकटश्च समश्चोभौ देवपुत्रसमौ नृप ॥ १६

ततस्तु त्वरितो भीमः क्राथिं निन्ये यमक्षयम् ।
नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ १७

हाहाकारस्ततस्तीव्रस् सम्बभूव जनेश्वर ।
वध्यमानेषु वीरेषु तव पुत्रेषु धन्विषु ॥ १८

तेषां संलुलिते सैन्ये पुनर्भीमो महाबलः ।

नन्दोपनन्दौ समरे प्राहिणोद्यमसादनम् ॥ १९

ततस्ते प्राद्रवन् भीताः पुत्रास्ते विह्वलीकृताः ।
भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमम् ॥ २०

पुत्रांस्ते निहतान् दृष्ट्वा कर्णः क्रोधसमन्वितः ।
हंसवर्णान् हयान् भूयः प्रैषयद्यत्र पाण्डवः ॥ २१

ते प्रेषिता महाराज मद्रराजेन वाजिनः ।
भीमसेनरथं प्राप्य समसज्जन्त वेगिताः ॥ २२

स सन्निपातस्तुमुलो घोररूपो विशां पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ २३

दृष्ट्वा मम महाराज तौ समेतौ महारथौ ।
आसीद्बुद्धिः कथं नु स्याद् एतदद्य भविष्यति ॥ २४

ततो भीमो रणश्लाघी छादयामास पत्रिभिः ।
कर्णं रणे महाराज पुत्राणां तव पश्यताम् ॥ २५

[1]ततः कर्णो भृशं क्रुद्धो भीमं नवभिरायसैः ।
विव्याध परमास्त्रज्ञो भल्लैस्सन्नतपर्वभिः ॥ २६

तान् निहत्य महाराज भीमो भीमपराक्रमः ।
आकर्णपूर्णैर्विशिखैः कर्णं विव्याध सप्तभिः ॥ २७

ततः कर्णो महाराज आशीविष इव श्वसन् ।

1. ख—इदमर्धं नास्ति

शरवर्षेण महता छादयामास पाण्डवम् ॥ २८

भीमोऽपि तं शरव्रातैश् छादयित्वा महारथम् ।
पश्यतां कौरवेयाणां विननाद महारथः ॥ २९

[1]ततः कर्णो भृशं क्रुद्धो दृढमायम्य कार्मुकम् ।
भीमं विव्याध दशभिः कङ्कपत्रैश्शिलाशितैः ॥ ३०

कार्मुकं चास्य चिच्छेद भल्लेन निशितेन च ॥ ३०॥

ततो भीमो महाबाहुर् हेमपट्टपरिष्कृतम् ।
परिघं घोरमादाय मृत्युदण्डमिवापरम् ॥ ३१॥

कर्णस्य निधनाकाङ्क्षी चिक्षेपातिबलो नदन् ॥ ३२

तमापतन्तं परिघं वज्राशनिसमस्वनम् ।
चिच्छेद बहुधा कर्णश् शरैराशीविषोपमैः ॥ ३३

ततः कार्मुकमादाय भीमो भीमतरं दृढम् ।
छादयामास विशिखैः कर्णं परबलार्दनम् ॥ ३४

ततो युद्धमभूद्घोरं कर्णपाण्डवयोर्मृधे ।
मृगेन्द्रयोरिव महत् परस्परवधैषिणोः ॥ ३५

ततः कर्णो महाराज भीमसेनं त्रिभिश्शरैः ।

---

1. क-ङ—अथ वैकर्तनः कोपाद्धनुराकृष्य वेगितः ॥ [पाठान्तरम्]
ख—ततः कर्णो महाराज भीमसेनं त्रिभिश्शरैः ।
आकर्णपूर्णैरभ्यघ्नद्दृढमानम्य कार्मुकम् ॥ [पाठान्तरम्]

आकर्णपूर्णैरभ्यघ्नद् दृढमायम्य कार्मुकम् ॥ ३६

भीमं विव्याध दशभिः कङ्कपत्रैश्शिलाशितैः ॥ ३६॥

सोऽतिविद्धो महेष्वासः कर्णेन बलिनां वरः ।

घोरमादत्त विशिखं कर्णकायविभेदनम् ॥ ३७॥

तस्य वर्म तनुत्राणं भित्त्वा देहं च सायकः ।

प्राविशद्धरणीं राजन् वल्मीकमिव पन्नगः ॥ ३८॥

स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।

सञ्चचाल रथे कर्णः क्षितिकम्पे यथाऽचलः ॥ ३९॥

ततः कर्णो महाराज कोपामर्षसमन्वितः ।

भीमं तं पञ्चविंशत्या [1]नाराचानां समर्पयत् ॥ ४०॥

चिच्छेद कार्मुकं तूर्णं पाण्डवस्य महात्मनः ॥ ४१

ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव ।

विरथं भीमकर्माणं भीमं चक्रे नराधिप ॥ ४२

ततो भीमो महातेजा विरथो रथिनां वरः ।

गदां गृह्य महाबाहुर् अपतत् स्यन्दनोत्तमात् ॥ ४३

गदया च महाराज कर्णस्य रथकूबरम् ।

पोथयामास सङ्क्रुद्धस् समरे शत्रुतापनः ॥ ४४

स क्रोधवशमापन्नः पाण्डुपुत्रः प्रतापवान् ।

1. क—इतः षट् पादा न सन्ति

विद्राव्य गदया वीरस् तव पुत्रान् महाहवे ॥ ४५

नागान् सप्तशतान् राजन्नीषादन्तान् प्रहारिणः ।
व्यधमद्गदया भीमो दण्डपाणिरिवान्तकः ॥ ४६

दन्तवेष्टेषु नेत्रेषु कुम्भेषु च मुखेषु च ।
मर्मस्वपि च मर्मज्ञस् सोऽर्दयामास संयुगे ॥ ४७

तेऽभ्यर्दिता मारुतिना विनदन्तो भृशातुराः ।
ततस्ते प्राद्रवन् भीताः प्रहृताश्च पुनः पुनः ॥ ४८

महामात्रास्तमावव्रुर् मेघा इव दिवाकरम् ॥ ४८॥

तान् सप्तशतनागेन्द्रान् सारोहायुधकेतनान् ।
भूमिष्ठो गदयाऽभ्यघ्नच् छरन्मेघानिवानिलः ॥ ४९॥

ततस्सुबलपुत्रस्य हयानतिजवान् पुनः ।
पोथयामास कौन्तेयस् त्रिसाहस्रानरिन्दमः ॥ ५०॥

रथानां च शतं साग्रं पत्तींश्च शतशोऽपरान् ।
न्यहनत् पाण्डवो युद्धे तापयंस्तव वाहिनीम् ॥ ५१॥

प्रतप्यमानं सूर्येण भीमेन च महात्मना ।
तव सैन्यं सञ्चुकोच चर्मेवाग्नौ समाहितम् ॥ ५२॥

ते भीमभयसन्त्रस्तास् तावका भरतर्षभ ।
विहाय समरे [1]भीमं विप्रकीर्णा दिशो दश ॥ ५३॥

---

1. क-ख-ङ—कर्णं

रथाः पञ्चदशैवान्ये ह्रादिनश्शरवर्षिणः ।
भीममभ्यद्रवन् घ्नन्तश् शरसङ्घैस्समन्ततः ॥ ५४॥

तान् ससूतरथाश्वेभान् सपताकाध्वजायुधान् ।
पोथयामास समरे भीमो विष्णुरिवासुरान् ॥ ५५॥

ततश्शकुनिनिर्दिष्टास् सादिनश्शूरसम्मताः ।
त्रिसाहस्राण्याभिययुश् शरशक्त्यृष्टिपाणयः ॥ ५६॥

तान् प्रत्युद्गम्य यवनान् साश्वारोहान् परारिहा ।
विविधान् विचरन् मार्गान् गदया समपोथयत् ॥ ५७॥

तेषामासीन्महाञ्छब्दस् ताडितानां च सर्वशः ।
अग्निभिर्दह्यमानानां नलानामिव भारत ॥ ५८॥

एवं सुबलपुत्रस्य त्रिसाहस्रान् हयोत्तमान् ।
हत्वाऽन्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ॥ ५९॥

कर्णोऽपि समरे राजन् धर्मपुत्रमरिन्दमम् ।
शरैः प्रच्छादयामास सरथं चाप्यपातयत् ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
[ अस्मिन्नध्याये ६०॥ श्लोकाः ]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

ततस्सम्प्रद्रुतं सैन्यं दृष्ट्वा कर्णो महारथः ।
अन्वधावत् किरन् बाणैः कङ्कपत्रैरजिह्मगैः ॥ १

राजानमनुधावन्तं शरैरावृत्य रोदसी ।
क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः ॥ २

सन्निवृत्तस्ततस्तूर्णं राधेयश्शत्रुकर्शनः ।
भीमं प्रच्छादयामास समन्तान्निशितैश्शरैः ॥ ३

भीमसेनरथप्रेप्सुं कर्णं भारत सात्यकिः ।
अभ्यद्रवदमेयात्मा पार्ष्णिग्रहणकारणात् ॥ ४

भीमसेनरथप्रेप्सुः कर्णो भारत सात्यकिम् ।
अभ्यवर्तत शैनेयम् अर्दयञ्छरवृष्टिभिः ॥ ५

तावन्योन्यं समासाद्य वृषभौ सर्वधन्विनाम् ।
विसृजन्तौ शरांस्तत्र व्यभ्राजेतां परस्परम् ॥ ६

ताभ्यां वियति राजेन्द्र विततं भीमदर्शनम् ।
क्रौञ्चपृष्ठारुणं रौद्रं बाणजालमदृश्यत ॥ ७

नैव सूर्यप्रभां खं वा दिशो वा प्रदिशस्तथा ।
अज्ञासिष्म वयं ते वा शरैर्मुक्तैस्समन्ततः ॥ ८

मध्याह्ने तपतो राजन् भास्करस्य महाप्रभाः ।
क्रान्तास्सर्वाश्शरौघैस्तैः कर्णमाधवयोस्तदा ॥ ९

सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम् ।
संसक्तान् पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ॥ १०

तेषामापततां वेगस् तीव्र आसीद्विशां पते ।
उद्धूतानां यथा वृष्ट्या सागराणां भयावहः ॥ ११

ते सेने भृशसंविग्ने दृष्ट्वाऽन्योन्यं महाहवे ।
हर्षेण महता युक्ते प्रत्युपेत्य परस्परम् ॥ १२

ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे ।
यादृशं नैवमस्माभिर् दृष्टपूर्वं न च श्रुतम् ॥ १३

बलौघास्ते समासाद्य बलौघान् सुमहामृधे ।
[1]अभ्यवर्तन्त वेगेन वार्योघा इव सागरम् ॥ १४

[2]आसीन्निनादस्सुमहान् बाणौघानां परस्परम् ।
[3]गर्जतां सागरौघाणां यथा स्यान्निनदो महान् ॥ १५

[4]ते तु सेने समासाद्य वेगवत्यौ परस्परम् ।

---

1. अ—नास्तीदमर्धम्
2. अ—नास्तीदमर्धम्
3. अ-क—नास्तीदमर्धम्
4. अ-ब-ङ—नास्तीदमर्धम्

एकीभावमनुप्राप्ते नद्योघाविव सङ्गतौ ॥ १६

[1]ततः प्रववृते युद्धं घोररूपं विशां पते ।
[2]कुरूणां पाण्डवानां च लिप्सूनां सुमहद्यशः ॥ १७

शूराणां गर्जतां तत्र साधिक्षेपकृता गिरः ।
अश्रूयन्त महाराज न्यङ्गान्युद्दिश्य भारत ॥ १८

यस्य यद्यद् रणे न्यङ्गं पितृतो मातृतोऽपि वा ।
कर्मतश्शीलतो वाऽपि श्रावयामासुराहवे ॥ १९

[3]तान् दृष्ट्वा समरे शूरांस् तर्जमानान् परस्परम् ।
बभूव मे मती राजन्नैतेषामस्ति जीवितम् ॥ २०

तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम् ।
भयं तीव्रं ममाभूद्वै कथमेतद्भविष्यति ॥ २१

ततस्ते पाण्डवा राजन् कौरवाश्च महारथाः ।
ततक्षुस्सायकैस्तूर्णम् अन्योन्यं विजयैषिणः ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ७४ ॥ कर्णपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. ख—ततःप्रववृते युद्धं कुरुपाण्डवयोस्तदा ।
विशांपते घोररूपं भीरुणां भयवर्धनम् ॥ [अधिकःपाठः]
2. क-ख-ङ—हर्षेण महतायुक्तं कुरुपाण्डवसैनिकैः ।
3. अ—नासीदमर्षम्

## ॥ पञ्चाशोऽध्यायः ॥

संकुलयुद्धम् ॥

सञ्जयः—

क्षत्रियास्ते महाराज परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुः कृतवैरा महौजसः ॥ १

रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः ।
गजौघाश्च महाराज संसक्ताश्च परस्परम् ॥ २

[1]गदानां परिघाणां च शक्तीनां च परस्परम् ।
प्रासानां भिण्डिपालानां मुसुण्ठीनां च सर्वशः ॥ ३

सम्पातं समपश्याम सङ्ग्रामे भृशदारुणे ॥ ३॥

शलभा इव सम्पेतुश् शस्त्रवृष्ट्यस्समन्ततः ॥ ४

नागान् नागास्समासाद्य व्यधमन्त समन्ततः ।
हया हयांश्च समरे रथिनो रथिनस्तथा ॥ ५

पत्तयः पत्तिसङ्घांश्च सादिनश्च गजान् रथान् ।
पत्तयो रथमातङ्गान् रथिनः पत्तिसादिनः ॥ ६

हस्तिनोऽश्वान् रथांश्चैव ममृदुश्शीघ्रगा नृप ॥ ६॥

नागाश्च समरे त्र्यङ्गं हयास्त्र्यङ्गं च मारिष ।

1. अ—नासीदमर्षम्

[1]नराश्च ममृदुस्त्र्यङ्गं रथास्त्र्यङ्गं च मारिष ॥ ७॥
शरतोमरनाराचैर् गदाशक्तिपरश्वधैः ।
वध्यतां तत्र शूराणां क्रोशतां च परस्परम् ॥ ८॥
घोरमायोधनं जज्ञे पशूनां घातने यथा ॥ ९
रुधिरेण समुत्सिक्ता बभौ भारत मेदिनी ।
शक्रगोपसमाकीर्णा प्रावृषीव वसुन्धरा ॥ १०
यथैव वाससी शुभ्रे महारजतरञ्जिते ।
बिभ्रती युवती श्यामा तद्वदासीद्वसुन्धरा ॥ ११
बद्धचूडामणिवरैश् शिरोभिश्चारुकुण्डलैः ।
उज्झितैर्वृषभाक्षाणां भ्राजते स्म वसुन्धरा ॥ १२
शशशोणितदिग्धेव शातकुम्भमयीव च ।
[2]भूर्बभौ भरतश्रेष्ठ शान्तार्चिर्भिरिवानलः ॥ १३
छिन्नानामुत्तमाङ्गानां बाहूनां चोरुभिस्सह ।
कुण्डलानां पिनद्धानां भूषणानां च भारत ॥ १४
निष्काणां हेमसूत्राणां शरीराणां च धन्विनाम् ।
वर्मणां सपताकानां तूणीराणां तथैव च ॥ १५
अगम्यकल्पा पृथिवी सर्वतो भृशदुर्गमा ॥ १५॥
गजा गजान् समासाद्य विषाणैरर्दयन् भृशम् ।

---

1. अ—नास्तीदमर्धम्      2. अ—नास्तीदमर्धम्

[1]विषाणाग्रहतास्तत्र भ्राजन्ते स्म गजोत्तमाः ॥ १६॥

[2]रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव ।
स्यन्दमाना यथा भान्ति पर्वता धातुमण्डिताः ॥ १७॥

तथा रेजू रणे नागा रुधिरेण समाप्लुताः ॥ १८

तोमरान् सादिभिर्मुक्तान् प्रतिमानस्थितान् बहून् ।
हस्तैरुद्धृत्य तान् नागा बभञ्जुश्च परे रणे ॥ १९

नाराचैश्छिन्नवर्माणो भ्राजन्ते स्म गजोत्तमाः ।
प्रावृट्काले महाराज मेघा इव सविद्युतः ॥ २०

शरैः कनकपुङ्खैश्च चिता रेजुर्गजोत्तमाः ।
उल्काभिस्सम्प्रदीप्ताभिः पर्वता इव मारिष ॥ २१

केचिदभ्याहता नागैर् नागा नगवरोपमैः ।
न चेलुस्समरात् तस्माच् छिन्नपक्षा इवाद्रयः ॥ २२

अपरे प्राद्रवन् नागाश् शरार्ता व्रणतापिताः ।
प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे ॥ २३

[3]निषेदुस्सिंहवच्चान्ये नदन्तो भैरवान् रवान् ।
मम्लुश्च बहवो राजंश् चुक्रुशुश्चापरे तथा ॥ २४

---

1. अ--नास्तीदमर्धम्

2. ख—प्रावृट्काले यथा राजा मेघा इव सविद्युतः । [ अधिकः पाठः ]

3. अ—नास्तीदमर्धम्

हयाश्च निहता बाणैस् स्वर्णभाण्डपरिच्छदाः ।
निषेदुश्चैव पेतुश्च बभ्रमुश्च दिशो दश ॥ २५

अपरे क्लिश्यमानाश्च व्यवेष्टन्त महीतले ।
भावान् बहुविधांश्चक्रुस् ताडिताश्शरतोमरैः ॥ २६
नराश्च निहता भूमौ कूजन्तस्तत्र मारिष ॥ २६॥
दृष्ट्वा च बान्धवानन्ये पितृनन्ये पितामहान् ।
धावमानान् परांश्चापि दृष्ट्वाऽन्ये तत्र भारत ॥ २७॥
ख्यातानि नामगोत्राणि शशंसुरितरेतरम् ॥ २८

तेषां छिन्ना महाराज भुजाः कनकभूषणाः ।
उद्वेष्टन्ते विवेष्टन्ते भ्रमयन्त्युत्पतन्ति च ॥ २९

निपतन्ति तथा भूमौ स्फुरन्ति च सहस्रशः ।
वेगांश्चान्ये रणे चक्रुः पञ्चास्या इव पन्नगाः ॥ ३०

ते भुजा भोगिभोगाभाश् चन्दनाक्ता विशां पते ।
[1]लोहिताद्रा भृशं रेजुस् तापनीया इव ध्वजाः ॥ ३१

वर्तमाने तथा घोरे सङ्ग्रामे सर्वतो दिशम् ।
अविज्ञातास्स्म युध्यन्ते विनिघ्नन्तः परस्परम् ॥ ३२

भौमेन रजसा कीर्णे शस्त्रसम्पातसङ्कुले ।
न च स्वे न परे राजन् विज्ञायन्ते तमोन्विताः ॥ ३३

1. ख—इदमर्धं नास्ति

तथा प्रवर्तमाने तु घोररूपे भयानके ।
शोणितौघा महानद्यः प्रस्रुतास्तत्र चासकृत् ॥ ३४

शीर्षपाषाणसञ्छन्नाः केशशैवलशाद्वलाः ।
हस्तिसङ्घाटसङ्कीर्णा धनुःकाशा गजोडुपाः ॥ ३५

मांसशोणितपङ्किन्यो हस्तिग्राहास्सुदारुणाः ।
नदीः प्रवर्तयामासुर् यमराष्ट्रविवर्धिनीः ॥ ३६

[1]भीरुवित्रासकारिण्यश् शूराणां हर्षवर्धनाः ।
ता नदीर्घोररूपास्तु नयन्तीर्यमसादनम् ॥ ३७

अवगाह्य न्यमज्जन्त क्षत्रिया जयगर्धिनः ॥ ३७॥

क्रव्यादानां महाराज नर्दतां च समन्ततः ।
घोरमायोधनं जज्ञे प्रेतराजपुरं यथा ॥ ३८॥

उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
नृत्यन्ति वै भूतगणा वितृप्ता मांसशोणितैः ॥ ३९॥

पीत्वा च शोणितं तत्र वसां भुक्त्वा च भारत ।
मेदोमज्जावसामत्तास् तृप्ता मांसस्य चैव ह ॥ ४०॥

धावमानाश्च दृश्यन्ते काककङ्कबलास्तथा ॥ ४१

ते शूरास्समरे राजन् भयं त्यक्त्वा सुदुस्त्यजम् ।
सम्प्रहृष्टा महाराज चक्रुः कर्माण्यभीतवत् ॥ ४२

---

1. ख—इदमर्धं नास्ति

शरशक्तिगदाकीर्णे क्रव्यादगणसङ्कुले ।
विचेरुस्समरे शूराः ख्यापयन्तस्स्वपौरुषम् ॥ ४३

अन्योन्यं ख्यापयन्ति स्म नामगोत्राणि चैव हि ।
पितृनामानि च रणे मातृगोत्राणि चापरे ॥ ४४

इतश्चेतश्च बहवस् तत्र योधा विशां पते ।
अन्योन्यमवमृद्नन्ति शक्तितोमरपट्टसैः ॥ ४५

वर्तमाने तथा युद्धे घोररूपे सुदारुणे ।
व्यषीदत् कौरवी सेना भिन्ना नौरिव सागरे ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[ अस्मिन्नध्याये ४६ श्लोकाः ]

---

## ॥ एकपञ्चाशोऽध्यायः ॥

अर्जुनस्य संशप्तकैर्युद्धम् ॥

---

सञ्जयः—

वर्तमाने तथा युद्धे क्षत्रियाणां निमज्जने ।
गाण्डीवस्य महाघोषश् शुश्रुवे युधि मारिष ॥ १

संशप्तकानां कदनम् अकरोद्यत्र पाण्डवः ।
कोसलानां तथा राजन् नारायणबलस्य च ॥ २

संशप्तकास्तु समरे शरवृष्टिं समन्ततः ।
अपातयन् पार्थमूर्ध्नि जयगृध्राः प्रमन्यवः ॥ ३

तां शस्त्रवृष्टिमायान्तीम् उरसा धारयन् प्रभुः ।
व्यगाहत परान् पार्थो विनिघ्नन् रथिनां वरान् ॥ ४

विक्षोभ्य तु रथानीकं कङ्कपत्रैश्शिलाशितैः ।
आससाद ततः पार्थस् सुशर्माणं महारथम् ॥ ५

स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ॥ ६

सुशर्मा तु ततः पार्थं विद्ध्वा नवभिरायसैः ।
जनार्दनं त्रिभिर्बाणैर् अभ्यघ्नद्दक्षिणे भुजे ॥ ७

ततोऽपरेण भल्लेन केतुं पार्थस्य मारिष ।
विव्याध समरे राजन् सुशर्मा क्रोधमूर्च्छितः ॥ ८

स वानरवरो राजन् विश्वकर्मकृतो महान् ।
ननाद सुमहानादं नृत्यन्निव विभीषयन् ॥ ९

कपेस्तु निनदं श्रुत्वा सन्त्रस्ता तव वाहिनी ।
भयं विपुलमासाद्य निश्चेष्टा समपद्यत ॥ १०

[1]ततस्सा शुशुभे सेना निश्चेष्टाऽवस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चित्रीकृतं वनम् ॥ ११

प्रतिलभ्य ततस्संज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ॥ १२

सञ्छाद्य समरे पार्थं परिवव्रुस्समन्ततः ॥ १२॥

ते हयान् रथचक्रे च रथेषां चापि मारिष ।
निग्रहीतुं प्रचक्रुश्च क्रोधाविष्टास्समन्ततः ॥ १३॥

निगृह्य तु रथं तस्य योधास्ते तु सहस्रशः ।
रथबन्धं प्रचक्रुर्हि पाण्डवस्यामितौजसः ॥ १४॥

रथमारुरुहुः केचित् कृष्णपार्थौ जिघृक्षवः ।
संशप्तकानां योधास्ते सिंहनादांश्च नेदिरे ॥ १५॥

अपरे जगृहुश्चैव केशवस्य महाभुजौ ।
पार्थमेके महाराज रथस्थं जगृहुर्मुदा ॥ १६॥

अच्युतस्तु ततो बाहू विधून्वन् रणमूर्धनि ।
पातयामास तान् सर्वान् दुष्टहस्तीव हस्तिपान् ॥ १७॥

सरथस्तैर्गृहीतस्तु पाण्डवस्सुमहाबलः ।
स्पन्दितुं नाशकद्राजंस् तदद्भुतमिवाभवत् ॥ १८॥

ततः पार्थो महाबाहुस् संवृतस्तैर्महारथैः ।

---

1. ख—इदमर्धं नास्ति

निगृहीतं रथं दृष्ट्वा तांश्चाप्याद्रवतो बहून् ॥ १९॥

रथारूढांश्च सुबहून् पदाऽऽक्षिप्य न्यपातयत् ॥ २०

अपातयदसम्भ्रान्तश् शरैरासन्नयोधिनः ॥ २०॥

तांस्तापयित्वा समरे पार्थः परपुरञ्जयः ।

स्मयन्निव महाबाहुः केशवं वाक्यमब्रवीत् ॥ २१॥

अर्जुनः—

पश्य कृष्ण महाबाहो संशप्तकगणान् बहून् ।

कुर्वतोऽसुकरं कर्म मुमूर्षून् कालचोदितान् ॥ २२॥

रथबन्धमिमं प्राप्य पृथिव्यां नास्ति कश्चन ।

यस्सहेत पुमाँल्लोके मदन्यः क्षत्रियर्षभः ॥ २३॥

पश्यैतानद्य समरे मत्प्रयुक्तैस्सुतेजनैः ।

पात्यमानान् रणे कृष्ण शरैराशीविषोपमैः ॥ २४॥

सञ्जयः—

इत्येवमुक्त्वा बीभत्सुश् शङ्खप्रवरमुत्तमम् ।

व्यनादयदमेयात्मा देवदत्तं महामृधे ॥ २५॥

देवदत्तस्वनं श्रुत्वा केशवोऽपि महायशाः ।

पाञ्चजन्यस्वनं चक्रे पूरयन्निव रोदसी ॥ २६॥

[1]तयोश्शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी ।

---

1. ख—अर्धत्रयं नास्ति

सञ्चचाल महाराज वित्रस्ता चाभवद्भृशम् ॥ २७॥

नागमस्त्रं ततः पार्थः प्रादुश्चक्रे हसन्निव ।
पादबन्धं स तेषां वै चक्रे तेन महास्त्रवित् ॥ २८॥

यानुद्दिश्य रणे पार्थः पादबन्धं चकार ह ।
ते बद्धाः पादबन्धेन योगास्संशप्तकास्तदा ॥ २९॥

निर्विचेष्टास्तदाऽभूवन् पाण्डवस्यास्त्रतेजसा ॥ ३०
[1]निर्विचेष्टांस्तदा योधान् अवधीत् पाण्डुनन्दनः ।

यथेन्द्रस्समरे दैत्यांस् तारकस्य वधे पुरा ॥ ३१

ते वध्यमानास्समरे मुमुचुस्तं रथोत्तमम् ।
आयुधानि च सर्वाणि विस्रष्टुमुपचक्रमुः ॥ ३२

ततस्सुशर्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीम् ।
सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः ॥ ३३

ततस्सुपर्णास्सम्पेतुर् भक्षयन्तो भुजङ्गमान् ।
ततो विदुद्रुवुर्नागास् तान् दृष्ट्वा खेचरान् नृप ॥ ३४

तद्विमुक्तं बलं रेजे पादबन्धाद्विशां पते ।
मेघवृन्दाद्यथा मुक्तो भास्करस्तापयन् प्रजाः ॥ ३५

विप्रमुक्तास्ततो योधाः फल्गुनस्य रथं प्रति ।

---

1. ख—अर्धत्रयं नास्ति

ससृजुर्बाणसङ्घांश्च शस्त्रसङ्घांश्च मारिष ॥ ३६

तां महास्त्रमयीं वृष्टिं शरैस्सञ्छिद्य मरिष ।
अवधीत् स ततो योधान् वासविः परवीरहा ॥ ३७

[1]सुशर्मा तु ततो राजन् बाणेन नतपर्वणा ।
अर्जुनं हृदये विद्ध्वा विव्याधान्यैस्त्रिसप्तभिः ॥ ३८

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ॥
तत उच्चुक्रुशुस्सर्वे हतः पार्थ इति ब्रुवन् ॥ ३९

ततश्शङ्खनिनादाश्च भेरीशब्दाश्च पुष्कलाः ।
नानावादित्रनिनदास् सिंहनादाश्च जज्ञिरे ॥ ४०

प्रतिलभ्य ततस्संज्ञां श्वेताश्वः कृष्णसारथिः ।
सोऽतिविद्धो महेष्वासश् शरैराशीविषोपमैः ॥ ४१

सुशर्माणं महाराज क्रोधाविष्टो महारथः ।
ततश्शरशतैः पार्थस् सञ्छाद्यैनं क्षणाद्रणे ॥ ४२

दिश आवारयामास बाणैस्तत्र महास्त्रवित् ॥ ४२॥

[2]विमुखीकृत्य समरे सुशर्माणं धनञ्जयः ।

1. ख—निश्चेष्टांस्तु ततो योधानवधीत्पाण्डुनन्दनः ।
यथेन्द्रस्समरे दैत्यांस्तारकस्य वधे पुरा ।
ते वध्यमानास्समरे मुमुचुस्तं रथोत्तमम् ॥ [अधिकः पाठः]

2. अ—सप्तार्धानि न सन्ति

ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे हसन्निव ॥ ४३॥

ततो बाणसहस्राणि तदुत्सृष्टानि भारत ।
सर्वदिक्ष्वभ्यदृश्यन्त सूदयन्तो रथद्विपान् ॥ ४४॥

हयान् पत्तींश्च समरे शस्त्रवृष्ट्या ह्यपातयत् ।
रराज समरे राजञ् शक्रो निघ्नन्निवासुरान् ॥ ४५॥

वध्यमाने ततस्सैन्ये भयं सुमहदाविशत् ।
संशप्तकगणानां च गोपालानां च सर्वशः ॥ ४६॥

न हि तत्र पुमान् कश्चिद् योऽर्जुनं प्रत्ययुध्यत ।
पश्यतां तत्र वीराणाम् अहन्यत बलं महत् ॥ ४७॥

हन्यमानं च तद्भूम्निश्चेष्टं वै पराक्रमे ॥ ४८

अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ।
व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन् ॥ ४९

चतुर्दशसहस्राणि यानि शिष्टानि भारत ।
रथानामयुतं चैव त्रिसहस्रांश्च दन्तिनः ॥ ५०

ततस्संशप्तका भूयः परिवव्रुर्धनञ्जयम् ।
मर्तव्यमिति निश्चित्य जये चापि निवर्तनम् ॥ ५१

महदासीत् ततो युद्धं तावकानां विशां पते ।

शूरेण बलिना सार्धं पाण्डवेन किरीटिना ॥ ५२

जित्वा तान् न्यहनत् पार्थश् शत्रूञ् शक्र इवासुरान् ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ७३ ॥ कर्णपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[ अस्मिन्नध्याये ५२॥ श्लोकाः ]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

कृतवर्मा कृपो द्रौणिस् सूर्यवर्मा महारथः ।
उलूकस्सौबलश्चैव राजा च सह सोदरैः ॥ १

सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम् ।
समुज्जिहीर्षवस्सर्वे भिन्नां नावमिवाम्भसि ॥ २

अभ्यद्रवन्त समरे पाण्डवानामनीकिनीम् ॥ २॥
[1]ततो युद्धमतीवासीन्मुहूर्तमिव भारत ॥ ३

कृपेण शरवर्षाणि सुप्रमुक्तानि संयुगे ।
सृञ्जयांश्छादयामासुश् शलभानामिव प्रजाः ॥ ४

---

1. अ—अर्धद्वयं नास्ति

शिखण्डी तु ततः क्रुद्धो गौतमं त्वरितो ययौ ।
वारयञ् शरवर्षेण समन्ताद्ब्राह्मणं कृपम् ॥　　५

महदासीत् तयोर्युद्धं मुहूर्तमिव दारुणम् ।
क्रुद्धयोस्समरे राजन् रामरावणयोरिव ॥　　६

कृपस्तु शरवर्षं तद् विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिश्शरैः ॥　　७

ततश्शिखण्डी कुपितश् शरैस्सप्तभिराहवे ।
कृपं विव्याध हृदये कङ्कपत्रैरजिह्मगैः ॥　　८

ततः कृपो दृढं क्रुद्धस् सोऽतिविद्धो महारथः ।
ततस्सुनिशितैस्तीक्ष्णैः क्षुरप्रैर्हेमभूषितैः ॥　　९

व्यश्वसूतरथं चक्रे शिखण्डिनमथो द्विजः ॥　　९॥

हताश्वात्तु ततो यानाद् अवप्लुत्य महारथः ।
खड्गं चर्म च सङ्गृह्य सत्वरं ब्राह्मणं ययौ ॥　　१०॥

तमापतन्तं सहसा शरैस्सन्नतपर्वभिः ।
वारयामास समरे तदद्भुतमिवाभवत् ॥　　११॥

तदद्भुतमपश्याम शिलानामिव सर्पणम् ।
स निश्चेष्टोऽभवद्राजञ् छिखण्डी विष्ठितो बली ॥　　१२॥

कृपेण वारितं दृष्ट्वा शिखण्डिनमतो नृप ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥　　१३॥

[1]धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ १४॥

युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।
सपुत्रं सहसैन्यं च द्रोणपुत्रो न्यवारयत् ॥ १५॥

नकुलं सहदेवं च त्वरमाणौ महारथौ ।
प्रतिजग्राह ते पुत्रश् शरवर्षेण वारयन् ॥ १६॥

भीमसेनं करूशांश्च केकयान् सृञ्जयांस्तथा ।
कर्णो वैकर्तनो वीरो वारयामास तेजसा ॥ १७॥

शिखण्डिने ततो बाणान् कृपश्शारद्वतो युधि ।
प्रैषयत् त्वरया युक्तो बीभत्सोरथ सन्निधौ ॥ १८॥

ताञ् छरान् प्रेषितांस्तेन सुपुङ्खान् रुक्मभूषितान् ।
चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः ॥ १९॥

शतचन्द्रं तदा चर्म ब्राह्मणस्तस्य मारिष ।
व्यधमत् सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ॥ २०॥

[2]स विचर्मा महाराज खड्गपाणिरभिद्रवत् ।
कृपस्तं शरसङ्घातैर् आद्रवन्तमपीडयत् ॥ २१॥

शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महारणे ।
चित्रकेतुसुतो दृष्ट्वा सुकेतुस्त्वरितो ययौ ॥ २२॥

---

1. अ—पद्यार्धानि न सन्ति 2. क—अर्धत्रयं नास्ति

स किरन् ब्राह्मणं युद्धे बहुभिर्निशितैश्शरैः ।
अभ्यगच्छदमेयात्मा शारद्वतरथं रणे ॥ २३॥

दृष्ट्वा विषक्तं तं युद्धे ब्राह्मणं च निवारितम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ २४॥

सुकेतुस्त्वथ राजेन्द्र गौतमं निशितैश्शरैः ।
विद्ध्वा विव्याध विंशत्या पुनश्चैनं त्रिभिश्शरैः ॥ २५॥

अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं वाहनान् राजंस् तस्य मर्माण्यताडयत् ॥ २६॥

[1]गौतमस्तु ततः क्रुद्धो धनुर्गृह्यापरं दृढम् ।
सुकेतुं त्रिंशता बाणैस् सर्वमर्मस्वताडयत् ॥ २७॥

स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
भूमिकम्पे यथा वृक्षश् चचालाकम्पितो भृशम् ॥ २८॥

चलतस्तस्य कायात् तु शिरो ज्वलितकुण्डलम् ।
सोष्णीषं सशिरस्त्राणं क्षुरप्रेण न्यपातयत् ॥ २९॥

तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
ततोऽस्य कायो वसुधां पश्चात् प्रापतदच्युत ॥ ३०॥

तस्मिन् हते महाराज पुत्रास्तस्य पदानुगाः ।

---

1. क-ङ—दृष्ट्वा तु वारितां युद्धे शस्त्रवृष्टिं दुरासदाम् ।
कृतवर्माणमभ्येत्य वारयामास पार्षतः ॥ [अधिकः पाठः]

गौतमं समरे त्यक्त्वा दिशस्ते विप्रदुद्रुवुः ॥ ३१॥

धृष्टद्युम्नं तु समरे सन्निवार्य महारथः ।
कृतवर्मा नदन् हृष्टस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३२॥

तदभूत् तुमुलं युद्धं वृष्णिपार्षतयोस्ततः ।
आमिषार्थे यथा युद्धं श्येनयोः क्रुद्धयोर्नृप ॥ ३३॥

धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिश्शरैः ।
आजघानोरसि क्रुद्धः पीडयन्निव सात्वतम् ॥ ३४॥

कृतवर्मा तु समरे पार्षतेन दृढाहतः ।
पार्षतं सरथं साश्वं छादयामास सायकैः ॥ ३५॥

सरथं छादितो राजन् धृष्टद्युम्नो न दृश्यते ।
[1]मेघैरिव परिच्छन्नो भास्करो जलधारिभिः ॥ ३६॥

विधूय तान् बाणगणाञ् शरैः कनकभूषणैः ।
व्यरोचत रणे राजन् धृष्टद्युम्नः कृतव्रणः ॥ ३७॥

ततस्तु पार्षतः क्रुद्धश् शस्त्रवृष्टिं सुदारुणाम् ।
कृतवर्माणमासाद्य व्यसृजत् पृतनापतिः ॥ ३८॥

तामापतन्तीं सहसा शस्त्रवृष्टिं सुदारुणाम् ।
शरैरनेकसाहस्रैस् सात्वतोऽवारयद्युधि ॥ ३९॥

यथा रुक्मरथेनाजौ वाहान् वाहैरमिश्रयत् ।

---

1. ख—अर्धद्वयं नास्ति

[1]तथैव सात्वतरथे वाहान् प्राहैरमिश्रयत् ॥ ४०॥

गृहीत्वा चर्म खड्गं च रथं तस्यावपुप्लुवे ॥ ४१

मिश्रितेष्वथ वाहेषु प्रत्यासन्ने च पार्षते ।
दृष्ट्वाऽपदानं तस्याशु गदां जग्राह सात्वतः ॥ ४२

गदापाणिस्ततो राजन् रथात् तूर्णमवप्लुतः ।
तमदृष्ट्वा रथोपस्थे सारथिं समताडयत् ॥ ४३

खड्गेन शितधारेण स हतः प्रापतद्रथात् ॥ ४३॥

[2]कृतवर्मा ततो हृष्टस् तलशब्दं चकार ह ।
पार्षतं चाब्रवीद्राजन्नेह्येहीति पुनः पुनः ॥ ४४॥

स तं न ममृषे युद्धे तलशब्दं समीरितम् ।
यथा नागस्सदा मत्तस् तलशब्दं समीरितम् ॥ ४५॥

अवप्लुत्य रथात् तस्मात् स्वरथं पुनरास्थितः ।
अभ्ययात् सात्वतं तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४६॥

कृतवर्मा तु सङ्क्रुद्धो दिधक्षुरिव पावकः ।
धृष्टद्युम्नमुखान् सर्वान् पाण्डवान् पर्यवारयत् ॥ ४७॥

ततो राजन् महेष्वासं कृतवर्माणमाशु वै ।
[3]गदां गृह्य पुनर्वेगात् कृतवर्माणमाहनत् ॥ ४८॥

---

1. ख—इदमर्धं नास्ति
2. अ-ख-घ—अर्धद्वयं नास्ति
3. अ-ख—अर्धद्वयं नास्ति

सोऽतिविद्धो बलवता न्यपतन्मूर्च्छया हतः ।
श्रुतर्वा रथमारोप्य अपोवाह रणाजिरात् ॥ ४९॥

धृष्टद्युम्नस्तु समरे जित्वा शत्रून् महारथः ।
कौरवान् समरे तूर्णं कालयामास सायकैः ॥ ५०॥

ततस्तु तावका योधा धृष्टद्युम्नमभिद्रवन् ।
सिंहनादरवांश्चक्रुस् ततो युद्धमवर्तत ॥ ५१॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ७३ ॥ कर्णपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥ १ ॥ अश्वत्थाम्ना युधिष्ठिरपराजयः ॥ २ ॥

---

सञ्जयः—

द्रौणिर्युधिष्ठिरं दृष्ट्वा युयुधानेन रक्षितम् ।
द्रौपदेयैस्तथा शूरैर् अभ्यवर्तत हृष्टवत् ॥ १

किरन्निषुगणान् घोरान् हेमपुङ्खाञ् शिलाशितान् ।
दर्शयन् विविधान् मार्गाञ् शिक्षया लघुहस्तवत् ॥ २

खं पूरयञ्छरैस्तीक्ष्णैर् वेगवद्भिस्समन्ततः ।

युधिष्ठिरस्य समरे दिशस्सर्वास्समावृणोत् ॥ ३
भारद्वाजशरैश्छन्नं न प्राज्ञायत किञ्चन ।
बाणभूतमभूत् सर्वम् आयोधनशिरो महत् ॥ ४
बाणजालं दिविष्ठं तत् स्वर्णपुङ्खैर्विभूषितम् ।
शुशुभे भरतश्रेष्ठ विमानमिव विष्ठितम् ॥ ५
तेन च्छन्ने रणे राजन् बाणजालेन भास्वता ।
अभ्रच्छायेव सञ्जज्ञे हतरश्मिर्दिवाकरः ॥ ६
तदद्भुतमपश्याम बाणभूते नभस्स्थले ।
न स्म सम्पतते भूतं द्रौणेर्दृष्ट्वा पराक्रमम् ॥ ७
सात्यकिर्यतमानस्तु धर्मराजश्च पाण्डवः ।
तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम् ॥ ८
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रत्युदीक्षितुम् ॥ ९
शेकुस्ते सर्वराजानस् तपन्तमिव भास्करम् ॥ ९॥
वध्यमाने महासैन्ये द्रौपदेया महारथाः ।
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि सङ्गताः ॥ १०॥
त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन् ॥ ११
सात्यकिः पञ्चविंशत्या द्रौणिं विद्ध्वा शिलीमुखैः ।
पुनर्विव्याध नाराचैस् सप्तभिस्स्वर्णभूषणैः ॥ १२

युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
सुतसोमस्तु नवभिश् शतानीकस्तथाऽष्टभिः ॥ १३

श्रुतकर्मा त्रिभिर्बाणैश् [1]श्रुतकीर्तिश्च सप्तभिः ।
अन्ये च बहवश्शूरा विव्यधुस्तं समन्ततः ॥ १४

स तु क्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्रत्यविध्यच्छिलाशितैः ॥ १५

श्रुतकीर्तिं च नवभिस् सुतसोमं च पञ्चभिः ।
अष्टभिश्श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिस्तथा ॥ १६

शतानीकं च नवभिर् धर्मपुत्रं च सप्तभिः ।
अथेतरान् महेष्वासान् द्वाभ्यां द्वाभ्यां समर्पयत् ॥ १७

श्रुतकीर्तेस्तदा चापं मुष्टौ चिच्छेद मारिष ॥ १७॥
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैश्शितैश्शरैः ॥ १८॥

ततो द्रौणिर्महाराज शरवर्षेण सर्वतः ।
छादयामास तत् सैन्यं समन्ताद्युद्धदुर्मदः ॥ १९॥

ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ।
द्विधा च्छित्वा प्रहस्याथ तं विव्याध त्रिभिश्शरैः ॥ २०॥

---

1. ख—श्रुतसेनस्तथाऽष्टभिः सप्तत्या सायकानां च
[अधिकः पाठः]

ततो धर्मसुतो राजा प्रगृह्यान्यन्महद्धनुः ।
द्रोणपुत्रं त्रिषष्ट्या तु बाह्वोरुरसि चार्पयत् ॥ २१॥

शैनेयस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वाऽनदद्भृशम् ॥ २२॥

छिन्नधन्वा ततो द्रौणिश् शक्त्या शक्तिमतां वरः ।
सारथिं पातयामास शैनेयस्य द्रुतं रथात् ॥ २३॥

अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् ।
शैनेयं शरवर्षेण छादयामास भारत ॥ २४॥

तस्याश्वाः प्रद्रुतास्सङ्ख्ये पतिते रथसारथौ ।
तत्र तत्रैव धावन्तस् समदृश्यन्त मारिष ॥ २५॥

युधिष्ठिरपुरोगास्तु द्रौणिं शस्त्रभृतां वरम् ।
अभ्यवर्तन्त वेगेन विसृजन्तश्शिताञ् छरान् ॥ २६॥

सहसाऽऽपततस्तान् वै क्रुद्धरूपान् समन्ततः ।
प्रहसन् प्रतिजग्राह द्रोणपुत्रो महारणे ॥ २७॥

ततश्शरशतज्वालस् सेनाकक्षं महारणे ।
द्रौणिर्ददाह समरे कक्षमग्निरिवोत्थितः ॥ २८॥

तद्बलं पाण्डवेयस्य द्रोणपुत्रशराहतम् ।
चुक्षुभे भरतश्रेष्ठ तस्मिन्नेव चमूमुखे ॥ २९॥

[1]तद्बलं पाण्डवेयस्य द्रोणपुत्रश्शरार्चिषा ।
तापयन् भरतश्रेष्ठ गभस्तिभिरिवांशुमान् ॥ ३०॥

भज्यमानममर्षेण ब्राह्मणस्य च सायकैः ।
क्षुभ्यते पाण्डवं सैन्यं तिमिनेव नदीमुखम् ॥ ३१॥

दृष्ट्वा तत्र महाराज द्रोणपुत्रपराक्रमम् ।
सर्वान् दुर्योधनः पार्थान् हतान् युद्धे ह्यमन्यत ॥ ३२॥

युधिष्ठिरस्तु त्वरितो द्रौणिं पीड्य महारथम् ।
अब्रवीद्द्रोणपुत्रं स रोषामर्षसमन्वितः ॥ ३३॥

युधिष्ठिरः—

जानामि त्वां युधि श्रेष्ठं वीर्यवन्तं महाबलम् ।
कृतास्त्रं कृतिनं चैव तथा लघुपराक्रमम् ॥ ३४॥

बलमेतद्भवान् सर्वं पार्षते यदि दर्शयेत् ।
ततस्त्वां बलवन्तं च कृतविद्यं च विद्महे ॥ ३५॥

न हि वै पार्षतं दृष्ट्वा समरे शत्रुसूदनम् ।
भवेत् तव बलं किञ्चिद् ब्रवीमि त्वा न तु द्विजम् ॥ ३६॥

नैव नाम तव प्रीतिर् नैव नाम कृतज्ञता ।
ततस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥ ३७॥

ब्राह्मणेन तपः कार्यं शमश्च दम एव च ।

---

1. अ—अर्धचतुष्टयं नास्ति

क्षत्रियेण धनुर्नाम्यं स भवान् ब्राह्मणब्रुवः ॥ ३८॥

कुरुष्व समरे कर्म ब्रह्मबन्धो यथेष्टतः ।
मिषतस्तेऽद्य समरे ध्रुवं जेष्यामि कौरवान् ॥ ३९॥

सञ्जयः—

एवमुक्तो महाराज द्रोणपुत्रस्स्मयन्निव ।
युक्तं तथ्यं च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत् ॥ ४०॥

अनुक्त्वा च ततः किञ्चिच् छरवर्षेण पाण्डवम् ।
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ॥ ४१॥

स च्छाद्यमानस्समरे द्रोणपुत्रेण मारिष ।
व्यपायासीद्रणे पार्थ प्रगृह्य महतीं चमूम् ॥ ४२॥

प्रयाते तु ततस्तस्मिन् धर्मपुत्रे युधिष्ठिरे ।
द्रोणपुत्रस्स्थितो राजन् प्रत्यादेशान्महात्मनः ॥ ४३॥

ततो युधिष्ठिरं त्यक्त्वा राजानं द्रौणिराहवे ।
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

---

## ॥ चतुःपञ्चाशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥ १ ॥ धृष्टद्युम्नेन दुर्योधनपराजयः ॥ २ ॥

सञ्जयः—

भीमसेनं सपाञ्चालं चेदिकेकयसंवृतम् ।
सेनापतिस्स्वयं क्रुद्धो वारयामास सायकैः ॥ १

ततस्तु चेदिकारूशान् सृञ्जयांश्च महारथान् ।
कर्णो जघान सङ्क्रुद्धो भीमसेनस्य पश्यतः ॥ २

भीमसेनस्ततः कर्णं विहाय रथसत्तमम् ।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ३

सूतपुत्रोऽपि समरे पाञ्चालान् केकयांस्तथा ।
सृञ्जयांश्च महेष्वासान् सञ्जघान सहस्रशः ॥ ४

संशप्तकेषु पार्थस्तु कौरवेषु वृकोदरः ।
पाञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ५

ते क्षत्रिया दह्यमानास् त्रिभिस्तैः पावकोपमैः ।
विनाशमगमंस्तीव्रं राजन् दुर्मन्त्रिते तव ॥ ६

ततो दुर्योधनः क्रुद्धो नकुलं नवभिश्शरैः ।
विव्याध भरतश्रेष्ठ चतुर्भिश्चास्य वाजिनः ॥ ७

ततः परममेयात्मा तव पुत्रो जनाधिप ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८

नकुलस्तु ततः क्रुद्धस् तव पुत्रं त्रिसप्तभिः ।
आजघान भृशं राजन् सहदेवश्च पञ्चभिः ॥ ९

तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि सङ्क्रुद्धः पञ्चभिः पञ्चभिश्शरैः ॥ १०

ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।
यमयोः प्रसभं वीरो विव्याधाशु त्रिभिस्त्रिभिः ॥ ११

तावन्ये धनुषी मृष्टे शक्रचापनिभे तथा ।
प्रगृह्य रेजतुश्शूरौ देवपुत्रसमौ युधि ॥ १२

ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं नृपम् ।
शरैर्ववर्षतुर्घोरैस् तोयदाविव पर्वतम् ॥ १३

ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ १४

धनुर्मण्डलमेवास्य ददृशे युधि भारत ।
सायकाश्चाप्यदृश्यन्त निस्सरन्तस्समन्ततः ॥ १५

तस्य सायकसञ्छन्नौ माद्रेयौ न विरेजतुः ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ गतप्रभौ ॥ १६

ते तु बाणा महाराज स्वर्णपुङ्खाश्शिलाशिताः ।

आच्छादयन् दिशस्सर्वास् सूर्यस्येव मरीचयः ॥ १७

बाणभूते ततस्तस्मिन् सञ्छन्ने च नभस्स्थले ।
राज्ञस्तु ददृशे रूपं कालान्तकयमोपमम् ॥ १८

पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः ।
मृत्योरिवान्तिकं प्राप्तौ पाण्डुपुत्रौ हि मेनिरे ॥ १९

ततस्सेनापती राजन् पाण्डवानां महारथः ।
पार्षतः प्रययौ राजन् यत्र राजा सुयोधनः ॥ २०

माद्रीपुत्रौ ततश्शूरावतिक्रम्य महारथौ ।
धृष्टद्युम्नस्तव सुतं पीडयामास सायकैः ॥ २१

तमविध्यदमेयात्मा तव पुत्रोऽत्यमर्षणः ।
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषोत्तमः ॥ २२

ततः पुनरमेयात्मा पुत्रस्ते पृथिवीपते ।
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च ॥ २३

अथास्य सशरं चापं मुष्टिदेशे विशां पते ।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे ॥ २४

तदपास्य धनुश्छिन्नं पाञ्चाल्यश्शत्रुकर्शनः ।
अन्यदादत्त वेगेन धनुर्भारसहं नवम् ॥ २५

क्रोधाद्रुधिररक्ताक्षस् संरम्भात् प्रज्वलन्निव ।
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ॥ २६

स पञ्चदश नाराचाञ् श्वसतः पन्नगानिव ।
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यपासृजत् ॥ २७

ते वर्म हेमविकृतं भित्त्वा राज्ञश्शिलीमुखाः ।
विविशुर्धरणीं वेगात् कङ्कबर्हिणवाससः ॥ २८

सोऽतिविद्धो महाराज पुत्रस्तव विराजते ।
वसन्ते पुष्पशबलो यथा स्यात् किंशुको महान् ॥ २९

स च्छिन्नमर्मा नाराचैः प्रहारैर्झर्झरीकृतः ।
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ॥ ३०

अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ।
सायकैर्दशभी राजन् भ्रुवोर्मध्ये समर्पयत् ॥ ३१

तस्य तेऽशोभयन् वक्त्रं कर्मारपरिमार्जिताः ।
प्रफुल्लपङ्कजं यद्वद् भ्रमरा मधुलिप्सवः ॥ ३२

तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ॥ ३३

ततो दुर्योधनस्याश्वान् हत्वा सूतं च पञ्चभिः ।
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ॥ ३४

रथं सोपस्करं छत्रं शक्तिं खङ्गं गदां ध्वजम् ।
भल्लैश्चिच्छेद दशभिः पुत्रस्य तव पार्षतः ॥ ३५

तपनीयाङ्गदं चित्रं नागं मणिमयं शुभम् ।

ध्वजं कुरुपतेश्छिन्नं ददृशुस्सर्वपार्थिवाः ॥ ३६

दुर्योधनं तु विरथं छिन्नवर्मायुधं रणे ।
भ्रातरं समुदैक्षन्त सोदरा भरतर्षभ ॥ ३७

तमारोप्य रथे राजन् कुण्डधारो नराधिपम् ।
अपोवाह रणादाशु धृष्टद्युम्नस्य पश्यतः ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

कर्णपराक्रमवर्णनम् ॥ १ ॥ भीमपराक्रमवर्णनम् ॥ २ ॥

---

सञ्जयः—

कर्णस्तु सात्यकिं हित्वा राजगृध्नुरमर्षणः ।
द्रोणहन्तारमुग्रेषुं ससाराभिमुखो बली ॥ १

तं पृष्ठतोऽन्वयात् क्रुद्धश्शैनेयोऽभिहतश्शरैः ।
वारणं जघने निघ्नन् विषाणाभ्यामिव द्विपः ॥ २

स भारत महानासीद् योधानां सुमहात्मनाम् ।

कर्णपार्षतयोर्युद्धे सङ्कुद्धानां महारणः ॥　　३

न पाण्डवानां नास्माकं कश्चिदासीत् पराङ्मुखः ।
प्रत्यदृश्यत यत् कर्णः पाञ्चालांस्त्वरितो ययौ ॥　　४

तस्मिन् क्षणे नरश्रेष्ठ नरवाजिरथक्षयः ।
प्रादुरासीदुभयतो राजन् मध्यगतेऽहनि ॥　　५

पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ।
सर्वतोऽभ्यद्रवन् कर्णं पतत्त्रिण इव द्रुमम् ॥　　६

तेषामातिरथिः क्रुद्धः प्रधानान् वै तरस्विनः ।
विचिन्वन्निव बाणाग्रैस् समासादयदग्रतः ॥　　७

व्याघ्रकेतुस्सुशर्मा च शुक्रश्चित्रायुधः क्रतुः ।
दुर्जयो रोचमानश्च सिंहसेनस्तथाऽष्टमः ॥　　८

महता रथवंशेन परिवव्रुर्नरोत्तमम् ॥　　८॥

सृजन्तस्सायकांस्तूर्णं कर्णमाहवशोभिनम् ।
यतमानांस्तु ताञ् शूरान् मनुजेन्द्राश्शितैश्शरैः ॥　　९॥

अष्टाभिरष्टौ राधेयः पाञ्चालान् न्यहनद्रणे ॥　　१०

अथापरान् महाराज सूतपुत्रः प्रतापवान् ।
जघान बहुसाहस्रान् योधान् युद्धविशारदान् ॥　　११

विष्णुं च विष्णुवर्माणं देवापिं भद्रमेव च ।

दण्डधारं च समरे चित्रं चित्रायुधं हरिम् ॥ १२

सिंहकेतुं रोचमानं शलभं च महारथम् ।
निजघान सुसङ्क्रुद्धश् चेदिकानां महारथान् ॥ १३

तेषामाददतः प्राणान् आसीदातिरथेर्वपुः ।
शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवातिभैरवम् ॥ १४

तत्र भारत कर्णेन मातङ्गास्ताडितास्शरैः ।
सर्वतोऽभ्यद्रवन् भीताः कुर्वन्तो महदाकुलम् ॥ १५

निपेतुरुर्व्यामपरे कर्णसायकताडिताः ।
कुर्वन्तो विविधान् नादान् वज्ररुग्णा इवाचलाः ॥ १६

गजवाजिमनुष्यैश्च निपतद्भिस्सहस्रशः ।
रथैर्भग्नैर्ध्वजैश्चैव समास्तीर्यत मेदिनी ॥ १७

नैवं भीष्मो न च द्रोणो नाप्यन्ये युधि तावकाः ।
चक्रुर्हि तादृशं कर्म यादृशं कृतवान् रणे ॥ १८

मृगमध्ये यथा सिंहो निर्भयो दृश्यते परान् ।
पाञ्चालानां तथा मध्ये चरन् कर्णो ह्यभीतवत् ॥ १९

सूतपुत्रोऽथ नागेषु हयेषु च रथेषु च ।
नरेषु च नरव्याघ्रश् चकार कदनं महत् ॥ २०

यथा मृगगणांस्त्रस्तान् सिंहो द्रावयते दिशः ।

पाञ्चालानां रथव्रातान् कर्णो द्रावयते तथा ॥ २१

सिंहं स्म हि यथा प्राप्य न जीवन्ति मृगाः क्वचित् ।
तथा कर्णमनुप्राप्य न जीवन्ति स्म सृञ्जयाः ॥ २२

वैश्वानरमुखं प्राप्य दह्यन्ते शलभा यथा ।
कर्णाग्निं समरे प्राप्य दग्धा भारत सृञ्जयाः ॥ २३

चेदिष्वेकेन कर्णेन पाञ्चालेषु च भारत ।
विश्राव्य नाम निहता बहवश्शूरसम्मताः ॥ २४

मतिर्ममासीद्राजेन्द्र दृष्ट्वा कर्णस्य विक्रमम् ।
नैकोऽप्यातिरथेर्जीवेत् पाञ्चालानां महारणे ॥ २५

सङ्ख्ये विमथ्य पाञ्चालान् सूतपुत्रः पुनः पुनः ।
अभ्यधावत् सुसङ्क्रुद्धः कुन्तीपुत्रं युधिष्ठिरम् ॥ २६

धृष्टद्युम्नश्च राजानं द्रौपदेयाश्च धन्विनः ।
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ॥ २७

शिखण्डी सहदेवश्च नकुलोऽन्ये च भूमिपाः ।
जनमेजयश्शिनेर्नप्ता बहवश्च प्रभद्रकाः ॥ २८

एते पुरोगमा भूत्वा धृष्टद्युम्नश्च संयुगे ।
कर्णमस्यन्तमिष्वस्त्रैस् ततक्षुरमितौजसम् ॥ २९

तांस्तानतिरथिस्सङ्ख्ये चेदिपाञ्चालपाण्डवान् ।

[1]एको बहूनभ्यपतद् गरुत्मानिव पन्नगान् ॥ ३०

भीमसेनस्तु कौन्तेयः कुरून् मद्रान् सकेकयान् ।
एकस्सङ्ख्ये महेष्वासश् चालयामास सायकैः ॥ ३१

तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः ।
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ॥ ३२

वाजिनश्च हतारोहाः पादाताश्च गतासवः ।
अशेरत महाराज [2]वमन्तो रुधिरं बहु ॥ ३३

ताडितास्सहसा नागा भीमसेनेन मारिष ।
निपतन्ति स्म वेगेन वज्ररुग्णा इवाचलाः ॥ ३४

निहतैस्तैर्महाराज वेगवद्भिर्महागजैः ।
शुशुभे वसुधा राजन् विकीर्णैरिव पर्वतैः ॥ ३५

सहस्रशश्च रथिनः पत्तयः पतितायुधाः ।
विक्षतास्समदृश्यन्त भीमाद्भीता गतासवः ॥ ३६

रथिभिस्सादिभिसूतैर् पादातैर्वाजिभिर्गजैः ।
भीमसेनशरैश्छिन्नैर् आस्तीर्णा वसुधाऽभवत् ॥ ३७

संस्तम्भितमिवातिष्ठद् भीमसेनभयार्दितम् ।
दुर्योधनबलं राजन् निरुत्साहं कृतं रणे ॥ ३८

---

1. ख—सात्यकिं च महाराज नाभ्यवर्तत संयुगे । [ अधिकः पाठः ]
2. ख—इतःपरं पादा न सन्ति

निश्चेष्टं तु बलं दीनं बभौ तस्मिन् रणाजिरे ॥ ३८॥

प्रसन्नसलिले काले यथा स्यात् सागरो नृप ।
[1]तद्वत् तव बलं तद्वै निश्चलं समवस्थितम् ॥ ३९॥

मन्युवीर्यबलोपेतं दर्पात् पर्यवरोपितम् ।
अभवत् तव पुत्रस्य तत् सैन्यं निष्प्रभं तदा ॥ ४०॥

ते बले भरतश्रेष्ठ वध्यमाने परस्परम् ।
रुधिरौघपरिक्लिन्ने रुधिरार्द्रे बभूवतुः ॥ ४१॥

सूतपुत्रोऽवधीत् क्रुद्धस् सृञ्जयानामनीकिनीम् ।
भीमसेनः कुरूणां च त्रिगर्तानां धनञ्जयः ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

1. क—इदमर्धं नास्ति

## ॥ षट्पञ्चाशोऽध्यायः ॥

अर्जुनपराक्रमवर्णनम् ॥ १ ॥ अर्जुनेन सुदक्षिणानुजस्य काम्भोजस्य वधः ॥ २ ॥

सञ्जयः—

वर्तमाने तथा रौद्रे सङ्ग्रामेऽद्भुतदर्शने ।
निहत्य पृतनामध्ये संशप्तकगणान् बहून् ॥ १
अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् ॥ १॥

अर्जुनः—

प्रभग्नं बलमेतद्धि योत्स्यमानं मया सह ॥ २
एते धावन्ति सगणास् संशप्तकमहारथाः ।
दुर्जया ह्येव समरे देवैरपि सवासवैः ॥ ३
अपारयन्तो मद्बाणान् सिंहशब्दान् मृगा इव ।
कुरवश्चाभिधावन्ति भीमसेनभयार्दिताः ॥ ४
दीर्यते च महत् सैन्यं सृञ्जयानां महारणे ॥ ४॥
हस्तिकक्ष्यो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः ॥ ५॥
न च कर्णं रणे शक्ता जेतुमेते महारथाः ।
दुर्जयो ह्येष समरे देवदानवराक्षसैः ॥ ६॥

जानीते हि भवान् कर्णं वीर्यवन्तं पराक्रमे ॥ ७

तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ।
त्रिगर्तान् वर्जयन् याहि सूतपुत्रं महाबलम् ॥ ८

वासुदेव महाबाहो यथा च तव रोचते ॥ ८॥

सञ्जयः—

तच्छ्रुत्वा वचनं तस्य गोविन्दः प्रहसन्निव ।
अब्रवीदर्जुनं तूर्णं कौरवान् याहि भारत ॥ ९॥

ततस्तव महत् सैन्यं गोविन्द प्रेषिता हयाः ।
हंसवर्णा विशंस्तूर्णं वहन्तोऽर्जुनमाहवे ॥ १०॥

केशवप्रेषितैरश्वैस् तैः काञ्चनविभूषितैः ।
आविशद्भिस्तव बलं चतुर्दिशमदीर्यत ॥ ११॥

तौ विदार्य महासेनां प्रविष्टौ केशवार्जुनौ ।
क्रुद्धौ संरम्भरक्ताक्षौ व्यभ्राजेतां महाद्युती ॥ १२॥

युद्धशौण्डौ समाहूतावागतौ तौ रणाध्वरे ।
यज्वभिर्विधिनाऽऽहूतौ मखे देवाविवाश्विनौ ॥ १३॥

क्रोधताम्रेक्षणौ वीरौ शुशुभाते महाबलौ ।
मदोत्कटौ यथा नागौ दृष्टिसञ्चारचारिणौ ॥ १४॥

क्रुद्धौ तौ तु महात्मानौ वेगवन्तौ बभूवतुः ।
तलशब्देन रुषितौ महानागाविवोत्कटौ ॥ १५॥

विगाह्य च रथानीकम् अश्वसङ्घांश्च फल्गुनः ।
व्यचरत् पृतनामध्ये पाशहस्त इवान्तकः ॥ १६॥

तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत ।
संशप्तकगणान् भूयः पुत्रस्ते समचूचुदत् ॥ १७॥

ततो रथसहस्रे द्वे द्विरदानां शतत्रयम् ।
चतुर्दश सहस्राणि वाजिनां च महाहवे ॥ १८॥

पूर्णे शतसहस्रे द्वे पादातीनां च धन्विनाम् ॥ १९

राजन् पुरुषवीराणां कौरवाणां समन्ततः ।
अभ्यवर्तन्त कौन्तेयं छादयन्तो महारथाः ॥ २०

सञ्छाद्यमानस्समरे परैः परबलार्दनः ।
दर्शयन् रौद्रमात्मानं पाशहस्त इवान्तकः ॥ २१

निघ्नन् संशप्तकान् पार्थः प्रेक्षणीयतरोऽभवत् ॥ २१॥

ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः ।
निरन्तरमिवाकाशम् आसीन्नुन्नं किरीटिना ॥ २२॥

किरीटिचापनिर्मुक्तैस् सम्पतद्भिर्महाशरैः ।
समाच्छन्नं बभौ व्योम काद्रवेयैरिव प्रभो ॥ २३॥

रुक्मपुङ्खान् शरान् घोरान् प्रसन्नान नतपर्वणः ।
अदर्शयदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ २४॥

मही वियद्दिशस्सर्वास् ससमुद्रास्सपर्वताः ।
फलन्तीति जना जज्ञुः पार्थस्य तलनिस्स्वनैः ॥ २५॥

हत्वा दश सहस्राणि क्षत्रियाणां महारथान् ।
संशप्तकानां कौन्तेयः प्रपक्षं त्वरितो ययौ ॥ २६॥

प्रपक्षं तं समासाद्य पार्थः काम्भोजरक्षितम् ।
प्रममाथ बलं भल्लैर् दानवानिव वासवः ॥ २७॥

प्रचिच्छेदाशु भल्लैश्च द्विषतामाततायिनाम् ।
शस्त्रपाणींस्तथा बाहूंस् तथैव च शिरांस्युत ॥ २८॥

अङ्गाङ्गावयवैश्छिन्नैर् व्यायुधास्तेऽपतन् भुवि ।
विष्वग्वाताभिसम्भग्ना बहुशाखा इव द्रुमाः ॥ २९॥

हस्त्यश्वरथपत्तीनां व्रातान् निघ्नन्तमर्जुनम् ।
सुदक्षिणादवरजश् शरवृष्ट्याऽभ्यवीवृषत् ॥ ३०॥

तस्यास्यतोऽर्धचन्द्राभ्यां स बाहू परिघोपमौ ।
पूर्णचन्द्राभवक्त्रं च क्षुरेणापाहरच्छिरः ॥ ३१॥

तत् पपात ततो वेगात् कुण्डलाभ्यां परिष्कृतम् ।
मनश्शिलागिरेश्शृङ्गं वज्रेणेव विदारितम् ॥ ३२॥

सुदक्षिणादवरजं काम्भोजं ददृशुर्हतम् ।
प्रांशुं कमलगर्भाभम् अत्यर्थं प्रियदर्शनम् ॥ ३३॥

काञ्चनस्तम्भसङ्काशं भिन्नं हेमगिरिं यथा ॥ ३४

ततोऽभवत् पुनर्युद्धं घोरमत्यर्थमद्भुतम् ॥ ३४॥
नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम् ॥ ३५

पार्थेषु निहतैरश्वैः काम्भोजैर्यवनैश्शकैः ।
शोणिताक्तैस्तदा रक्तं सर्वमासीद्विशां पते ॥ ३६

रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर् महामात्रैर्हतद्विपैः ॥ ३७

अन्योन्येन महाराज कृतो घोरो जनक्षयः ।
[1]आसीत् क्रुद्धेऽर्जुने कर्णे भीमसेने च दारुणम् ॥ ३८

तस्मिन् प्रपक्षे पक्षे च वध्यमाने महात्मना ।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् ॥ ३९

विधून्वानो महच्चापं कार्तस्वरविभूषितम् ।
आददानश्शरान् घोरान् स्वरश्मीनिव भास्करः ॥ ४०

तयोरासीन्महद्युद्धं धर्मभ्रात्रोरनैष्ठिकम् ।
विस्मापयिषतोर्लोकं यशश्चोत्तममिच्छतोः ॥ ४१

संशप्तकांश्च कौन्तेयः कुरूंश्चापि वृकोदरः ।
सूतपुत्रस्तु पाञ्चलान् भूयोऽघ्नंस्त्वरितश्शरैः ॥ ४२

एवमेव महाराज विनाशः पृथिवीक्षिताम् ।

---

1. अ-क-ब-ङ—नासीदमर्षम्

आसीत् क्रुद्धेऽर्जुने कर्णे भीमसेने महाबले ॥ ४३

युद्धं घोरतरं चासीत् तथाभूते चमूमुखे ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ७३ ॥ कर्णपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

संशप्तकैर्युध्यमानस्य पार्थस्याश्वत्थाम्नाऽऽह्वानम् ॥ १ ॥ तयोर्युद्धम् ॥ २ ॥

---

धृतराष्ट्रः—

कथं संशप्तकैस्साधम् अर्जुनस्याभवद्रणः ।
सूतपुत्रस्य पाञ्चालैः कथं युद्धं प्रवर्तितम् ॥ १

अश्वत्थाम्नश्च यद्युद्धम् अर्जुनस्य च सञ्जय ।
अन्येषां च मदीयानां सह पार्थैर्ब्रवीहि मे ॥ २

सञ्जयः—

शृणु राजन् यथावृत्तं सङ्ग्रामं ब्रुवतो मम ।
वीराणां शत्रुभिस्सार्धं देहपाप्मविनाशनम् ॥ ३

पार्थस्संसशप्तकबलं प्रविश्यार्णवसन्निभम् ।
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ॥ ४

पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च ।
शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः ॥ ५

संतस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ॥ ५॥

सुवृत्तानायतान् पुष्टांश् चन्दनागरुरूषितान् ।
सायुधान् सतलत्राणान् पञ्चास्यानिव पन्नगान् ॥ ६॥

बाहून् [1]पादानमित्राणां उच्चकर्ताऽर्जुनो रणे ॥ ७

धुर्यान् धुर्येतरान् सूतान् ध्वजांश्चापानि सायकान् ।
पाणीनूरूंश्च निशितैर् भल्लैश्चिच्छेद पाण्डवः ॥ ८

द्विपान् रथान् हयांश्चैव सारोहानर्जुनो युधि ।
शरैरनेकसाहस्रैर् निन्ये राजन् यमक्षयम् ॥ ९

ते प्रवीरास्सुसंरब्धा नर्दमाना इवर्षभाः ।
वाशितार्थमभिक्रुद्धा अभिद्रुत्य मदोत्कटाः ॥ १०

निघ्नन्तमभिजघ्नुस्ते शरैश्शृङ्गैरिवर्षभाः ॥ १०॥

तस्य तेषां च तद्युद्धम् अभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यद्वद् दैत्यानां सह वज्रिणा ॥ ११॥

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
इषुभिर्बहुभिस्तूर्णं विद्ध्वा प्राणान् निरासदत् ॥ १२॥

---

1. क-ख-घ—क्षुरैरमित्राणां

छिन्नत्रिवेणुचक्राक्षान् हतयोधाश्वसारथीन् ।
विध्वस्तायुधतूणीरान् समुन्मथितकेतनान् ॥ १३॥

सञ्छिन्नयोक्त्ररश्मीषांस् वित्रिवेणून् विकूबरान् ।
विशम्याबन्धुरयुगान् विजङ्घाजानुमण्डलान् ॥ १४॥

रथान् विशकलीकुर्वन् महाभ्राणीव मारुतः ।
[1]विस्मापयन् प्रेक्षकाणां द्विषतां भयवर्धनम् ॥ १५॥

महारथसहस्रस्य समं कर्मार्जुनोऽकरोत् ॥ १६

सिद्धदेवर्षिसङ्घाश्च चारणाश्चापि तुष्टुवुः ॥ १६॥

देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन् ।
केशवार्जुनयोर्मूर्ध्नि प्राह वाक् चाशरीरिणी ॥ १७॥

अशरीरिणी वाक्—

चन्द्रार्कानिलवह्नीनां कान्तिदीप्तिबलद्युतीः ।
यौ सदा बिभ्रतो वीराविमौ तौ केशवार्जुनौ ॥ १८॥

ब्रह्मेशानाविव पुरा वीरावेकरथे स्थितौ ।
सर्वभूतवरौ वीरौ नरनारायणाविमौ ॥ १९॥

सञ्जयः—

इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत ।
अश्वत्थामा सुसङ्क्रुद्धः कृष्णावभ्यद्रवद्रणे ॥ २०॥

---

1. क—अर्धेत्यं नास्ति

अथ पाण्डवमस्यन्तम् अमित्रान्तकराञ्छरान् ।
सेषुणा पाणिनाऽऽहूय प्रहसन् द्रौणिरब्रवीत् ॥ २१॥

अश्वत्थामा—

यदि मां मन्यसे वीर प्राप्तमार्यमिवातिथिम् ।
ततस्सर्वात्मनाऽद्य त्वं युद्धातिथ्यं प्रयच्छ मे ॥ २२॥

सञ्जयः—

एवमाचार्यपुत्रेण समाहूतो युयुत्सया ।
बहुमेनेऽर्जुनो त्मानम् इदं चाह जनार्दनम् ॥ २३॥

अर्जुनः—

संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् ।
यदत्रानन्तरं प्राप्तं तत् प्रशाधि महाभुज ॥ २४॥

सञ्जयः—

एवमुक्तोऽवहत् पार्थं कृष्णो द्रोणात्मजान्तिके ।
शैक्षेण विधिनाऽऽहूतं वायुरिन्द्रमिवाध्वरे ॥ २५॥

तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् ॥ २६

श्रीभगवान्—

अश्वत्थामन् स्थिरो भूत्वा प्रहराशु सहस्व च ।
निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम् ॥ २७

सूक्ष्मौ विवादौ विप्राणां सूक्ष्मौ क्षात्रौ जयाजयौ ॥ २७॥

न हि संक्षमसे मोहाद् दिव्यां पार्थस्य सत्क्रियाम् ।

समाप्तिमिच्छन् युध्यस्व स्थिरो भूत्वाऽद्य पाण्डवम् ॥ २८॥

सञ्जयः—

इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः ।
विव्याध केशवं षष्ट्या नाराचैरर्जुनं त्रिभिः ॥ २९॥

तस्यार्जुनस्सुसङ्क्रुद्धस् त्रिभिर्भल्लैश्शरासनम् ।
चिच्छेदाथान्यदादत्त द्रौणिर्घोरतरं धनुः ॥ ३०॥

सज्यं कृत्वा निमेषात्तु विव्याधार्जुनकेशवौ ।
त्रिभिश्शतैर्वासुदेवं सहस्रेण च पाण्डवम् ॥ ३१॥

ततश्शतसहस्राणि प्रयुतान्यर्बुदानि च ।
ससृजे द्रौणिरायत्तस् स्तम्भयामास चार्जुनम् ॥ ३२॥

इषुधेर्धनुषो ज्यायास् त्वङ्गुलिभ्यश्च मारिष ।
बाह्वोः कराभ्यामुरसो वदनाद् घ्राणनेत्रतः ॥ ३३॥

कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमचर्मभ्य एव च ।
रथध्वजाभ्यां च शरा निष्पेतुर्ब्रह्मवादिनः ॥ ३४॥

शरजालेन महता बद्ध्वा केशवपाण्डवौ ।
ननाद मुदितो द्रौणिर् महामेघौघनिस्स्वनः ॥ ३५॥

तैः पतद्भिर्महाराज द्रौणिमुक्तैस्समन्ततः ।
सञ्छादितो रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ ३६॥

ततश्शरशतैस्तीक्ष्णैर् भारद्वाजः प्रतापवान् ।

निश्चेष्टौ तावुभौ चक्रे रणे माधवपाण्डवौ ॥　　३७॥

हाहाकृतमभूत् सर्वं स्थावरं जङ्गमं तथा ।
चराचरस्य गोप्तारौ दृष्ट्वा सञ्छादितौ शरैः ॥　　३८॥

सिद्धचारणसङ्घाश्च सम्पेतुर्वै समन्ततः ।
अपि स्वस्ति भवेदद्य लोकानामिति चाब्रुवन् ॥　　३९॥

न मया तादृशो राजन् दृष्टपूर्वः पराक्रमः ।
सङ्ग्रामे यादृशो द्रौणेः कृष्णौ च्छादयतो रणे ॥　　४०॥

द्रौणेस्तु धनुषश्शब्दं रथानां त्रासनं रणे ।
अश्रौषं बहुशो राजन् सिंहस्य नदतो यथा ॥　　४१॥

ज्या चास्य चरतो युद्धे सव्यं दक्षिणमस्यतः ।
[1]विद्युदम्भोधरस्येव भ्राजमाना व्यदृश्यत ॥　　४२॥

स तदा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।
प्रमोहं परमं गत्वा प्रेक्षन्नास्ते धनञ्जयः ॥　　४३॥

विक्रमं च हृतं मेने आत्मनस्तेन संयुगे ॥　　४४

तदाऽस्य समरे राजन् वपुरासीत् सुदुर्दृशम् ।
द्रौणेस्तत् कुर्वतः कर्म यादृग्रूपं पिनाकिनः ॥　　४५

वर्धमाने ततस्तत्र द्रोणपुत्रे विशां पते ।

---

1. ख—विद्युदम्भोदितो मेने आत्मनस्तेन संयुगे ।
मध्ये अर्धद्वयं नास्ति

हीयमाने च कौन्तेये कृष्णं रोषस्समाविशत् ॥ ४६

स रोषाभिश्वसन् राजन् निर्दहन्निव चक्षुषा ।
द्रौणिं ददर्श सङ्ग्रामे फल्गुनं च मुहुर्मुहुः ॥ ४७

ततः क्रुद्धोऽब्रवीत् कृष्णः पार्थं सप्रणयं वचः ॥ ४७॥

श्रीभगवान्—

अत्यद्भुतमहं पार्थ त्वयि पश्यामि संयुगे ।
यत् त्वां विशेषयत्याजौ द्रोणपुत्रोऽद्य भारत ॥ ४८॥

कच्चित्ते गाण्डिवं हस्ते मुष्टिर्वा न व्यशीर्यत ।
कच्चिद्वीर्यं यथापूर्वं भुजयोर्वा बलं तव ॥ ४९॥

उदीर्यमाणं हि रणे पश्यामि द्रौणिमाहवे ॥ ५०

गुरुपुत्र इति ह्येनं मानयन् पाण्डवर्षभ ।
उपेक्षां मा कृथाः पार्थ नायं कालो ह्युपेक्षितुम् ॥ ५१

अर्जुनः—

पश्य माधव दौरात्म्यं गुरुपुत्रस्य मां प्रति ।
वधं प्राप्तौ मन्यते नौ प्रावृत्य शरवेश्मनि ॥ ५२

एषोऽस्य हन्मि सङ्कल्पं शिक्षया च बलेन च ॥ ५२॥

सञ्जयः—

एवमुक्त्वाऽस्य चिच्छेद भल्लैः कर्मारमार्जितैः ।
धनुश्छत्रं पताकां च रथशक्तिं गदां वराम् ॥ ५३॥

अश्वत्थाम्नश्शरानस्ताञ् छित्त्वैकैकं त्रिभिस्त्रिभिः ।
व्यधमन्नरश्रेष्ठो नीहारमिव मारुतः ॥ ५४॥

ततस्संशप्तकान् भूयस् साश्वसूतरथद्विपान् ।
सपदातिगणानुग्रैर् बाणैर्विव्याध पाण्डवः ॥ ५५॥

ये ये ददृशिरे तत्र यद्यद्रूपं तदा जनाः ।
ते ते तत्तच्छरैर्व्याप्तं मेनिरे मानमेव च ॥ ५६॥

गाण्डीवप्रच्युतास्ते वै नानारूपाः पतत्रिणः ।
क्रोशे साग्रे स्थिताञ्जघ्नुर् द्विपांश्च पुरुषान् रणे ॥ ५७॥

भल्लैश्छिन्नाः कराः पेतुर् द्विपानां मदवर्षिणाम् ।
तथा यथा परशुभिः प्रकृत्ताश्शाल्मलिद्रुमाः ॥ ५८॥

पश्चात्तु शैलवत् पेतुस् ते गजास्सह सादिभिः ।
वज्रिवज्रप्रमथिता यथा शैलचयास्तथा ॥ ५९॥

गन्धर्वनगराकारान् विधिवत् कल्पितान् रथान् ।
विनीतैर्जवनैर्युक्तान् आस्थितान् युद्धदुर्मदैः ॥ ६०॥

शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत् ।
स्वलङ्कृतानश्वसादीन् पत्तीन् निघ्नन् रणाजिरे ॥ ६१॥

धनञ्जययुगान्ताग्निस् संशप्तकमहार्णवम् ।
व्यशोषयत दुश्शाम्यं तिग्मैश्शरगभस्तिभिः ॥ ६२॥

तं च द्रौणिमहाशैलं नाराचैस्सूर्यसन्निभैः ।

निर्बिभेद महावेगैस् त्वरन् वज्रीव पर्वतम् ॥ ६३॥

तमाचार्यसुतः क्रुद्धस् साश्वयन्तारमाशुगैः ।
बीभत्सुनाशकद्योद्धुं पार्थस्तानन्तराऽच्छिनत् ॥ ६४॥

ततः परमसङ्क्रुद्धः काण्डकोशमवासृजत् ।
अश्वत्थामाभिरूपाय गृहानतिथये यथा ॥ ६५॥

अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात् ।
अपाङ्क्तेयानिव त्यक्त्वा यथा पाङ्क्तेयमर्थिनम् ॥ ६६॥

स्थितास्संशप्तका राजन् दृष्ट्वा युद्धं महात्मनोः ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[अस्मिन्नध्याये ६७ श्लोकाः]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

अर्जुनेनाश्वत्थामपराजयः ॥

---

सञ्जयः—

ततस्समभवद्युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥ १

सन्तापयन्तावन्योन्यं तौ दीप्तैश्शररश्मिभिः ।
लोकत्रासकरावास्तां विमार्गस्थाविव ग्रहौ ॥ २

ततोऽविध्यद्भ्रुवोर्मध्ये नाराचेनार्जुनो भृशम् ।
[1]स तेन विबभौ द्रौणिर् ऊर्ध्वरश्मिर्यथा रविः ॥ ३

अथ कृष्णौ शरशतैर् अश्वत्थाम्नाऽर्पितौ भृशम् ।
स्वरश्मिजालविकचौ युगान्तार्काविवासतुः ॥ ४

ततोऽर्जुनस्सर्वतोधारमस्त्रम्
अवासृजद्वासुदेवेऽभिभूते ।
द्रौणायनिश्चाप्यहनत् पृषत्कैर्
वज्राग्निवैवस्वतदण्डकल्पैः ॥ ५

स केशवं चार्जुनं चातितेजा
विव्याध मर्मस्वतितीव्रकर्मा ।
बाणैस्सुमुक्तैरतितीव्रवेगैर्
यैराहतो मृत्युरपि व्यथेत ॥ ६

द्रौणेरिषूनर्जुनस्सन्निवार्य
व्यायच्छतस्ताद्द्विगुणैस्सुपुङ्खैः ।
तं साश्वसूतध्वजमेकवीरम्
आवृत्य संशप्तकसैन्यमार्च्छत् ॥ ७

---

1. ख—इदमर्धद्वयं नास्ति

धनूंषि बाणानिषुधीर्धनुर्ज्याः
पाणींस्तथा पाणिगतं च शस्त्रम् ।
छत्राणि केतूंस्तुरगान् रथेषां
वस्त्राणि माल्यान्यथ भूषणानि ॥ ८

चर्माणि वर्माणि मनोहराणि
प्रसह्य तेषां स शिरांसि चैव ।
चिच्छेद पार्थो द्विषतां सुमुक्तैर्
बाणैस्स्थितानामपराङ्मुखानाम् ॥ ९

सुकल्पितास्स्यन्दनवाजिनागास्
समास्थिताः कृतयत्नैर्नृवीरैः ।
पार्थेरितैर्बाणगणैर्निरस्तास्
तैरेव सार्धं नृवरैर्विनेशुः ॥ १०

पद्मार्कपूर्णेन्दुसमाननानि
किरीटमाली मकुटोत्कटानि ।
भल्लार्धचन्द्रक्षुरसन्निकृतान
न्यपातयच्छत्रुशिरांस्यजस्रम् ॥ ११

अथ द्विपैर्दैत्यरिपुद्विपाभैर्
देवारिकल्पा बलमन्युदर्पाः ।

कलिङ्गवङ्गाङ्गनिषादवीरा
जिघांसवः पाण्डवमभ्यधावन् ॥ १२

तेषां द्विपानां निचकर्त पार्थश्
चर्माणि वर्माणि करान् नियन्तॄन् ।
ध्वजाः पताकाश्च ततः प्रपेतुर्
वज्राहतानीव गिरेस्तटानि ॥ १३

तेषु प्रभग्नेषु गुरोस्तनूजं
बाणैः किरीटी नवसूर्यवर्णैः ।
प्रच्छादयामास महाभ्रजालैर्
वायुस्समुद्यन्तमिवांशुमन्तम् ॥ १४

ततोऽर्जुनेषूनिषुभिर्निरस्य
द्रौणिश्शरैरर्जुनवासुदेवौ ।
प्रच्छादयित्वा दिवि चन्द्रसूर्यौ
ननाद सोऽम्भोद इवातपान्ते ॥ १५

तमर्जुनस्तांश्च पुनस्त्वदीयान्
अभ्यर्दितस्तैरभिसृत्य शस्त्रैः ।
बाणान्धकारं सहसैव कृत्वा
विव्याध पार्थो वरहेमपुङ्खैः ॥ १६

नाप्याददत् सन्दधन्नैव मुञ्चन्
बाणान् रणेऽदृश्यत सव्यसाची ।
रथान् स नागांस्तुरगान् पदातीन्
संस्यूतदेहान् ददृशुर्हतांश्च ॥ १७

सन्धाय नाराचवरान् दशाशु
द्रौणिस्त्वरन्नेकमिवोत्ससर्ज ।
तेषां च पञ्चार्जुनमभ्यविध्यन्
पञ्चाच्युतं निर्बिभिदुस्सुपुङ्खाः ॥ १८

तैराहतौ सर्वमनुष्यमुख्या-
वसृक्क्षरौ वैश्रवणेन्द्रकल्पौ ।
समाप्तविद्येन तथाऽभिभूतौ
हतौ स्विदेताविति मेनिरेऽन्ये ॥ १९

ततोऽर्जुनं प्राह दशार्हनाथः
प्रमाद्यसे किं जहि योधमेनम् ।
कुर्याद्धि दोषं समुपेक्षितोऽसौ
कष्टो महान् व्याधिरिवाक्रियावान् ॥ २०

तथेति चोक्त्वाऽच्युतमप्रमादी
द्रौणेः प्रहस्याशु किरीटमाली ।

भुजौ वरौ चन्दनसारदिग्धौ
वक्षश्शिरोऽथाप्रतिमं तथोरू ॥ २१

गाण्डीवमुक्तैः कुपिताहिकल्पैर्
द्रौणिं शरैस्संयति निर्बिभेद ॥ २१॥

छित्त्वा च रश्मींस्तुरगानविध्यत्
ते तं रणादूहुरतीव दूरम् ॥ २२

स तैर्हृतो वातजवैस्तुरङ्गैर्
द्रौणिर्दृढं पार्थशराभिभूतः ।
आवृत्य नैयेष पुनस्स योद्धुं
पार्थेन सार्धं मतिमान् विमृश्य ॥ २३

जानञ्जयं नियतं वृष्णिवीरे
धनञ्जये चाङ्गिरसां वरिष्ठः ।
[1]विवेश कर्णस्य बलं तरस्वी
क्षीणोत्साहः क्षीणबाणास्त्रयोगः ॥ २४

नियम्य तु हयान् द्रौणिस् समाश्वास्य पुनः पुनः ।
गजाश्वरथसम्बाधं कर्णस्य प्राविशद्बलम् ॥ २५

[2]प्रतीपकामे तु रणाद् अश्वत्थाम्नि हृते हयैः ।
मन्त्रौषधिक्रियायोगैर् व्याधौ देहादिवाहृते ॥ २६

---

1. अ-क-ख—नास्तीदमर्धम् 2. अ—अर्धद्वयं नास्ति

संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ ।
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

---

## ॥ एकोनषष्टितमोऽध्यायः ॥

अर्जुनेन दण्डदण्डधारयोर्वधः ॥

---

सञ्जयः—

अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः ।
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम् ॥ १

निवर्तयित्वा तु रथं केशवोऽर्जुनमब्रवीत् ।
वाहयन्नेव तुरगान् गरुडानिलरंहसः ॥ २

मागधोऽसावतिक्रान्तो द्विरदेन प्रमाथिना ।
भगदत्तादनवमश् शिक्षया च बलेन च ॥ ३

एनं हत्वा निहन्तासि पुनस्संशप्तकानिति ।
वाक्यान्ते प्रापयत् पार्थं दण्डधारगजं प्रति ॥ ४

स मागधानां प्रवरोऽङ्कुशग्रहे
महाबलश्शौर्यगुणैस्समन्वितः ।
सपत्नसेनां प्रममाथ दारुणो
महीं समग्रां बलवानिव ग्रहः ॥ ५

सुकल्पितं दानवनागसन्निभं
महाभ्रनिर्ह्लादसमस्वनं रणे ।
समास्थितो नागवरं नरेश्वरो
रथाश्वमातङ्गनरप्रमाथिनम् ॥ ६

स नागयन्तॄन् समरे महारथान्
सपत्तिसङ्घांस्तुरगान् ससादिनः ।
द्विपांश्च बाणैर्निजघान वीर्यवान्
समन्ततो भ्रमिव कालचक्रवत् ॥ ७

[1]नरांश्च कांस्यायसवर्मभूषणान्
निपात्य पत्तीनपि वाजिभिस्सह ।
व्यपोथयद्दन्तिवरेण शुष्मिणा
सशब्दवत् स्थूलनलान् यथा तथा ॥ ८

अथार्जुनो ज्यातलनेमिनिस्वने
मृदङ्गभेरीबहुशङ्खनादिते ।

1. ख—पादपञ्चकं नास्ति "मृदङ्गभेरीबहुशङ्खनादिते" इत्येतन्मात्रं वर्तते

[1]रथाश्वमातङ्गसहस्रनादिते
रथोत्तमेनाभ्यपतद्द्विपोत्तमम् ॥ ९

ततोऽर्जुनं द्वादशभिश्शरोत्तमैर्
जनार्दनं षोडशभिस्समार्पयत् ।
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभिस्
ततो ननाद प्रजहास चासकृत् ॥ १०

ततोऽस्य पार्थस्सगुणेषुकार्मुकं
चकर्त भल्लैर्ध्वजमप्यलङ्कृतम् ।
पुनर्नियन्तॄन् सहसाऽथ गोप्तृभिस्
ततस्स चुक्रोध गिरिव्रजेश्वरः ॥ ११

ततोऽर्जुनं भिन्नकटेन दन्तिना
घनाघनेनानिलतुल्यरंहसा ।
अतीत्य चुक्षोभयिपुर्जनार्दनं
धनञ्जयं चापि जघान तोमरैः ॥ १२

अथास्य बाहू द्विपहस्तसन्निभौ
शिरश्च पूर्णेन्दुनिभाननं त्रिभिः ।
क्षुरैः प्रचिच्छेद सहैव पाण्डवस्
ततो द्विपं बाणशतैस्समार्पयत् ॥ १३

---

1. ख—अयं पादो नास्ति

स पार्थबाणैस्तपनीयभूषणैस्
समावृतः काञ्चनवर्मभृद्द्विपः ।
भृशं चकाशे निशि पर्वतो यथा
दवाग्निना प्रज्वलितौषधिद्रुमः ॥ १४

स वेदनार्तोऽम्बुदनिस्वनो नदन्
भ्रमंश्चलन् प्रस्खलदातुरोऽद्रवत् ।
पपात रुग्णस्सनियन्तृकस्तथा
यथा गिरिर्वज्रविघूर्णितः पुरा ॥ १५

हिमावदातेन सुवर्णमालिना
हिमाद्रिकूटप्रतिमेन दन्तिना ।
हते रणे भ्रातरि दण्ड आव्रजज्
जिघांसुरिन्द्रावरजं सहार्जुनम् ॥ १६

[1]सतोमरैरर्ककरप्रभैस्त्रिभिर्
जनार्दनं पञ्चभिरेव चार्जुनम् ।
समर्पयित्वा विननाद चार्दयंस्
ततोऽस्य बाहू विचकर्त पाण्डवः ॥ १७

क्षुरप्रकृत्तौ तु भृशं सतोमरौ
शुभाङ्गदौ चन्दनरूषितौ भुजौ ।

1. ख—इदं पादद्वयं नास्ति

गजात् पतन्तौ युगपद्विरेजतुर्
यथोरगौ पर्वतशृङ्गतो महीम् ॥ १८

अथार्धचन्द्रेण हृतं किरीटिना
पपात दण्डस्य शिरः क्षितिं द्विपात् ।
स्वशोणितार्द्रं निपतद्रराज तद्
दिवाकरोऽस्तादिव पश्चिमां दिशम् ॥ १९

अथ द्विपं श्वेतनगाग्रसन्निभं
दिवाकरांशुप्रतिमैश्शरोत्तमैः ।
बिभेद पार्थस्स पपात नानदन्
हिमाद्रिकूटं कुलिशाहतं यथा ॥ २०

ततोऽपरे तत्प्रतिमा गजोत्तमा
जिगीषवस्संयति सव्यसाचिनम् ।
तथा हतास्तेऽपि यथैव तौ द्विपौ
ततः प्रभग्नं सुमहद्रिपोर्बलम् ॥ २१

गजा रथाश्वाः पुरुषाश्च सङ्घशः
परस्परघ्नाः परिपेतुराहवे ।
परस्परं प्रस्खलितास्समाहता
भृशं च तत्तद्बहु भाषिणो हताः ॥ २२

अथार्जुनं स्वे परिवार्य सैनिकाः
पुरन्दरं देवगणा इवाब्रुवन् ॥ २२॥

पाण्डवसैनिकाः—

अभैष्म यस्मान्मरणादिव प्रजास्
स वीर दिष्ट्या निहतस्त्वया रिपुः ॥ २३

न चेत् परित्रास्यदिमाञ्जनान् भयाद्
द्विषद्भिरेवं बलिभिः प्रपीडितान् ।
तथाऽभविष्यद्द्विषतां प्रमोदनं
यथा [1]हतास्माकमिहारयस्त्वया ॥ २४

सञ्जयः—

इतीव भूयश्च सुहृद्भिरीरिता
निशम्य वाचस्सुमनास्तदाऽर्जुनः ।
यथानुरूपं प्रतिपूज्य तं जनं
जगाम संशप्तकसङ्घहा पुनः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

1. हताः अस्माकमिति पदच्छेदः सन्धिरार्षः

## ॥ षष्टितमोऽध्यायः ॥

अर्जुनेन संशप्तकानां वधः ॥

सञ्जयः—

प्रत्येत्याथ पुनर्जिष्णुर् हत्वा संशप्तकान् बभौ ।
वक्रानुवक्रगमनाद् अङ्गारक इव ग्रहः ॥ १

पार्थबाणैर्हतास्तेऽथ नराश्वरथकुञ्जराः ।
विचेलुर्बभ्रमुर्नेदुः पेतुर्मम्लुश्च भारत ॥ २

धुर्यान् धुर्येतरान् सूतान् ध्वजांश्चापासिसायकान् ।
पाणीन् पाणिगतं शस्त्रं बाहूनपि शिरांसि च ॥ ३

भल्लैः क्षुरैरर्धचन्द्रैर् वत्सदन्तैश्च पाण्डवः ।
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ॥ ४

तं प्रवीरास्त्वदीयानां नर्दमाना हि दुद्रुवुः ।
[1]वाशितार्थे युध्यमाना वृषाणां वृषभं यथा ॥ ५

तेषां तस्यापि तद्युद्धम् अभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यादृग् दैत्यानां सह वज्रिणा ॥ ६

अथाविध्यत् त्रिभिर्बाणैर् दन्दशूकैरिवाहिभिः ।
उग्रायुधोऽस्य तज्जिष्णुश् शिरः कायादपाहरत् ॥ ७

1. ख—इदमर्धं नास्ति

ततस्ते सर्वतः पार्थं नानाशस्त्रैरवीवृषन् ।
मरुद्भिः प्रेरिता मेघा हिमवन्तमिवोष्णगे ॥ ८

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
सम्यगस्तैश्शरैस्सर्वान् अहितानहनद्बहून् ॥ ९

छिन्नत्रिवेणुजङ्घेषान् हताश्वान् हतसारथीन् ।
सञ्छिन्नरश्मियोक्त्राक्षान् सानुकर्षायुधान् रथान् ॥ १०
विध्वस्तसर्वसन्नाहान् बाणैश्चक्रेऽर्जुनस्त्वरन् ॥ १०॥

ते रथास्तत्र विध्वस्ताः परार्ध्या भान्त्यनेकशः ।
धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ॥ ११॥

द्विपास्सम्भिन्नमर्माणो वज्राशनिनिभैश्शरैः ।
पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा ॥ १२॥

अनेकैश्च शिलाधौतैर् वज्रानलविषोपमैः ।
शरैर्निजघ्निवान् पार्थो महेन्द्र इव दानवान् ॥ १३॥

सारोहास्तुरगाः पेतुर् बहवोऽर्जुनपीडिताः ।
निर्यज्जिह्वाः क्षितौ क्षीणा रुधिरार्द्रास्सुदुर्दृशः ॥ १४॥

नराश्वनागा नाराचैस् संस्यूतास्सव्यसाचिना ।
बभ्रमुश्चस्खलुर्नेदुः पेतुर्मम्लुश्च मारिष[1] ॥ १५॥

---

1. अ-ब—अनेकैश्च शिलाधौतैर् वज्रानलविषोपमैः ।
शरैर्निजघ्निवान् पार्थो महेन्द्र इव दानवान् ॥
[ अधिकः पाठः ]

महार्हवर्माभरणा नानावर्णाम्बरायुधाः ।
सरथाश्वद्विपा वीरा हताः पार्थेन शेरते ॥　　१६॥

निर्भयाः पुण्यकर्माणो विशिष्टाभिजनश्रुताः ।
गतास्शरीरैर्वसुधाम् ऊर्जितैः कर्मभिर्दिवम् ॥　　१७॥

अथार्जुनरथं वीरास् त्वदीयास्समभिद्रवन् ।
नानाजनपदाध्यक्षास् सगणा जातमन्यवः ॥　　१८॥

ऊह्यमना रथाश्वेभैः पत्तयश्च जिघांसवः ।
समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम् ॥　　१९॥

तदायुधमहावर्षं क्षिप्तं योधमहाम्बुदैः ।
व्यधमन्निशितैर्बाणैः क्षिप्रमर्जुनमारुतः ॥　　२०॥

साश्वपत्तिद्विपरथं महाशस्त्रौघविप्लवम् ।
सहसा सन्तितीर्षन्तं पार्थं शस्त्रास्त्रसेतुना ॥　　२१॥

अथाब्रवीद्वासुदेवः पार्थं किं क्रीडसेऽनघ[1] ।
संशप्तकान् प्रमथ्यैनान् अथ कर्णवधे त्वर ॥　　२२॥

तथेत्युक्त्वाऽर्जुनः कृष्णं शिष्टान् संशप्तकानथ ।
क्षपयिष्यंस्तदाऽस्त्रेण दैत्यानिन्द्र इवावधीत् ॥　　२३॥

---

1. क—एते बलाधिका व्यासाः पार्थ किं क्रीडसेऽनघ ।
[अधिकः पाठः]

[1]नाददत् सन्दधच्चैव दृष्टः कैश्चिद्रणेऽर्जुनः ।
विमुञ्चन् वा शरान् घोरान् दृश्यन्ते वै नरा हताः ॥ २४॥

आश्चर्यमिति गोविन्दो ब्रुवन्नश्वानचोदयत् ।
हंसाङ्गगौरास्ते सेनां हंसास्सर इवाविशन् ॥ २५॥

ततस्सङ्ग्रामभूमिं तां वर्तमाने जनक्षये ।
अवेक्षमाणो गोविन्दस् सव्यसाचिनमब्रवीत् ॥ २६॥

श्रीभगवान्—

एष पार्थ महारौद्रो वर्तते भरतक्षयः ।
पृथिव्यां पार्थिवानां च दुर्योधनकृते महान् ॥ २७॥

पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् ।
हतानामपविद्धानि कलापानिषुधींस्तथा ॥ २८॥

[2]जातरूपमयैः पुङ्खैश् शरांश्च नतपर्वणः ।
तैलधौतांश्च नाराचान् निर्मुक्तानिव पन्नगान् ॥ २९॥

[3]आकीर्णांस्तोमरावापांश् चित्रान् हेमविभूषितान् ।
दण्डान् कनकचित्रांश्च रणभूमिं च संवृतान् ॥ ३०॥

हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान् ।
वर्माणि चापविद्धानि तोमरांश्च बहून् रणे ॥ ३१॥

---

1. ख-च—अर्दयन् सहसा शत्रूञ्छिन्दन् कांश्चिद्रणेऽर्जुनः । [अधिकः पाठः]

2. अ—नास्त्यर्धद्वयम् 3. अ-च—अर्धद्वयं नास्ति

सुवर्णविकृतान् प्रासाञ् शक्तीः कनकभूषिताः ।
जाम्बूनदमयैः पट्टैर् बद्धाश्च विविधा गदाः ॥ ३२॥

जातरूपमयांश्चोमान् पट्टसान् हेमभूषितान् ।
दण्डैः कनकचित्रैश्च विप्रविद्धान् परश्वथान् ॥ ३३॥

परिघान् भिण्डिपालांश्च भुसुण्ठीः क्रकचानपि ।
अयस्कन्धांश्च पतितान् मुसलानि गुरूणि च ॥ ३४॥

शतघ्नीः पश्य चित्राश्च [1]विपुलान् परिघांस्तथा ।
चक्राणि चापविद्धानि खड्गांश्चापि महारथान् ॥ ३५॥

नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ।
जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः ॥ ३६॥

गदाविमथितैर्गात्रैर् मुसलैर्भिन्नमस्तकान् ।
गजवाजिरथक्षुण्णान् पश्य योधान् सहस्रशः ॥ ३७॥

गजवाजिमनुष्याणां शरशक्त्यृष्टितोमरैः ।
निस्त्रिंशैः पट्टसैः प्रासैर् नखरैर्लगुडैरपि ॥ ३८॥

शरीरैर्बहुधा च्छिन्नैश् शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न संवृता रणभूमयः ॥ ३९॥

बाहुभिश्चन्दनादिग्धैस् साङ्गदैर्लब्धभूषणैः ।
सतलत्रैस्सकेयूरैर् भाति भारत मेदिनी ॥ ४०॥

---

1. ख—इतः अष्टौ पादा न सन्ति

साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलङ्कृतैः ।
हस्तिहस्तोपमैश्छिन्नैर् ऊरुभिश्च तरस्विनाम् ॥ ४१॥

बद्धचूडामणिवरैश् शिरोभिश्चारुकुण्डलैः ।
निकृत्तैर्वृषभाक्षाणां विराजति वसुन्धरा ॥ ४२॥

गजवाजिमनुष्याणां शरशक्त्यृष्टितोमरैः ।
कबन्धैश्शोणितादिग्धैश् छिन्नगात्रशिरोधरैः ॥ ४३॥

भूर्भाति भरतश्रेष्ठ शान्तार्चिर्भिरिवाग्निभिः ॥ ४४

रथांश्च बहुधा च्छिन्नान् हेमकिङ्किणिभूषितान् ।
वाजिनश्च हतान् पश्य निष्कीर्णान्त्राञ् शराचितान् ॥ ४५

अनुकर्षानुपासङ्गान् पताका विविधान् ध्वजान् ।
रथिनां च महाशङ्खान् पाण्डरांश्च प्रकीर्णकान् ॥ ४६

निरस्तजिह्वान् मातङ्गाञ् शयानान् पर्वतोपमान् ।
वैजयन्तीर्विचित्राश्च हताश्च गजयोधिनाम् ॥ ४७

वारणानां परिस्तोमान् संयुक्तान् रक्तकम्बलान् ।
विपाटितविचित्राश्च रौप्यचित्राः कुथास्तथा ॥ ४८

भिन्नाश्च बहुधा घण्टाः पतद्भिस्ताडिता गजैः ।
वैडूर्यमणिदण्डांश्च पतितानङ्कुशांस्तथा ॥ ४९

अश्वानां च युगानीषान् रत्नचित्रपरिच्छदान् ।
पश्य सादिभुजाग्रेषु सुवर्णविकृताः कशाः ॥ ५०

विचित्रान् मणिचित्रांश्च जातरूपपरिष्कृतान् ।
अश्वास्तरपरिस्तोमान् राङ्कवान् पतितान् भुवि ॥ ५१

चूडामणीन् नरेन्द्राणां विचित्राः काञ्चनस्रजः ।
छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ५२

चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।
कॢप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ॥ ५३

वदनैः पश्य सञ्छन्नां महीं शोणितकर्दमाम् ॥ ५३॥

सजीवांश्च नरान् पश्य कूजमानान् समन्ततः ।
उपास्यमानांश्च बहून् न्यस्तशस्त्रैर्विशां पते ॥ ५४॥

ज्ञातिभिश्च जलक्लिन्नान् रोदमानैर्मुहुर्मुहुः ।
उत्क्रान्तानपरान् योधांश् छादयित्वा तरस्विनः ॥ ५५॥

पुनर्युद्धाय गच्छन्ति जये लुब्धाः प्रमन्यवः ॥ ५६

अपरे तत्र तत्रैव परिधावन्ति मानवाः ।
ज्ञातिभिः पतितैश्शूरा याच्यमाना जलं तदा ॥ ५७

जलार्थं च गताः केचिन्मृता वै बहवो जनाः ।
सन्निवृत्ताश्च ते शूरा दृष्ट्वा चैनान् विचेतसः ॥ ५८

जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परम् ॥ ५८॥

जलं पीत्वा मृतान् पश्य पिबन्त्यन्ये च भारत ॥ ५९

[1]परिष्वज्य प्रियानन्ये बान्धवान् बन्धुवत्सलाः ।
विसंज्ञास्समरे योधास् तत्र तत्र महारणे ॥ ६०

पश्यापरान् नरश्रेष्ठ सन्दष्टोष्ठपुटान् पुनः ।
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान् महारणम् ॥ ६१

एतत्तवैवानुरूपं कर्मार्जुन महाहवे ।
दिवि वा देवराजस्य त्वया यत् कृतमद्य वै ॥ ६२

सञ्जयः—

एवं तां दर्शयन् कृष्णो रणभूमिं किरीटिने ।
गच्छन्नेवाश्रृणोच्छब्दं दुर्योधनबले महत् ॥ ६३

शङ्खदुन्दुभिनिर्घोषं भेरीपणवमिश्रितम् ।
रथाश्वनरनागानां पादशब्दांश्च दारुणान् ॥ ६४

प्रविश्य तद्बलं कृष्णस् तुरगैर्वातवेगितैः ।
[2]पाण्ड्येनाभ्यर्दितां सेनां त्वदीयां वीक्ष्य विष्ठितः ॥ ६५

स हि नानाविधैश्शस्त्रैर् इष्वस्त्रप्रवरो युधि ।
न्यहनद् द्विषतां व्रातान् गतासूनन्तको यथा ॥ ६६

गजवाजिमनुष्याणां शरीराणि शितैश्शरैः ।
हत्वा प्रहरतां श्रेष्ठो विदेहासूनथाकरोत् ॥ ६७

---

1. ख—ये गच्छन्ति जये लुब्धाः प्रधावन्ति प्रमूर्धवः । [अधिकः पाठः]

2. अ—षडर्धानि न सन्ति

शत्रुप्रवीरैरस्तानि नानाशस्त्राणि सायकैः ।
छित्त्वा तानवधीत् पाण्ड्यश् शत्रूञ् शक्र इवासुरान् ॥ ६८

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ७३ ॥ कर्णपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये ६८ श्लोकाः ]

---

## ॥ एकषष्टितमोऽध्यायः ॥

अश्वत्थाम्ना पाण्ड्यवधः ॥

---

धृतराष्ट्रः—

प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः ।
न त्वस्य कर्म सङ्ग्रामे त्वया सञ्जय कीर्तितम् ॥ १

तस्य विस्तरतो ब्रूहि प्रवीरस्यास्य विक्रमम् ।
शिक्षां वीर्यं च मानं च प्रभावं दर्पमेव च ॥ २

सञ्जयः—

द्रोणभीष्मकृपद्रौणिकर्णार्जुनजनार्दनान् ।
समाप्तविद्यान् धनुषि श्रेष्ठान् यान् मन्यसे रथान् ॥ ३

तुल्यतां द्रोणभीष्माभ्याम् आत्मनो यो न मृष्यते ।

वासुदेवार्जुनाभ्यां च न्यूनतां [1]चापि नेच्छति ॥ ४

स पाण्ड्यो नृपतिश्रेष्ठस् सर्वशस्त्रभृतां वरः ।
कर्णस्यानीकमहनत् पाशहस्त इवान्तकः ॥ ५

तदुदीर्णरथाश्वेभपत्तिप्रवरसङ्कुलम् ।
कुलालचक्रवद्भ्रान्तं पाण्ड्येनाभ्यर्दितं बलम् ॥ ६

व्यश्वसूतध्वजरथान् विप्रविद्धायुधान् रथान् ।
सम्यगस्तैश्शरैः पाण्ड्यो वायुर्मेघानिवाक्षिपत् ॥ ७

द्विरदान् प्रवरारोहान् विपताकायुधध्वजान् ।
सपादरक्षान् न्यहनद् वज्रेणाद्रीनिवाद्रिहा ॥ ८

सशक्तिप्रासयष्टींश्च हयारोहान् हयानपि ।
पुलिन्दकषबाह्लीकान् निषादान्ध्रकतङ्कणान् ॥ ९

दाक्षिणात्यांश्च भोजांश्च क्रूरान् सङ्ग्रामकर्कशान् ।
विशस्त्रकवचान् बाणैः कृत्वा पाण्ड्योऽकरोद्व्यसून् ॥ १०

चतुरङ्गं बलं राजन् निघ्नन्तं पाण्ड्यमाहवे ।
दृष्ट्वा द्रौणिरसम्भ्रान्तम् असम्भ्रान्ततरो ययौ ॥ ११

आभाष्य चैनं मधुरम् अनुसृत्य ह्यभीतवत् ।
प्राह प्रहरतां श्रेष्ठस् स्मितपूर्वं समाह्वयत् ॥ १२

---

1. क-ख-ङ—नैच्छदात्मनि

अश्वत्थामा—

राजन् कमलपत्राक्ष प्रधानायुधवाहन ।
वज्रसंहननाचिन्त्य प्रख्यातबलपौरुष ॥ १३

मुष्टिश्लिष्टाङ्गुलिभ्यां च व्यायताभ्यां महद्धनुः ।
दोर्भ्यां विष्फारयन् भासि महाजलदवद्भृशम् ॥ १४

शरवर्षैर्महावेगैर् अमित्रानभिवर्षसि ।
मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे ॥ १५

रथद्विरदपत्त्यश्वान् एकः प्रमथसे बहून् ।
मृगसङ्घानिवारण्ये नखैर्भीमबलो हरिः ॥ १६

महता रथघोषेण दिवं भूमिं च नादयन् ।
वर्षान्ते सस्यगां सूर्यो भाभिरादीपयन्निव ॥ १७

संस्पृशानश्शरैः पूर्णौ तूणी चाशीविषोपमैः ।
मयैवैकेन युध्यस्व त्र्यम्बकेन यथाऽन्तकः ॥ १८

सञ्जयः—

एवमुक्तस्तथेत्युक्त्वा प्रहस्यैनं स पार्थिवः ।
कर्णिना द्रोणतनयं विव्याध मलयध्वजः ॥ १९

मर्मभेदिभिरत्युग्रैर् बाणैरग्निशिखोपमैः ।
मर्मस्वभ्यहनद्द्रौणिः पाण्ड्यमाचार्यनन्दनः ॥ २०

ततोऽपरान् न वांस्तूर्णं नाराचान् कङ्कवाससः ।

गत्या दशम्या संयुक्तान् अश्वत्थामाऽप्यवासृजत् ॥ २१

तानच्छिनत् तदा पाण्ड्यश् [1]चतुर्भिरपरैश्शरैः ।
चतुरोऽभ्याहनच्चाश्वान् आशु ते व्यसवोऽभवन् ॥ २२

अथ द्रोणसुतस्येषून् छित्वा छित्वा शितैश्शरैः ।
धनुर्ज्यां विततां पाण्ड्यश् चिच्छेदादित्यतेजसः ॥ २३

अथाधिज्यं महत् कृत्वा धनुर्द्रौणिरमित्रहा ।
[2]प्रेक्ष्य चाशु रथे युक्तान् नरैरन्यान् हयोत्तमान् ॥ २४

ततश्शरसहस्राणि प्रेषयामास स द्विजः ।
इषुसम्बाधमाकाशम् अकरोद्दिश एव च ॥ २५

ततस्तानस्यतस्सर्वान् द्रौणेर्बाणान् महात्मनः ।
जानन्नप्यक्षयान् पाण्ड्योऽशातयत् पुरुषर्षभः ॥ २६

प्रततांस्तान् प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः ।
चक्ररक्षौ ततस्तस्य प्राणुदन्निशितैश्शरैः ॥ २७

अथ तल्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः ।
प्रास्यद्द्रोणसुतो बाणान् वर्षं पूषानुजो यथा ॥ २८

अष्टावष्टशतान्यूहुश् शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ २९

तमन्तकमिव क्रुद्धम् अन्तकालान्तकोपमम् ।

---

1. क—इतः षट् पादा न सन्ति 2. क—इदमर्धं नास्ति

ये ये ददृशिरे रूपं विसंज्ञाः प्रायशोऽभवन् ॥ ३०

आचार्यपुत्रस्तां सेनां बाणवृष्ट्या ह्यवीवृषत् ।
पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महीम् ॥ ३१

द्रौणिपर्जन्यसृष्टां तां बाणवृष्टिं दुरासदाम् ।
वायव्यास्त्रेण स क्षिप्रं विद्ध्वा पाण्ड्यानिलोऽनदत् ॥ ३२

तस्य नानदतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश् छित्वा बाणैरपातयत् ॥ ३३

सूतमेकेषुणा हत्वा महाजलदनिस्स्वनम् ।
धनुश्छित्त्वाऽर्धचन्द्रेण व्यधमत् तिलशो रथम् ॥ ३४

अस्त्रैरस्त्राणि संवार्य च्छित्त्वा सर्वायुधानि च ।
प्राप्तमप्यहितं द्रौणिर् नावधीद्युद्धतृष्णया ॥ ३५

हतेश्वरं द्विरदवरं सुकल्पितं
शराभिमृष्टः प्रतिशब्दगो बली ।
तदाऽध्यतिष्ठन्मलयध्वजस्त्वरन्
यथाऽद्रिशृङ्गं हरिरुन्नदंस्तथा ॥ ३६

स तोमरं भास्कररश्मिवर्चसं
बलात्नसर्गोत्तमयत्नमन्युभिः ।
ससर्ज शीघ्रं प्रतिपीडयन् गजं
गुरोस्सुताय द्रमिलेश्वरो नदन् ॥ ३७

मणिप्रवेकोत्तमवज्रहाटकैर्
अलङ्कृतं चांशुकमाल्यमौक्तिकैः ।
हृतो मयाऽसीत्यसकृन्मुदा नदन्
पराभिनद्द्रौणिवराङ्गभूषणम् ॥ ३८

तदर्कचन्द्रग्रहवैद्युतत्विषं
भृशाभिघातात् पतितं विघूर्णितम् ।
महेन्द्रवज्राभिहतं महास्वनं
यथाऽद्रिशृङ्गं धरणीतले तथा ॥ ३९

ततः प्रजज्वाल परेण मन्युना
पदाहतो नागपतिर्यथा तथा ।
समाददे चान्तकदण्डसन्निभान्
इषूनमित्रान्तकरांश्चतुर्दश ॥ ४०

द्विपस्य पादाग्रकरान् स पञ्चभिर्
नृपस्य बाहुं च शिरोऽथ पत्रिभिः ।
जघान षड्भिष्षड्तूपमत्विषस्
स पाण्ड्यराजानुचरान् महारथान् ॥ ४१

सुदीर्घवृत्तौ वरचन्दनोक्षितौ
सुवर्णमुक्तामणिवज्रभूषितौ ।

भुजौ धरायां पतितौ नृपस्य तौ
　विचेष्टतुस्तार्क्ष्यहताविवोरगौ ॥　　　　४२

शिरश्च तत् पूर्णशशिप्रभाननं
　सरोषताम्रायतनेत्रमुन्नसम् ।
क्षितौ विबभ्राज सुदीप्तकुण्डलं
　विशाखयोर्मध्यगतो यथा शशी ॥　　　　४३

समाप्तविद्यं तु गुरोस्सुतं नृपस्
　समाप्तकर्माणमुपेत्य ते सुतः ।
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा
　जिते बलौ विष्णुमिवामरेश्वरः ॥　　　　४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ७३ ॥ कर्णपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ द्विषष्टितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

धृतराष्ट्रः—

पाण्ड्ये हते किमकरोद् अर्जुनो युधि सञ्जय ।
एकवीरेण कर्णेन द्राविते च युधिष्ठिरे ॥ १

समाप्तविद्यो बलवान् युक्तो वीरश्च पाण्डवः ।
सर्वभूतेष्वनुज्ञातश् शङ्करेण च धीमता ॥ २

तस्मान्मम भयं तीव्रम् अमित्रघ्नाद्धनञ्जयात् ।
स यत् तत्राकरोत् पार्थस् तन्ममाचक्ष्व सञ्जय ॥ ३

सञ्जयः—

हते पाण्ड्येऽर्जुनं कृष्णस् त्वरन्नाह वचस्तदा ॥ ३॥

श्रीभगवान्—

हतं पश्यस्व राजानम् अपयातांश्च पाण्डवान् ।
कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ॥ ४॥

असौ भीमो महेष्वासः प्रतिवृत्तो रणं प्रति ।
तमन्येऽप्यनुवर्तन्ते धृष्टद्युम्नपुरोगमाः ॥ ५॥

पाञ्चालास्सृञ्जयाश्चैव पाण्डवानां च ये मुखम् ॥ ६

निवृत्ते च पुनः पार्थे भग्नं शत्रुबलं महत् ।

कौरवान् द्रवतो ह्येष कर्णो वारयतेऽर्जुन ॥ ७

अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ।
असौ गच्छति कौन्तेय द्रौणिश्शस्त्रभृतां वरः ॥ ८

तमेष प्रद्रुतस्सङ्ख्ये धृष्टद्युम्नो महारथः ॥ ८॥

[1]अश्वत्थाम्ना हतास्सङ्ख्ये सर्वे कौन्तेय सृञ्जयाः ।
रथाश्वनरनागानां कृतं च कदनं महत् ॥ ९॥

सञ्जयः—

इत्येतत् सर्वमाचष्ट वासुदेवः किरीटिने ॥ १०

एतच्छ्रुत्वा च दृष्ट्वा च भ्रातॄणां व्यसनं महत् ।
वाहयाश्वान् हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ११

ततः प्रायाद्धृषीकेशो रथेनाप्रतिमो युधि ।
तदा रेणुस्समभवत् पुनस्तत्र महारणे ॥ १२

[2]ततो राजन् महानासीत् सङ्ग्रामो रोमहर्षणः ।
[3]सिंहनादरवाश्चात्र प्रादुरासन् समागमे ॥ १३

उभयोस्सेनयो राजन् मृत्युं कृत्वा निवर्तनम् ॥ १३॥

ततः पुनस्समाजग्मुर् अभीताः कुरुसृञ्जयाः ।
युधिष्ठिरमुखाः पार्था वैकर्तनमुखा वयम् ॥ १४॥

---

1. अ—अर्धद्वयं नास्ति  2. अ-घ—नास्तीदमर्धम्

3. ख—इदमर्धं नास्ति

ततः प्रववृते युद्धं घोररूपं विशां पते ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनम् ॥ १५॥
तस्मिन् प्रवृत्ते सङ्ग्रामे तुमुले रोमहर्षणे ।
संशप्तकेषु वीरेषु किञ्चिच्छिष्टेषु भारत ॥ १६॥
धृष्टद्युम्नो महाराज सहितस्सर्वराजभिः ।
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ १७॥
आगच्छमानांस्तान् दृष्ट्वा सङ्ग्रामे विजयैषिणः ।
दधारैको रणे कर्णो जलौघानिव पर्वतः ॥ १८॥
तमासाद्य रणे कर्णं व्यशीर्यन्त महारथाः ।
यथाऽचलं समासाद्य वार्योघास्सर्वतोदिशम् ॥ १९॥
तयोरासीन्महाराज सङ्ग्रामो घोरदर्शनः ।
प्रयुध्यतोर्महारङ्गे बलिनोर्विजिगीषतोः ॥ २०॥
धृष्टद्युम्नस्तु राधेयं शरेण नतपर्वणा ।
भित्वा च तत्र वै कर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २१॥
विजयं तु धनुश्श्रेष्ठं विधून्वानो महारथः ।
ववर्ष शरवर्षाणि तोयवर्षमिवाम्बुदः ॥ २२॥
पार्षतस्य धनुश्छित्वा शरांश्चाशीविषोपमान् ।
ताडयामास सङ्क्रुद्धः पार्षतं नवभिश्शरैः ॥ २३॥
ते हेमविकृतं वर्म भित्त्वा तस्य महात्मनः ।

शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ २४॥

तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ।
ततोऽन्यद्धनुरादाय सारवद्भारसाधनम् ॥ २५॥

कर्णं विव्याध सप्तत्या शरैस्सन्नतपर्वभिः ॥ २६

तथैव राजन् कर्णोऽपि पार्षतं शत्रुतापनम् ।
द्रोणशत्रुं महेष्वासो विव्याध नवभिश्शरैः ॥ २७

पुनरन्यं महाराज शरं कनकभूषितम् ।
प्रेषयामास सङ्क्रुद्धो मृत्युदण्डमिवापरम् ॥ २८

तमापतन्तं सहसा घोररूपं विशां पते ।
चिच्छेद शतधा राजन् पार्षतः कृतहस्तवत् ॥ २९

दृष्ट्वा निपतितं भूमौ शरं कर्णो विशां पते ।
पार्षतं शरवर्षेण समन्तात् पर्यवारयत् ॥ ३०

विव्याध चैनं त्वरितो नाराचैस्तत्र सप्तभिः ।
तं प्रत्यविध्यद्दशभिश् शरैर्हेमविभूषितैः ॥ ३१

तयोर्युद्धं समभवद् दृष्टिश्रोत्रमनोहरम् ।
आसीद्घोरं च चित्रं च प्रेक्षणीयं च सर्वशः ॥ ३२

सर्वेषां तत्र भूतानां रोमहर्षो व्यजायत ।
दृष्ट्वा तत् समरे कर्म कर्णपार्षतयोर्नृप ॥ ३३

एतस्मिन्नन्तरे द्रौणिर् अभ्ययात् तं महारथम् ।

पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् ॥ ३४

स दृष्ट्वा समरे कर्णं पार्षतं च महारथम् ।
अभ्यभाषत सङ्क्रुद्धः पार्षतं शत्रुतापनम् ॥ ३५

रथं रथेन सम्पीड्य पार्षतस्य तु ब्राह्मणः ॥ ३५॥

अश्वत्थामा—

तिष्ठ तिष्ठेति ब्रह्मघ्न न मे जीवन् विमोक्ष्यसे ॥ ३६

सञ्जयः—

इत्युक्त्वा समरे वीर शीघ्रकृन्निशितैश्शरैः ।
छादयामास समरे यतमानो महारथः ॥ ३७

यत्नतः परया शक्त्या धृष्टद्युम्नं महारणे ।
योधयामास समरे क्रुद्धरूपो विशां पते ॥ ३८

यथा हि समरे द्रौणिः पार्षतं दृश्य मारिष ।
नातिहृष्टमना भूत्वा मेने तं मृत्युमात्मनः ॥ ३९

तथा द्रौणिं रणे दृष्ट्वा पार्षतश्शत्रुपूगहा ।
[1]नातिहृष्टमना ह्यासीन्मन्वानो मृत्युमात्मनः ॥ ४०

स ज्ञात्वा समरेऽत्मानं शस्त्रावध्यं महाबलः ।
जवेनाभिययौ द्रौणिं कालः कालक्षये यथा ॥ ४१

द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नं रणार्थिनम् ।

---

1. क—नासीदमर्षेद्दृयम्

क्रोधेन निश्श्वसन् वीरः पार्षतं समभिद्रवत् ॥ ४२

तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम् ।
प्रगृह्य महती चापे शरासनविराजिते ॥ ४३

अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् ।
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशां पते ॥ ४४

अश्वत्थामा—

पाञ्चालापशदाद्य त्वां प्रेषयामि यमक्षयम् ।
पापं हि यत्त्वया कर्म कृतं तातं घ्नता रणे ॥ ४५

अद्य त्वं प्राप्स्यसे तद्वै यथा ह्यकुशलस्तथा ।
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे ॥ ४६

नापक्रामसि वा मोहात् सत्यमेतद्ब्रवीमि ते ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ ७३ ॥ कर्णपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

अर्जुनस्य द्रौणिग्रस्तधृष्टद्युम्नरक्षणपूर्वकं द्रौणिं निर्जित्य संशप्तकान् प्रति गमनम् ॥

सञ्जयः—

एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ॥ ॥

धृष्टद्युम्नः—

[1]आशिषं तां प्रवक्तव्यां मामको दास्यते तव ।
येनैव ते पितुर्दत्ता यतमानस्य संयुगे ॥ १॥

एष ते प्रतिवाक्यं वै असिर्दास्यति मामकः ।
येन कृत्तं तव पितुर् यतमानस्य तच्छिरः ॥ २॥

यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः ।
त्वामिदानीं कथं युद्धे न हनिष्यामि किल्बिषम् ॥ ३॥

सञ्जयः—

एवमुक्त्वा महाराज सेनापतिररिन्दमः ।
सुतीक्ष्णेनाथ भल्लेन द्रौणिं विव्याध पार्षतः ॥ ४॥

ततो द्रोणसुतः क्रुद्धश् शरैस्सन्नतपर्वभिः ।
प्राच्छादयद्दिशो राजन् धृष्टद्युम्नस्य संयुगे ॥ ५॥

1. अ—अर्धद्वयं नास्ति

नैवान्तरिक्षं न दिशो नापि योधास्सहस्रशः ।
दृश्यन्ते तैर्महाराज शरैश्छन्नास्समन्ततः ॥ ६॥
[1]एकस्सन् वारयामास प्रेक्षणीयस्समन्ततः ॥ ७
तथैव पार्षतो राजन् द्रौणिमाहवशोभिनम् ।
शरैस्सञ्छादयामास सूतपुत्रस्य पश्यतः ॥ ८
राधेयोऽपि महाराज पाञ्चालान् पाण्डवैस्सह ।
द्रौपदेयान् युधामन्युम् उत्तमौजसमेव च ॥ ९
सात्यकिं च महाराज योधांश्चान्यान् सहस्रशः ।
एकस्तान् वारयामास प्रेक्षणीयस्समन्ततः ॥ १०
धृष्टद्युम्नोऽपि समरे द्रौणेश्चिच्छेद कार्मुकम् ।
क्षुरप्रेण सुतीक्ष्णेन पश्यतां सर्वयोधिनाम् ॥ ११
तदपास्य धनुश्छिन्नम् अन्यदादत्त कार्मुकम् ।
वेगवत् समरे घोरं शरांश्चाशीविषोपमान् ॥ १२
स पार्षतस्य राजेन्द्र धनुश्शक्तिं ध्वजं गदाम् ।
हयान् सूतं रथं चैव निमेषाद्व्यधमच्छरैः ॥ १३
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ॥ १४
द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः ।

---

1. क—इदमर्धं नास्ति

चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः ॥ १५

रथादनवरूढस्य धन्विनो बाहुशालिनः ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ १६

धृष्टद्युम्नं तु विरथं हताश्वं हतसारथिम् ।
शस्त्रैश्च बहुधा विद्धम् अस्त्रैश्च शकलीकृतम् ॥ १७

नातरद्भरतश्रेष्ठ यतमानो महारथः ॥ १७॥

तस्यान्तमिषुभी राजन् यदा द्रौणिर्न गच्छति ।
अथ त्यक्त्वा रथं वीरः पार्षतं त्वरितोऽन्वगात् ॥ १८॥

प्रगृह्य विपुलं खड्गं जातरूपपरिष्कृतम् ॥ १९

तस्य सम्पततो राजन् वपुरासीन्महात्मनः ।
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमम् ॥ २०

एतस्मिन्नेव काले तु [1]केशवः परवीरहा ।
अब्रवीद्भरतश्रेष्ठम् अर्जुनं जयतां वरम् ॥ २१

श्रीभगवान्—

पश्य द्रौणिं पार्षतस्य यतमानं वधं प्रति ।
यत्नं करोति विपुलं हन्याच्चैनं न संशयः ॥ २२

त्रायस्वैनं महाबाहो पार्षतं युद्धदुर्मदम् ।
द्रौणेरास्यगतं वीर मृत्योरास्यगतं यथा ॥ २३

1. ख—माधवोऽर्जुनमब्रवीत्-मध्ये अर्धं नास्ति

सञ्जयः—

एवमुक्त्वा महाराज वासुदेवः प्रतापवान् ।
प्रैषयत् तुरगांस्तत्र यत्र द्रौणिर्व्यवस्थितः ॥ २४

ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः ।
पिबन्त इव चाकाशं जग्मुर्द्रौणेर्महारथम् ॥ २५

दृष्ट्वा यान्तौ महाराज वासुदेवधनञ्जयौ ।
धृष्टद्युम्नवधे राजंश् चक्रे यत्नं महाबलः ॥ २६

विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर ।
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महारथः ॥ २७

ते शरा हेमविकृता गाण्डीवप्रेरिता भृशम् ।
द्रौणिमासाद्य विविशुर् वल्मीकमिव पन्नगाः ॥ २८

विद्धस्तु तैश्शरैर्घोरैर् द्रोणपुत्रः प्रतापवान् ।
उत्सृज्य समरे राजन् पाञ्चालममितौजसम् ॥ २९

आरुरोह रथं वीरो धनञ्जयशरार्दितः ॥ २९॥

प्रगृह्य च धनुश्श्रेष्ठं पार्थं विव्याध सायकैः ॥ ३०

एतस्मिन्नन्तरे शूरस् सहदेवो जनाधिप ।
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ ३१

अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः ।
तं द्रोणपुत्रस्संरब्धो बाह्वोरुरसि चार्पयत् ॥ ३२

क्रोधितस्तु रणे पार्थो नाराचं कालसन्निभम् ।
द्रोणपुत्राय चिक्षेप यमदण्डमिवापरम् ॥ ३२

स ब्राह्मणस्यांसदेशे निपपात महाद्युतेः ॥ ३३॥

स विह्वलो महाराज शरवेगेन संयुगे ।
निषसाद रथोपस्थे वैक्लव्यं परमं ययौ ॥ ३४॥

तं तु मत्वा हतं वीरं सारथिश्शत्रुकर्शनम् ।
अपोवाह रथेनाजौ त्वरमाणो रणाजिरात् ॥ ३५॥

अथोत्कृष्टं महाराज पाञ्चालैर्जितकाशिभिः ।
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ॥ ३६॥

वादित्राणि च सर्वाणि प्रावाद्यन्त सहस्रशः ।
सिंहनादश्च सञ्जज्ञे दृष्ट्वा युद्धं तदद्भुतम् ॥ ३७॥

ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ।
दृष्ट्वाऽर्जुनं रणे क्रुद्धः प्रेक्षते च मुहुर्मुहुः ॥ ३८॥

द्वैरथं चापि पार्थेन गन्तुकामो महाद्युतिः ॥ ३९

एवं कृत्वाऽब्रवीत् पार्थो वासुदेवं धनञ्जयः ॥ ३९॥

अर्जुनः—

याहि संशप्तकान् कृष्ण कार्यमेतत् परं मतम् ॥ ४०

सञ्जयः—

ततः प्रयातो दाशार्हश्श्रुत्वा पाण्डवभाषितम् ।

रथेनातिपताकेन मनोमारुतरंहसा ॥ ४१

एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
तावकानां परेषां च राजन् दुर्मन्त्रिते तव ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[अस्मिन्नध्याये ४२ श्लोकाः ]

---

## ॥ चतुष्षष्टितमोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

ततः प्रववृते भूयस् सङ्ग्रामो राजसत्तम ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ १

धनूंषि बाणपरिघान् असितोमरपट्टसान् ।
मुसलानि मुसुण्ठीश्च शक्तियष्टिपरश्वथान् ॥ २

गदाः प्रासाञ् शितान् कुन्तान् भिण्डिपालान् महाङ्कुशान् ।
प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥ ३

धनुर्ज्यातलशब्देन दिशश्च प्रदिशो वियत् ।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ ४

तेन शब्देन बहवस् संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाघोरं कलहान्तमभीप्सवः ॥ ५

ज्यातलत्रधनुश्शब्दाञ् शस्त्राणां च निपात्यताम् ।
ताडितानां च पततां निनादांश्चैव दन्तिनाम् ॥ ६

बाणशब्दांश्च विविधाञ् शूराणां चैव गर्जताम् ।
श्रुत्वा शब्दान् भृशं नेदुः पेतुर्मम्लुश्च भारत ॥ ७

तेषामाददतां बाणान् शस्त्रवर्षं च वर्षताम् ।
बहूनातिरथिः कर्णः प्रममाथ तथेषुभिः ॥ ८

पञ्च पाञ्चालवीराणां रथानां दश सप्त च ।
साश्वसूतरथान् कर्णश् शरैर्निन्ये यमक्षयम् ॥ ९

योधमुख्या महावेगाः पाण्डूनां कर्णमभ्ययुः ।
शिक्षितास्तमभिद्रुत्य परिवव्रुस्समन्ततः ॥ १०
[1]दीर्घमम्बरमावृत्य वाताः पूर्वापरा इव ॥ १०॥

ततः कर्णो द्विषत्सेनां बाणवृष्ट्या विलोलयन् ।
विजगाहेऽण्डजाकीर्णां पद्मिनीमिव यूथपः ॥ ११॥

द्विषत्सैन्यमवस्कन्द्य राधेयो धनुरुत्तमम् ।
विदुधाव शितैर्बाणैश् शिरांस्युन्मथ्य पातयत् ॥ १२॥

हस्तिनस्समहामात्रान् साश्वारोहान् हयानपि ।

1. अ-ख—नासीदमर्षम्

रथिनोऽप्येकबाणेन भ्रमतश्चाप्यपातयत् ॥ १३॥

चर्म वा वर्म वाऽऽश्रित्य निपातमपि देहिनः ।
विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्रिणः ॥ १४॥

वर्मयुक्तेषु देहेषु धनुषाऽस्यञ्शिताञ्शरान् ।
मौर्व्या तलत्रे व्यहनत् कशया वाजिनो यथा ॥ १५॥

पाण्डुसृञ्जयपाञ्चालाञ् शरगोचरमागतान् ।
ममर्द तरसा कर्णस् सिंहो मृगगणानिव ॥ १६॥

ततः पाञ्चालपुत्रश्च द्रौपदेयाश्च मारिष ।
यमौ च युयुधानश्च त्वरिताः कर्णमभ्ययुः ॥ १७॥

तेषु व्यायच्छमानेषु कुरुपाञ्चालपाण्डवाः ।
प्रियानसून् परित्यज्य योधा जग्मुः परस्परम् ॥ १८॥

सुसन्नद्धाः कवचिनश् शिरस्त्राणविभूषिताः ।
गदाभिर्मुसलैश्चान्यैः परिघैश्च महारथाः ॥ १९॥

समभ्यधावंस्त्वन्योन्यं देवदण्डैरिवोद्यतैः ।
नर्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष ॥ २०॥

ततो निजघ्नुरन्योन्यं पेतुरन्योन्यपातिताः ।
वमन्तो रुधिरं वक्त्रैर् विमस्तिष्केक्षणायुधाः ॥ २१॥

पूर्णैर्दन्तैस्सरुधिरैर् आस्यैर्दाडिमसन्निभैः ।
जीवन्त इव चान्ये तु तस्थुश्शस्त्रौघबृंहिताः ॥ २२॥

परश्वथैरपि शरैः पट्टिसैरसिभिस्तथा ।
शक्तिभिर्भिण्डिपालैश्च नखरप्रासतोमरैः ॥ २३॥

ततक्षुर्विभिदुश्चैव चिक्षिपुश्चिच्छिदुस्तथा ।
सञ्चकर्तुश्च जघ्नुश्च क्रुद्धा राजन् महारणे ॥ २४॥

पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः ।
क्षरन्तस्स्वरसं रक्तं प्रकृत्ताश्चन्दना इव ॥ २५॥

रथा रथैर्विनिहता हस्तिनश्चापि हस्तिभिः ।
नरा नरैर्हताः पेतुर् अश्वैरश्वास्सहस्रशः ॥ २६॥

ध्वजाश्शिरांसि च्छत्राणि द्विपहस्ता नृणां भुजाः ।
क्षुरैर्भल्लार्धचन्द्रैश्च च्छिन्नाश्शोभां न तत्यजुः ॥ २७॥

वध्यतां दारुणश्शब्दस् स्तनतां पततामभूत् ।
नराश्वेभरथानां हि नराश्वेभरथैस्तथा ॥ २८॥

नराश्वनागांश्च रथाःपत्तीन् ममृदुराहवे ॥ २९

नरानश्वा नरान् नागा विषाणैर्जघ्नुरञ्जसा ।
तथा रथा हताः पेतुर् अश्वारोहैस्सहस्रशः ॥ ३०

अश्वारोहैर्हतारोहाश् छिन्नगात्राश्च दन्तिनः ।
सपताकाध्वजाः पेतुर् निकृत्ता इव शाखिनः ॥ ३१

सादिभिः पत्तिसङ्घाश्च प्रहता युधि शेरते ।
पत्तिभिश्च समाप्लुत्य द्विरदास्स्यन्दनास्तथा ॥ ३२

हस्त्यारोहाश्च रथिनो हताः प्रासासितोमरैः ।
अश्वारोहास्समासाद्य सहसा पत्तिभिर्हताः ॥ ३३

मृदितानीव पद्मानि प्रम्लाना इव च स्रजः ।
हतानां वदनान्यासन् गात्राणि च नृणां रणे ॥ ३४

रूपाण्यत्यर्थकान्तीनि द्विरदानां रणे नृप ।
विशीर्णानीव रोधांसि नदीनां भरतर्षभ ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

## ॥ पञ्चषष्टितमोऽध्यायः ॥

---

गजयुद्धम् ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥

---

सञ्जयः—

हस्तिनस्तु महामात्रास् तव पुत्रेण चोदिताः ।
धृष्टद्युम्नं प्रतेत्याशु क्रुद्धाः पार्षतमभ्ययुः ॥ १

प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः ।
अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः ॥ २

कोसला मेखलास्सुह्मा दशार्णा निषधास्तथा ।
गजयुद्धेषु कुशलाः कलिङ्गैस्सह भारत ॥ ३

शरतोमरनाराचैर् वृष्टिमन्त इवाम्बुदाः ।
सिषिचुस्ते ततस्सर्वे पाञ्चालाचलमाहवे ॥ ४

तानभिद्रवतो नागान् सपक्षानिव पर्वतान् ।
विपाठक्षुरनाराचैर् धृष्टद्युम्नोऽप्यवीवृषत् ॥ ५

एकैकं दशभिष्षड्भिर् अष्टाभिरपि पार्षतः ।
द्विरदानभिविव्याध क्षिप्रं गिरिनिभाञ् शरैः ॥ ६

प्रच्छाद्यमानं द्विरदैर् मेघैरिव दिवाकरम् ।
पर्ययुः पाण्डुपाञ्चाला नर्दन्तो ह्यात्तकार्मुकाः ॥ ७

तान् नागानभिवर्षन्तो ज्यातलत्रनिनादिताः ।
[1]वीरनृत्यं प्रनृत्यन्तश् शूरतालप्रचोदितैः ॥ ८

नकुलस्सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ॥ ९

[2]समन्तात् सिषिचुर्वीरा मेघास्तोयैरिवाचलान् ॥ ९॥
ते म्लेच्छैः प्रेषिता नागा नरानश्वान् रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिस्तूर्णं मदोत्कटाः ॥ १०॥

बिभिदुश्च विषाणाग्रैस् समुत्क्षिप्य च चिक्षिपुः ।

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

विषाणभिन्नाश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ११॥

प्रमुखे वर्तमानं तु द्विपं वङ्गस्य सात्यकिः ।
नाराचेनोग्रवेगेन भित्त्वा मर्माण्यताडयत् ॥ १२॥

तस्यावर्जितनागस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाभिनद्वक्षस् सात्यकिस्सोऽपतद्भुवि ॥ १३॥

पौण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् ।
सहदेवः प्रसन्नाग्रैर् नाराचैः प्राहरत् त्रिभिः ॥ १४॥

विपताकं वियन्तारं विवर्मध्वजजीवितम् ।
तं कृत्वा द्विरदं भूयस् सहदेवोऽङ्गमभ्ययात् ॥ १५॥

सहदेवं तु नकुलो वारयित्वाऽङ्गमर्दयत् ।
नाराचैर्यमदण्डाभैर् त्रिभिर्नागं शतेन च ॥ १६॥

दिवाकरकरप्रख्यान् अङ्गश्चिक्षेप तोमरान् ।
नकुलस्तु ततो हृष्टस् त्रिधैकैकमथाच्छिनत् ॥ १७॥

अथार्धचन्द्रेण शिरस् तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस् तेनैव सह दन्तिना ॥ १८॥

आचार्यपुत्रे सर्वेषां हस्तिशिक्षाविदा हते ।
अन्ये क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ १९॥

चलत्पताकैः प्रमुखैर् हेमकक्ष्यातनुच्छदैः ।
विमर्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥ २०॥

मेखलोत्कलकालिङ्गा नैषधास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि प्रमुञ्चन्तो जिघांसवः ॥ २१॥

तैश्छाद्यमानं नकुलं निशाकरमिवाम्बुदैः ।
परिपेतुस्सुसंरब्धाः पाण्डुपाञ्चालसात्यकाः ॥ २२॥

ततस्तदभवद्युद्धं रथिनां हस्तियोधिभिः ।
सृजतां शरवर्षाणि क्षिपतां तोमराणि च ॥ २३॥

नागानां प्रास्फुटन् कुम्भा मर्माणि च नखानि च ।
विषाणाश्चापविद्धाश्च नाराचैर्हेमभूषितैः ॥ २४॥

तेषामष्टौ महानागांश् चतुष्षष्ट्या सुतेजनैः ।
नाराचैस्सहदेवस्तान् पातयामास सादिभिः ॥ २५॥

अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम् ।
नाराचैरवधीन्नागान् न कुलः कुलनन्दनः ॥ २६॥

ततश्शैनेयपाञ्चाल्यौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान् सिषिचुश्शरवृष्टिभिः ॥ २७॥

ते पाण्डुयोधाम्बुधरैश् शत्रुद्विरदपर्वताः ।
बाणवर्षैर्हताः पेतुर् वज्रवर्षैरिवाद्रयः ॥ २८॥

एवं हत्वा तव गजांस् ते पाण्डुनरकुञ्जराः ।
द्रुतां सेनां च वर्षन्तो भिन्नरोधामिवापगाम् ॥ २९॥

तां ते संलोलयन्ति स्म द्विरदा नड्वलानिव ।
विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

## ॥ षट्षष्टितमोऽध्यायः ॥

कृष्णेनार्जुनं प्रति कुरूणां युधिष्ठिरग्रहणोद्यमकथनम् ॥

सञ्जयः—

तेषां प्रवृत्ते सङ्ग्रामे विपुले शोणितोदके ।
रराज लोहितेनोर्वी संसिक्ता बहुधा भृशम् ॥ १
ततो रजसि संशान्ते प्रकाशस्सर्वतोऽभवत् ॥ १॥
एतस्मिन्नन्तरे पार्थं कृष्णो वचनमब्रवीत् ।
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ २॥

श्रीभगवान्—

एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः ।
जिघांसुभिरमित्रघ्नश् शीघ्रं पार्थोऽनुसार्यते ॥ ३॥
तमन्वधावन् पाञ्चालाश् चेदिमत्स्याश्च भारत ।

[1]अनुयान्ति महात्मानं परीप्सन्तो महाजवाः ॥　　४॥

एष दुर्योधनः पार्थ गजानीकेन दंशितः ।
राजा सर्वस्य लोकस्य राजानमनुधावति ॥　　५॥

जिघांसुः पुरुषव्याघ्रं भ्रातृभिस्सहितो बली ॥　　६

आशीविषसमस्पर्शैस् सर्वायुधविशारदैः ।
नदद्भिर्सिंहनादांश्च धमद्भिश्चापि वारिजान् ॥　　७
बलवद्भिर्महेष्वासैर् विधून्वानैर्धनूंषि च ॥　　७॥

एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः ।
युधिष्ठिरं धार्तराष्ट्रो रत्नोत्तममिवार्थिनः ॥　　८॥

पश्य सात्वतभीमाभ्यां निरुद्धान् विष्ठितान् पुनः ।
जिघृक्षतोऽमृतं दैत्याच् छक्राग्निभ्यामिवाहवे ॥　　९॥

एते बहुत्वात् त्वरिताः पुनर्गच्छन्ति पाण्डवम् ।
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ॥　　१०॥

मृत्योरास्यगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् ।
हुतमग्नौ च कौन्तेय दुर्योधनवशं गतम् ॥　　११॥

[2]यथायुक्तमनीकं हि धार्तराष्ट्रस्य पाण्डव ।
नास्य शक्रो विमुच्येत सम्प्राप्तो बाणगोचरम् ॥　　१२॥

दुर्योधनस्य शूरस्य शरौघाञ्शीघ्रमस्यतः ।

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति

[1]अन्तकस्येव क्रुद्धस्य [2]रूपमस्य हि दृश्यते ॥ १३॥

रसतस्तस्य वीरस्य द्रौणेश्शारद्वतस्य च ।
कर्णस्य चेषुवेगो वै पर्वतानपि दारयेत् ॥ १४॥

कर्णेन च कृतो राजा विमुखोऽद्य तु दृश्यते ॥ १५

बलवाञ्शीघ्रहस्तश्च कृती युद्धविशारदः ।
राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे ॥ १६

सहितो धृतराष्ट्रस्य शूरैः पुत्रैर्महारथैः ॥ १६॥

तस्यैवं युध्यमानस्य सङ्ग्रामे संशितात्मनः ।
अन्यैरपि च पार्थस्य हृतं वर्म महारथैः ॥ १७॥

उपवासकृशो राजा दृढं भरतसत्तमः ।
ब्राह्मे बले स्थितो राजा न क्षत्रे च बले स्थितः ॥ १८॥

[3]कर्णेन चाभियुक्तोऽयं भूपतिश्शत्रुतापनः ।
संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः ॥ १९॥

न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः ।
यद्भीमसेनस्सहते सिंहनादममर्षणः ॥ २०॥

नदतां धार्तराष्ट्राणां पुनः पुनररिन्दमः ।
धमतां च महाशङ्खान् सङ्ग्रामे जितकाशिनाम् ॥ २१॥

---

1. अ-ब—अर्धद्वयं नास्ति　　2. ख—अयंपादोऽनन्तरश्च न स्तः

3. क-ख—इदमर्धद्वयं नास्ति

[1]युधिष्ठिरं पाण्डवेयं प्रतेति पुरुषर्षभ ।
सञ्चोदयत्ययं कर्णो धार्तराष्ट्रान् महाबलान् ॥ २२॥

स्थूणाकर्णास्त्रजालेन पार्थ पाशुपतेन च ।
प्रच्छादयन्तो राजानम् अनुयान्ति महारथाः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ ७३ ॥ कर्णपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये २३॥ श्लोकाः ]

---

## ॥ सप्तषष्टितमोऽध्यायः ॥

---

कृष्णेनार्जुनं प्रति युधिष्ठिरस्य कर्णेन पराभवकथनपूर्वकं कर्णयुद्धप्रदर्शनम् ॥ १ ॥ तथा भीमसेनयुद्धप्रदर्शनम् ॥ २ ॥

---

श्रीभगवान्—

आतुरो मे मतो राजा अविषह्यश्च भारत ।
अथैनमनुधावन्ति पाञ्चालास्सह सृञ्जयैः ॥ १

त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः ।
मज्जन्तमिव पाताले बलिनो विजिगीषवः ॥ २

न केतुर्दृश्यते राज्ञः कर्णस्य पिहितश्शरैः ।

---

1. ख—अर्धमयं नास्ति

पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः ॥ ३

धृष्टद्युम्नस्य भीमस्य शतानीकस्य चाभि भो ।
पाञ्चालानां च सर्वेषां चेदिकानां च भारत ॥ ४

एष पार्थ रणे कर्णः पाण्डवानामनीकिनीम् ।
शरैर्विध्वंसयामास नलिनीमिव कुञ्जरः ॥ ५

एते द्रवन्ति रथिनस् त्वदीयाः पाण्डुनन्दन ।
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ ६

एते भारत मातङ्गाः कर्णेनाभ्याहता रणे ।
आर्तनादान् विकुर्वाणा विद्रवन्ति दिशो दश ॥ ७

रथानां द्रवते बृन्दम् एतच्चैव समन्ततः ।
द्राव्यमाणं रणे पार्थ कर्णेनामिततेजसा ॥ ८

हस्तिकक्ष्यां रणे पश्य चरन्तीं तत्र तत्र तु ।
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ॥ ९

असौ द्रवति राधेयो भीमसेनरथं प्रति ।
किरञ् शरशतान्येव विनिघ्नंस्तव वाहिनीम् ॥ १०

एते नश्यन्ति पाञ्चाला द्राव्यमाणा महात्मना ।
शक्रेण च यथा दैत्या द्राव्यमाणा महाहवे ॥ ११

एष कर्णो रणे जित्वा पाञ्चालान् पाण्डुसृञ्जयान् ।
दिशो विप्रेक्षते सर्वास् त्वदर्थमिति मे मतिः ॥ १२

एष कर्णो धनुश्श्रेष्ठं विधून्वन् बहु शोभते ।
शत्रून् जित्वा यथा शक्रो देवसङ्घैस्समावृतः ॥ १३

एते नर्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् ॥ १३॥

एष सर्वात्मना पाण्डून् सृञ्जयांश्च समन्ततः ।
त्रासयित्वा रणे पार्थ राधेयो रथिनां वरः ॥ १४॥

अभ्यभाषत हृष्टात्मा सर्वसैन्यानि मानद ॥ १५

कर्णः—

अभिद्रवत गच्छध्वं द्रुतं द्रवत पाण्डवान् ।
यथा जीवन् नवः कश्चिन्मुच्यते युधि सृञ्जयः ॥ १६

तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः ॥ १६॥

श्रीभगवान्—

एवमुक्त्वाऽनुयात्येष पृष्ठतो विकिरञ्छरान् ॥ १७

पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् ।
उदयं पर्वतं यद्वच् छशाङ्केन विराजितम् ॥ १८

पूर्णचन्द्रनिकाशेन मूर्ध्नि च्छत्रेण भारत ।
ध्रियमाणेन समरे तथा शतशलाकिना ॥ १९

एष त्वां प्रेक्षते कर्णस् सकटाक्षं धनञ्जय ।
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ॥ २०

पश्य चैनं महाबाहो विधून्वानं महद्धनुः ।

शरांश्चाशीविषाकारान विसृजन्तं महाबलम् ॥ २१

असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् ।
प्रार्थयन् समरं पार्थ त्वया सह परन्तप ॥ २२

वधाय चात्मनोऽभ्येति पावकं शलभो यथा ॥ २२॥

एष ह्यमर्षी शूरश्च धार्तराष्ट्रहिते·रतः ।
त्वां न मर्षयते पार्थ नित्यमेव सुमन्दधीः ॥ २३॥

एकाकिनं च दृष्ट्वैनं धार्तराष्ट्रो रणाजिरे ।
त्वां च पार्थाभिसंरब्धं कर्णं प्रति महारथम् ॥ २४॥

कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ।
[1]आत्मानं तु कृतार्थं च समीक्ष्य भरतर्षभ ॥ २५॥

असौ दुर्योधनः क्रुद्धो रथानीकेन दंशितः ।
रिरक्षिषुस्सूतपुत्रं धार्तराष्ट्रो निवर्तते ॥ २६॥

सर्वैस्सहैभिर्दुष्टात्मा वध्य एष प्रयत्नतः ।
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ॥ २७॥

प्रतिपद्यस्व राधेयं प्राप्तकालमरिन्दम ।
आर्यो युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ २८॥

पञ्च ह्येतानि मुख्यानां रथानां रथसत्तम ।
शतान्यायान्ति वेगेन बलिनां तिग्मतेजसाम् ॥ २९॥

---

1. ख—अर्धमयं नास्ति

पञ्चहस्ति सहस्राणि त्रिगुणा वाजिनस्तथा ।
अभिसंहत्य सहिताः पदाताः प्रयुतानि च ॥ ३०॥
अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते ॥ ३१

[1]द्रोणपुत्रं पुरस्कृत्य तं शीघ्रं सन्निषूदय ।
निकृत्यैतद्रथानीकं बलिनं लोकविश्रुतम् ॥ ३२

नृसिंहयोर्विश्रुतयोर् युवयोर्योत्स्यमानयोः ।
देवासुरे पार्थ मृधे देवदानवयोरिव ॥ ३३
पश्यन्तु कौरवास्सर्वे तव पार्थ पराक्रमम् ॥ ३३॥

सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना ।
उत्तमं यत्नमास्थाय प्रत्येहि भरतर्षभ ॥ ३४॥

असौ कर्णस्सुसङ्क्रुद्धः पाञ्चालानभिधावति ।
[2]केतुमस्याभिपश्यामि धृष्टद्युम्नरथं प्रति ॥ ३५॥
समुच्छेत्स्यति पाञ्चालान् इति मन्ये परन्तप ॥ ३६

आचक्षे त्वत्प्रियं पार्थ तवेदं भरतर्षभ ।
राजैष कुशली धीरो धर्मपुत्रो युधिष्ठिरः ॥ ३७

असौ भीमो महाबाहुस् सन्निवृत्तश्चमूमुखे ।
वृतस्सृञ्जयसैन्येन सात्यकेन च भारत ॥ ३८

एते युधि विहिंस्यन्ते कौरवा निशितैश्शरैः ।

---

1. अ—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

क्रुद्धेन भीमसेनेन पाञ्चालैश्च महारथैः ॥ ३९

सेना हि धार्तराष्ट्रस्य विमुखा ऽद्रवद्रणात् ।
वेगेन भीमसेनस्य निहता विविधैश्शरैः ॥ ४०

विपन्नसस्येव मही रुधिरेण समुक्षिता ।
भारती भरतश्रेष्ठ सेना कृपणदर्शना ॥ ४१

निवृत्तं पश्य कौन्तेयं भीमसेनं युधां पतिम् ।
आशीविषमिव क्रुद्धं तस्माद्द्रवति भारती ॥ ४२

पीतरक्तासितसितास् ताराचन्द्रार्कमण्डिताः ।
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ॥ ४३

सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ।
केतवोऽपि निपात्यन्ते हस्त्यश्वं विप्रकीर्यते ॥ ४४

रथेभ्यः प्रपतन्त्यन्ये रथिनो विगतासवः ।
नानारूपैर्हता बाणैः पाञ्चालैरपलायिभिः ॥ ४५

निर्मनुष्यान् रथानश्वान् गजांश्चैव धनञ्जय ।
समाप्लुवन्ते पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ॥ ४६

मृद्नन्ति च नरव्याघ्र भीमसेनस्य संश्रयात् ।
बलं यदेषां दुर्धर्षं त्यक्त्वा प्राणानरिन्दम ॥ ४७

एते नर्दन्ति पाञ्चाला ध्मापयन्ति च वारिजान् ।
अभिद्रवन्ति च रणे निघ्नन्तस्सायकैः परान् ॥ ४८

पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि परन्तपाः ।
धार्तराष्ट्रान् विनिघ्नन्तो विशन्त्येते रथोत्तमान् ॥ ४९

[1]सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ।
[2]त्यक्त्वा प्राणान् महेष्वासैः पाञ्चालैरभिपात्यते ॥ ५०

सुभृशं च पराक्रान्ताः कृपकर्णादयो विभो ।
निवारणे महेष्वासाः पाञ्चालानां परन्तप ॥ ५१

अनिवृत्तांश्च भीतांस्तान् धार्तराष्ट्रान् परन्तप ।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून् सहस्रशः ॥ ५२

रथाश्च विमुखास्सर्वे निवृत्ते भरतर्षभे ।
विवर्णमुखभूयिष्ठा धार्तराष्ट्री महाचमूः ॥ ५३

पश्य भीमेन नाराचैर् भिन्ना नागाः पतन्त्यमी ।
वज्रिवज्रहतानीव शिखराणि धराभृताम् ॥ ५४

भीमसेनेन निर्विद्धा बाणैस्सन्नतपर्वभिः ।
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ॥ ५५

एते द्रवन्ति कुरवो भीमसेनभयार्दिताः ।

---

1. अ—शस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः ।
तेनैवैतानमोघास्त्रा निघ्नन्ति च नदन्ति च ॥
शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च ।
रथनागहया वीरा यशस्यास्सर्व एव च ॥ [ अधिकः पाठः ]

2. अ—अर्धसप्तकं नास्ति

त्यक्त्वा गजान् हयांश्चैव रथांश्चैव सहस्रशः ॥ ५६

हस्त्यश्वरथपत्तीनां द्रवतां निस्स्वनं शृणु ।
भीमसेनस्य निनदं द्रावयानस्य कौरवान् ॥ ५७

अभिजानामि भीमस्य सिंहनादं पुनः पुनः ।
नदतः पाण्डवेयस्य सङ्ग्रामे जितकाशिनः ॥ ५८

एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ।
विसृजंस्तोमरान् क्रुद्धो दण्डपाणिरिवोन्नदन् ॥ ५९

तस्य चैव भुजौ च्छिन्नौ भीमसेनेन गर्जतः ।
नागश्च ककरप्रख्यैर् नाराचैर्दशभिर्हतः ॥ ६०

हन्तैते पुनरायान्ति नागा ह्यन्ये प्रमाथिनः ।
नीलाञ्जनचयप्रख्या महामात्रवरास्थिताः ॥ ६१

शक्तितोमरनाराचैर् विनिघ्नन्तो वृकोदरम् ॥ ६१॥

सप्त सप्त च नागस्था वैजयन्त्यश्च सध्वजाः ।
नवत्या निशितैर्बाणैश् छिन्नाः पार्थाग्रजेन ते ॥ ६२॥

दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ॥ ६३

न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ।
पुरन्दरसमे क्रुद्धे निवृत्ते भरतर्षभे ॥ ६४

अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य सङ्गताः ।
क्रुद्धेन नरसिंहेन भीमसेनेन पातिताः ॥ ६५

नहि शक्ता रणे भीमं पार्थिवास्समुदीक्षितुम् ।
मध्यन्दिनगतं सूर्यं यथा दुर्बलदृष्टयः ॥ ६६

एते भीमस्य सन्त्रस्तास् सिंहस्येवेतरे मृगाः ।
शरैस्सन्ताडितास्सङ्ख्ये न लभन्ते सुखं क्वचित् ॥ ६७

[1]राजानं च महाबाहुं पीडयन्त्यात्तमन्यवः ॥ ६७॥

राधेयो बहुभिस्सार्धम् असौ गच्छति वेगितः ।
वर्जयित्वा तु भीमं तं पार्श्वतो ह्यानयद्धनुः ॥ ६८॥

तं पालयन् महाराजं धार्तराष्ट्रं बलान्वितः ॥ ६९

सञ्जयः—

एतच्छ्रुत्वा महाबाहुर् वासुदेवाद्धनञ्जयः ।
भीमसेनेन तत् कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ७०

अर्जुनो व्यधमच्छिष्टान् संशप्तकगणान् बहून् ॥ ७०॥

ते वध्यमानाः पार्थेन संशप्तकगणाः प्रभो ।
[2]शक्रस्यातिथितां प्राप्तास् समपद्यन्त विज्वराः ॥ ७१॥

नारायणांस्तु गोपालान् व्यधमत् पाण्डुनन्दनः ।
वृत्तमं जवमास्थाय महावातो घनानिव ॥ ७२॥

---

1. अ-ख—अर्धचतुष्टयं नास्ति

2. ख—इदमर्धं नास्ति

ते भीता ह्यवकीर्यन्त तत्र तत्रैव भारत ।
लुलितांश्च ततश्शूरान् अहनत् पुरुषोत्तमः ॥ ७३॥

पुनश्च पुरुषव्याघ्रश् शरैस्सन्नतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ७४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[ अस्मिन्नध्याये ७४॥ श्लोकाः ]

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

रणाय राज्ञां द्वन्द्वीभावः ॥ १ ॥ कर्णेन शिखण्डिपराजयः ॥ २ ॥
धृष्टद्युम्नदुश्शासनयोर्युद्धम् ॥ ३ ॥

---

धृतराष्ट्रः—

निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ १

द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः ।
[1]अवशेषं न पश्यामि मम सैन्येषु सञ्जय ॥ २

अहो बत दशां प्राप्तो न हि शक्ष्यामि जीवितुम् ।

---

1. अ-ख-घ—पद्यार्धानि न सन्ति

जयकाङ्क्षी कथं सूत पुत्राणामनिवर्तिनाम् ॥ ३

कथं जीवामि निहताञ् श्रुत्वा च मम सैनिकान् ॥ ३॥

बहुनाऽद्य किमुक्तेन दैवं तेषां परायणम् ।
मामकाः किमकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ४॥

सञ्जयः—

[1]क्षयस्तेषां महाञ्जातो राजन् दुर्मन्त्रिते तव ॥ ५

दृष्ट्वा भीमं महेष्वासं तव पुत्रः प्रतापवान् ।
क्रोधरक्तेक्षणः क्रुद्धो भीमसेनमभिद्रवत् ॥ ६

दुर्योधनः—

[2]तिष्ठ तिष्ठ पृथापुत्र पश्य मेऽद्य पराक्रमम् ।
अद्य त्वां प्रेषयिष्यामि यमस्य सदनं प्रति ॥ ७

सञ्जयः—

इत्युक्त्वा प्रययौ तूर्णं यत्र भीमो व्यवस्थितः ।
तावकं च बलं दृष्ट्वा भीमसेनात् पराङ्मुखम् ॥ ८

यत्नेन महता कर्णो व्यवस्थापयते बलम् ॥ ८॥

व्यवस्थाप्य महाबाहुस् तव पुत्रस्य वाहिनीम् ।
प्रत्युद्ययौ रणे कर्णः पाण्डवान् युद्धदुर्मदः ॥ ९॥

प्रत्युद्ययुश्च राधेयं पाण्डवानां महारथाः ।

---

1. अ-ख—नास्तीदमर्धम् 2. अ-घ—अर्धत्रयं नास्ति

धून्वाना विविधांश्चापान् विक्षिपन्तश्च सायकान् ॥ १०॥

भीमसेनश्शिनेर्नप्ता शिखण्डी जनमेजयः ।
धृष्टद्युम्नश्च बलवान् सर्वे चापि प्रभद्रकाः ॥ ११॥

पाञ्चालानां नरव्याघ्रास् समन्तात् तव वाहिनीम् ।
अभ्यद्रवन् सुसङ्क्रुद्धास् समरे जितकाशिनः ॥ १२॥

तथैव तावका राजन् पाण्डवानां महाचमूम् ।
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथान् ॥ १३॥

रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् ॥ १४॥

शिखण्डी तु ययौ कर्णं धृष्टद्युम्नस्सुतं तव ।
दुश्शासनं महाराज महासेनस्समभ्ययात् ॥ १५॥

नकुलो वृषसेनं तु चित्रसेनं युधिष्ठिरः ।
उलूकं समरे राजन् सहदेवस्समभ्ययात् ॥ १६॥

सात्यकिश्शकुनिं चापि भीमसेनस्तु कौरवान् ।
अर्जुनं च रणे यान्तं द्रोणपुत्रो महारथः ॥ १७॥

युधामन्युं कृपो राजन्नुत्तमौजास्तु कौरव ।
संयुगे कृतवर्माणम् आयान्तं पर्यवारयत् ॥ १८॥

भीमसेनः कुरून् सर्वान् पुत्रांश्च तव भारत ।

[1]सहानीकान् महाराज एक एवाभ्यवारयत् ॥ १९॥

शिखण्डी तु ततः कर्णं विचरन्तमभीतवत् ।
भीष्महन्ता महाराज वारयामास पत्रिभिः ॥ २०॥

प्रतिरुद्धस्ततः कर्णो रोषात् प्रचलकुण्डलः ।
शिखण्डिनं त्रिभिर्बाणैर् भ्रुवोर्मध्ये ह्यविध्यत ॥ २१॥

धारयन् स शितान् बाणाञ् शिखण्डी बह्वशोभत ।
राजतः पर्वतो यद्वत् त्रिभिश्शृङ्गैस्समन्वितः ॥ २२॥

सोऽतिविद्धो महेष्वासस् सूतपुत्रेण संयुगे ।
कर्णं विव्याध समरे नवत्या निशितैश्शरैः ॥ २३॥

तस्य कर्णो हयान् हत्वा सारथिं च त्रिभिश्शरैः ।
उन्ममाथ ध्वजं क्षिप्रं क्षुरप्रेण महारथः ॥ २४॥

हताश्वात्तु ततो यानाद् अवप्लुत्य महारथः ।
[2]सञ्छिन्नकार्मुको राजन् सूतपुत्रेण संयुगे ॥ २५॥

शक्तिं चिक्षेप कर्णाय सङ्क्रुद्धश्शत्रुतापनः ॥ २६

तां छित्त्वा समरे कर्णस् त्रिभिर्भारत सायकैः ।
शिखण्डिनमथाविध्यन्नवभिर्निशितैश्शरैः ॥ २७

कर्णचापच्युतान् बाणान् वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी भृशविक्षतः ॥ २८

---

1. ख—इत्यर्धं नास्ति 2. ख—इत्यर्धं नास्ति

ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाजवः ॥ २९

धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुश्शासनं त्रिभिर्बाणैर् अभ्यविध्यत् स्तनान्तरे ॥ ३०

तस्य दुश्शासनो बाहुं सव्यं विव्याध मारिष ।
शितेन रुक्मपुङ्खेन भल्लेन नतपर्वणा ॥ ३१

धृष्टद्युम्नस्तु निर्विद्धश् शरं घोरममर्षणः ।
दुश्शासनस्य सङ्क्रुद्धः प्रैषयत् तनयस्य ते ॥ ३२

[1]आशीविषसमं बाणम् आशु मारुतरंहसम् ।
आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ॥ ३३

शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशां पते ॥ ३३॥

अथापरैष्षोडशभिर् भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्पयत् ॥ ३४॥

तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ३५॥

अथान्यद्धनुरादाय पुत्रस्ते प्रहसन्निव ।
धृष्टद्युम्नं शरव्रातैस् समन्तात् पर्यवारयत् ॥ ३६॥

तव पुत्रस्य ते दृष्ट्वा विक्रमं तं महात्मनः ।

---

1. अ-ख-घ—नास्तीदमर्धम्

व्यस्मयन्त रणे योधास् सिद्धाश्चाप्सरसस्तथा ॥ ३७॥

धृष्टद्युम्नमपश्याम घटमानं महाबलम् ।
दुश्शासनेन संरुद्धं सिंहेनेव महाद्विपम् ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[ अस्मिन्नध्याये ३८॥ श्लोकाः ]

---

## ॥ एकोनसप्ततितमोऽध्यायः ॥

---

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

ततस्सरथनागाश्वा पाञ्चालाः पाण्डुसृञ्जयाः ।
सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव ॥ १

ततः प्रववृते युद्धं तावकानां परैस्सह ।
घोरं घोरप्रभं काले भीमरूपं परन्तप ॥ २

नकुलो वृषसेनं तु विद्ध्वा पञ्चभिरायसैः ।
पितुस्समीपे तिष्ठन्तं त्रिभिर्भूयोऽप्यविध्यत ॥ ३

नकुलं तु ततश्शूरो वृषसेनस्स्मयन्निव ।
नाराचेन सुतीक्ष्णेन हृदये प्रत्यविध्यत ॥ ४

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
शत्रुं विव्याध सप्तत्या सूतं चैवास्य सप्तभिः ॥ ५

ततश्शरसहस्रैस्तु तावुभौ पुरुषर्षभौ ।
प्रच्छादयेतामन्योन्यं तवाभज्यत वाहिनी ॥ ६

दृष्ट्वा विप्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलाद् अनुपत्य विशां पते ॥ ७

[1]एतस्मिन्नन्तरे युद्धं कष्टमासीद्विशां पते ।
निवृत्ते तु ततस्सैन्ये नकुलः कौरवान् ययौ ॥ ८

[2]वृषसेनस्तु पाञ्चालान् पित्रा सार्धं विशां पते ।
कर्णपुत्रस्तु समरे हित्वा राजन् युधिष्ठिरम् ॥ ९

जुगोप चक्रं त्वरितो राधेयस्यैव मारिष ॥ ९॥

उलूकस्तु रणे क्रुद्धस् सहदेवेन मारिष ।
निवारितश्शरशतैः क्रुद्धेन रणमूर्धनि ॥ १०॥

तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ।
[3]छादयामास समरे मेघो वृष्ट्येव पर्वतम् ॥ ११॥

तद्युद्धं सुमहच्चासीत् घोररूपं परन्तप ।

1. ख—इदमर्धं नास्ति          2. अ-क—नास्तीदमर्धम्
3. क-ख—इदमर्धद्वयं नास्ति

[1]सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ १२॥

उलूकस्तु ततो यानाद् अवप्लुत्य विशां पते ।
[2]अपयातस्ततस्तूर्णम् उलूको रणमूर्धनि ॥ १३॥

त्रिगर्तानां बलं तूर्णं जगाम पितृनन्दनः ॥ १४

सात्यकिश्शकुनिं विद्ध्वा विंशत्या निशितैश्शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ १५

सौबलस्तस्य समरे क्रुद्धो राजन् प्रतापवान् ।
विदार्य कवचं वीरो ध्वजं चिच्छेद काञ्चनम् ॥ १६

अथैनं निशितैर्बाणैस् सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्पयत् ॥ १७

अथास्य वाहांस्त्वरितश् शरैर्निन्ये यमक्षयम् ॥ १७॥

ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ।
आरुरोह रथं तूर्णम् उलूकस्य महात्मनः ॥ १८॥

अपोवाह रथस्थं तं सात्यकस्याजिसागरात् ॥ १९

शैनेयस्तु रणे राजंस् तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभज्यत ॥ २०

शैनेयशरनुन्नं तु तव सैन्यं विशां पते ।

1. अ—अष्टार्धानि न सन्ति 2. ख—इदमर्धं नास्ति

भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ २१

भीमसेनं तव सुतो वारयामास संयुगे ॥ २१॥

तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् ।
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त क्षत्रियाः ॥ २२॥

ततोऽपायान्नृपस्तस्माद् भीमसेनभयार्दितः ।
कुरुसैन्यं ततस्सर्वं भीमसेनमुपाद्रवत् ॥ २३॥

तत्र रावो महानासीद् भीमसेनं जिघांसताम् ।
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छदे ॥ २४॥

अथान्यद्धनुरादाय कृपश्शस्त्रभृतां वरः ।
युधामन्योर्ध्वजं सूतं छत्रं चापातयत् क्षितौ ॥ २५॥

ततोऽपायाद्रथेनैव युधामन्युस्सुबुद्धिमान् ॥ २६

उत्तमौजास्तु वार्ष्णेयं कृतवर्माणमाहवे ।
छादयामास समरे मेघो वृष्ट्येव पर्वतम् ॥ २७

तद्युद्धं सुमहच्चासीद् घोररूपं परन्तप ।
तादृशं न मया युद्धं दृष्टपूर्वं विशां पते ॥ २८

कृतवर्मा ततो राज[1]न्नुत्तमौजसमाहवे ।
हृदि विव्याध सहसा रथोपस्थ उपाविशत् ॥ २९

---

1. ख—इतः अर्धत्रयं नास्ति

तं सारथिरपोवाह रथेन रथिनां वरम् ।
ततस्तु सात्वतो राजन् पाण्डुसैन्यमभिद्रवत् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

## ॥ सप्ततितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

युधिष्ठिरश्चित्रसेनं शरवर्षैरवाकिरत् ।
[1]चित्रसेनोऽपि कौन्तेयं सङ्क्रुद्धस्समवारयत् ॥ १

मुहूर्ताद्विमुखीकृत्य चित्रसेनं स धर्मराट् ।
तावकं सैन्यमभ्यघ्नत् समन्तान्निशितैश्शरैः ॥ २

तावका हि महाबाहो दुर्योधनपुरोगमाः ।
युधिष्ठिरं जिघृक्षन्तस् सर्वसैन्यमवाक्षिपन् ॥ ३

दुष्टभावांस्तु तान् मत्वा समवेतान् महारथान् ।
आजग्मुस्सम्परीप्सन्तः पाण्डवेयं युधिष्ठिरम् ॥ ४

1. क—इदमर्धं नास्ति

नकुलस्सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
अक्षौहिण्या परिवृतास् त्वभ्यधावन् युधिष्ठिरम् ॥ ५

भीमसेनश्च नाराचैर् मृद्गंस्तव महारथान् ।
अभ्यधावत् परिप्रेप्सू राजानं शत्रुभिर्वृतम् ॥ ६

तांस्तु सर्वान् महेष्वासान् कर्णो वैकर्तनो वृषा ।
महता शरवर्षेण प्रत्यवारयदागतान् ॥ ७

शरौघान् विसृजन्तस्ते प्रेरयन्तश्च कुञ्जरान् ।
न शेकुर्यत्नवन्तोऽपि राधेयं प्रतिवीक्षितुम् ॥ ८

[1]तान् हि सर्वान् महेष्वासान् सर्वशस्त्रविशारदान् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ ९

दुर्योधनं तु विंशत्या नाराचानां कृती बली ।
अविध्यत् तूर्णमभ्येत्य सहदेवो जनाधिपम् ॥ १०

सोऽतिविद्धो बलवता रराज बलसन्निधौ ।
प्रभिन्न इव मातङ्गो रुधिरौघपरिप्लुतः ॥ ११

दृष्ट्वा तव तथा पुत्रं गाढविद्धं सुतेजनैः ।
अभ्यधावद्दृढं क्रुद्धो राधेयो रथिनां वरः ॥ १२

दुर्योधनं तथा दृष्ट्वा शीघ्रमस्त्रमुदीर्य सः ।
पाञ्चालांश्चावधीद्वीरो राजानीकं च भारत ॥ १३

---

1. अ—नास्त्यर्धद्वयम्

ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना ।
सहसा प्राद्रवद्राजन् सूतपुत्रभयार्दितम् ॥ १४

विविधा विशिखास्तत्र सम्पतन्तः परस्परम् ।
भल्लाः पुङ्खसमाश्लिष्टास् सूतपुत्रधनुश्च्युताः ॥ १५

अन्तरिक्षे शरौघाणां पततां च परस्परम् ।
सङ्घर्षेणैव महता पावकस्समजायत ॥ १६

ततो दश दिशश्शीघ्रैश् शलभैरिव घोषिभिः ।
अभ्यघ्नत् तरसा कर्णश् [1]शरैः परशरीरगैः ॥ १७

रक्तचन्दनसम्पृक्तौ मणिहेमविभूषितौ ।
बाहू च व्याक्षिपत् कर्णः परमास्त्रं विदर्शयन् ॥ १८

ततस्सर्वा दिशो राजन् सायकैर्विप्रमोहयन् ।
अपीडयद्भृशं कर्णो कुन्तीपुत्रं युधिष्ठिरम् ॥ १९

[2]ततः क्रुद्धो महाराज पाण्डुपुत्रो युधिष्ठिरः ।
निशितैरिषुभिः कर्णं बाह्वोरुरसि चार्पयत् ॥ २०

प्रहसन्निव तं कर्णः कङ्कपत्रैश्शरैश्शितैः ।
उरस्यविध्यद्राजानं कुन्तीपुत्रं युधिष्ठिरम् ॥ २१

स पीडितो भृशं तेन धर्मराजो युधिष्ठिरः ।

---

1. अ-घ—इतः षोडश पादा न सन्ति

2. ख—चत्वार्यर्धानि न सन्ति

उपविश्य रथोपस्थे सूतं याहीत्यचोदयत् ॥ २२

प्राक्रोशन्त ततस्सर्वे धार्तराष्ट्रास्सराजकाः ।
गृह्णीध्वमिति राजानम् अभ्यधावंश्च सर्वशः ॥ २३

ततश्शरशतै राजन् केकयानां महारथाः ।
पाञ्चालसहिता राजन् धार्तराष्ट्रानवारयन् ॥ २४

तस्मिन् सुतुमुले युद्धे वर्तमाने भयानके ।
दुर्योधनश्च भीमश्च समेयातां महाबलौ ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ७३ ॥ कर्णपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ एकसप्ततितमोऽध्यायः ॥

कर्णबाणपीडितस्य युधिष्ठिरस्य विश्रमाय स्वशिबिरप्रवेशः ॥

---

सञ्जयः—

कर्णोऽथ शरजालेन केकयानां पदानुगान् ।
व्यधमत् परमेष्वासान् अग्रानीके व्यवस्थितान् ॥ १

तेषां प्रयतमानानां राधेयस्य निवारणे ।
रथान् पञ्चशतं कर्णः प्राहिणोद्यमसादनम् ॥ २

अविषह्यमतो दृष्ट्वा राधेयं युधि योधिनः ।
भीमसेनमुपागच्छन् कर्णबाणप्रपीडिताः ॥ ३

रथानीकं विदार्यैवं शरै राजन्ननेकधा ।
कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ॥ ४

सेनानिवेशं गच्छन्तं मार्गणैर्भृशविक्षतम् ।
यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ॥ ५

स समासाद्य राजानं तथा यान्तं युधिष्ठिरम् ।
सूतपुत्रस्त्रिभिस्तीक्ष्णैर् विव्याध परमेषुभिः ॥ ६

तथैव राजा राधेयं प्रत्यविध्यत् स्तनान्तरे ।
शरैस्त्रिभिस्तु यन्तारं चतुर्भिश्चतुरो हयान् ॥ ७

चक्ररक्षौ नृपसुतौ माद्रीपुत्रौ परन्तपौ ।
तावभ्यधावतां कर्णं राजानं मा वधीदिति ॥ ८

तौ पृथक् शरवर्षाभ्यां राधेयं समवर्षताम् ।
नकुलस्सहदेवश्च परं यत्नं समास्थितौ ॥ ९

तथैव तौ प्रत्यविध्यत् सूतपुत्रः प्रतापवान् ।
भल्लाभ्यां भृशतीक्ष्णाभ्यां महात्मानावरिन्दमौ ॥ १०

दन्तवर्णांस्तु राधेयो निजघान महाजवान् ।
युधिष्ठिरस्य सङ्ग्रामे कालवालान् हयोत्तमान् ॥ ११

[1]ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् ।
कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ॥ १२

[2]तथैव नकुलस्यापि हयान् हत्वा महारथः ।
ततोऽपरेण भल्लेन भृशं तीक्ष्णेन भारत ॥ १३

[3]ईषां धनुश्च चिच्छेद माद्रीपुत्रस्य धीमतः ॥ १३॥

तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुस् सहदेवरथं तदा ॥ १४॥

तौ दृष्ट्वा विरथौ तत्र मातुलः परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ १५॥

शल्यः—

मार्गितव्यस्त्वया कर्ण कुन्तीपुत्रो धनञ्जयः ।
अतस्त्वं धर्मराजेन किमर्थमिह युध्यसे ॥ १६॥

सञ्जयः—

तथाऽपि कर्णस्संरब्धो युधिष्ठिरमपीडयत् ।
शरैस्तीक्ष्णैर्भृशं तीक्ष्णो माद्रीपुत्रौ च पाण्डवौ ॥ १७॥

ततः कर्णं प्रहस्यैनं शल्यः पुनरुवाच ह ।
रथस्थमभिसंरब्धं युधिष्ठिरवधे स्थितम् ॥ १८॥

---

1. ङ—कोशे इदमर्धद्वयं वर्तते
2. क—इदमर्धं नास्ति
3. क-च-ङ—धनुश्चिच्छेद वीरस्य

शल्यः—

यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् ॥ १९॥

[1]हते ह्यस्मिन् ध्रुवं पार्थस् सर्वाञ्जेष्यति नो रथान् ।
तस्मिन् हि धार्तराष्ट्रस्य निहते तु ध्रुवो जयः ॥ २०॥

ध्वजोऽसौ दृश्यते तस्य रोचमानोंऽशुमानिव ।
साधुर्ह्येष महाबाहो किं ते हत्वा युधिष्ठिरम् ॥ २१॥

शङ्खयोर्ध्मातयोश्शब्दस् सुमहानेष कृष्णयोः ।
श्रूयते चापघोषश्च मेघस्येव महास्वनः ॥ २२॥

असौ निघ्नन् रथोदारान् अर्जुनश्शरवृष्टिभिः ।
सर्वां ग्रसति ते सेनां कर्ण पश्यैनमाहवे ॥ २३॥

पृष्ठगोपौ हि शूरस्य युधामन्यूत्तमौजसौ ।
उत्तरं चास्य शैनेयश् चक्रं रक्षति सात्यकिः ॥ २४॥

[2]धृष्टद्युम्नस्तु पार्थस्य चक्रं रक्षति दक्षिणम् ।
भीमसेनस्तु राज्ञा वै धार्तराष्ट्रेण युध्यति ॥ २५॥

यथा न हन्यात्तं भीमस् सर्वेषां नोऽद्य पश्यताम् ।
कुरु राधेय वै राजा यथा मुच्येत तत्तथा ॥ २६॥

पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिना ।

---

1. श्र—अर्धचतुष्टयं नास्ति    2. क—इदमर्धं नास्ति

यदि नामाद्य मुच्येत विस्मयस्सुमहान भवेत् ॥ २७॥

परित्राह्येनमभ्येत्य संशयं परमं गतम् ।
किं ते माद्रीसुतौ हत्वा धर्मराजं युधिष्ठिरम् ॥ २८॥

सञ्जयः—

इति शल्यवचश्श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ॥ २९॥

राजगृध्नुर्भृशं चैव शल्यवाक्यप्रचोदितः ।
अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ॥ ३०॥

तव पुत्रं परित्रातुम् अभ्यधावत वीर्यवान् ।
मद्रराजप्रचुदितैर् अश्वैराकाशगैरिव ॥ ३१॥

गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैस् सहदेवस्य मारिष ॥ ३२॥

[1]ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।
प्राप्य सेनानिवेशं स्वं मार्गणैर्भृशविक्षतः ॥ ३३॥
अवतीर्य रथात्तूर्णम् आविशच्छयनं शुभम् ॥ ३४

अपनीय तु तं शल्यं हृच्छल्येनाभिपीडितः ।
सोऽब्रवीद् भ्रातरौ राजा माद्रीपुत्रौ परन्तपौ ॥ ३५

---

1. क-ख—इदमर्धं नास्ति

युधिष्ठिरः—

गच्छतं त्वरितौ वीरौ यत्र भीमो व्यवस्थितः ॥ ३५॥

सञ्जयः—

ततस्ते पाण्डवास्सर्वे समाभाष्य परस्परम् ।

कौरवाणां च सङ्ग्रामे कर्णस्य च महात्मनः ॥ ३६॥

समीपं भीमसेनस्य पाण्डवावन्वगच्छताम् ॥ ३७

जीमूत इव गर्जन् वै युध्यतेऽसौ वृकोदरः ॥ ३७॥

ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः ।

सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्शनौ ॥ ३८॥

तुरगैर्वातरंहोभिर् यत्र भीमस्तरस्विनौ ।

अनीकसहितौ तत्र भ्रातरौ समवास्थितौ ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां कर्णपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

॥ ७३ ॥ कर्णपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

## ॥ द्विसप्ततितमोऽध्यायः ॥

पार्थेनाश्वत्थाम्नि पराजिते कर्णेन भार्गवास्त्रप्रयोगात्पाण्डवसेना-पीडनम् ॥

सञ्जयः—

द्रौणिस्तु रथवंशेन महता परिवारितः ।
आपतत् सहसा राजन् यत्र पार्थो व्यवस्थितः ॥ १

तमापतन्तं सहसा शूरश्शौरिसहायवान् ।
दधार समरे पार्थो वेलेव मकरालयम् ॥ २

ततः क्रुद्धो महाराज द्रोणपुत्रो महामनाः ।
अर्जुनं वासुदेवं च च्छादयामास सायकैः ॥ ३

अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथौ ।
विस्मयं परमं गत्वा प्रेक्षन्ते कुरवस्तदा ॥ ४

अर्जुनस्तु ततो दिव्यम् अस्त्रं चक्रे हसन्निव ।
तदस्त्रं ब्राह्मणो युद्धे वारयामास मारिष ॥ ५

यद्यद्विक्षिपते युद्धे फल्गुनोऽस्त्रं जिघांसया ।
तत्तदस्त्रैर्महेष्वासो द्रोणपुत्रो जघान ह ॥ ६

अस्त्रयुद्धे महाराज वर्तमाने महाभये ।
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ७

स दिशः प्रदिशश्चैव च्छादयित्वा ह्यजिह्मगैः ।
वासुदेवं त्रिभिर्बाणैर् अविध्यद्दक्षिणे भुजे ॥ ८

ततोऽर्जुनो रथान् सर्वान् हत्वा तस्य पदानुगान् ।
स चकार महीं घोरां शोणितौघतरङ्गिणीम् ॥ ९

सरथा रथिनः पेतुः पार्थचापच्युतैश्शरैः ।
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः ॥ १०

तद्दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः ।
अवाकिरद्रणे कृष्णौ समन्तान्निशितैश्शरैः ॥ ११

ततोऽर्जुनो रणे राजन् द्रौणिमायम्य पत्रिणा ।
वक्षोदेशं समासाद्य ताडयामास संयुगे ॥ १२

[1]सोऽतिविद्धो रणे तेन द्रोणपुत्रः प्रतापवान् ।
आदत्त परिघं घोरं पार्थायैनमथाक्षिपत् ॥ १३

[2]तमापतन्तं परिघं कार्तस्वरविभूषितम् ।
पार्थश्चिच्छेद सहसा तत उच्चुक्रुशुर्जनाः ॥ १४

सोऽतिविद्धोऽपतद् भूमौ रणे पार्थस्य सायकैः ।
विशीर्णः पर्वतो राजन् यथा स्याद्वज्रताडितः ॥ १५

ततोऽर्जुनो रणे द्रौणिं विव्याध निशितैश्शरैः ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ १६

---

1. ख—इदमर्धं नास्ति 2. अ-ख—नास्तीदमर्धम्

स सङ्गृह्य स्वयं वाहान् कृष्णौ प्राच्छादयच्छरैः ॥ १६॥
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् ।
संयच्छंस्तुरगान् यच्च फल्गुनं चाप्ययोधयत् ॥ १७॥
तदस्य समरे राजन् सर्वभूतान्यपूजयन् ।
तेनास्य समरे राजंस् तुष्टुवुस्सर्वसैनिकाः ॥ १८॥
यदा तु गृह्यते पार्थो द्रोणपुत्रेण धन्विना ।
तदा रश्मीन् रथाश्वानां क्षुरप्रेणाशु चिच्छिदे ॥ १९॥
दुद्रुवुस्तुरगास्तस्य शरवेगप्रपीडिताः ।
ततोऽभून्निनदो घोरस् तव सैन्यस्य मारिष ॥ २०॥
पाण्डवास्तु जयं लब्ध्वा तव सैन्यमभिद्रवन् ।
समन्तान्निशितान् बाणान् पातयन्तो जयैषिणः ॥ २१॥
तावकी चतुरङ्गैषा पाण्डवैस्तु महाचमूः ।
पुनः पुनरथो वीरैः प्रभग्ना जितकाशिभिः ॥ २२॥
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् ।
शकुनेस्सौबलेयस्य कर्णस्य च विशां पते ॥ २३॥
वार्यमाणा महासेना पुत्रैस्तव जनेश्वर ।
नावतिष्ठति सङ्ग्रामे ताड्यमाना शितैश्शरैः ॥ २४॥
ततो योधैर्महाराज पलायद्भिस्समन्ततः ।
अभवद्व्याकुलं भीतं पुत्राणां ते महद्बलम् ॥ २५॥

तिष्ठ तिष्ठेति सततं [1]सूतपुत्रस्य जल्पतः ।
नावातिष्ठत सा सेना वध्यमाना महात्मभिः ॥ २६॥

अथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रबलं दृष्ट्वा विद्रुतं सर्वतो दिशम् ॥ २७॥

ततो दुर्योधनः कर्णम् अब्रवीत् प्रणयादिव ॥ २८

दुर्योधनः—

पश्य कर्ण महासेनां पाण्डवैरर्दितां भृशम् ।
त्वयि तिष्ठति सन्त्रासात् समन्तात् प्रपलायते ॥ २९

[2]एतज्ज्ञात्वा महाराज कुरु प्राप्तमरिन्दम ॥ २९॥

सहस्राणि च योधानां त्वामेव पुरुषोत्तम ।
क्रोशन्ते समरे वीरा वध्यमानास्समन्ततः ॥ ३०॥

सञ्जयः—

एतच्छ्रुत्वा तु राधेयो दुर्योधनवचो महत् ।
मद्रराजमिदं वाक्यम् अब्रवीत् सूतनन्दनः ॥ ३१॥

कर्णः—

पश्य मे भुजयोर्वीर्यम् अस्त्राणां च जनेश्वर ।
अद्य हन्मि रणे पार्थान् पाञ्चालान् केकयैस्सह ॥ ३२॥

वाहयाश्वान् नरव्याघ्र मद्राधीश न संशयः ॥ ३३

---

1. ख—इतः अष्टौ पादा न सन्ति   2. अ—अर्धद्वयं नास्ति

सञ्जयः—

एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान् ।
प्रगृह्य विजयं वीरो धनुश्श्रेष्ठं पुरातनम् ॥ ३४

सज्यं कृत्वा महाराज प्रमृज्य च पुनः पुनः ।
सन्निवार्य तु तान् योधान् सत्येन शपथेन च ॥ ३५

प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ३५॥

तस्माद्राजन् सहस्राणि प्रयुतान्यर्बुदानि च ।
कोटिशश्च शरा घोरा निर्गच्छन्ति महामृधे ॥ ३६॥

ज्वलितैस्तैश्शरैर्घोरैः कङ्कबर्हिणवाजितैः ।
सञ्छन्ना पाण्डवी सेना न प्राज्ञायत किञ्चन ॥ ३७॥

हाहाकारो महानासीत् पाण्डवानां विशां पते ।
पीडितानां बलवता भार्गवास्त्रेण संयुगे ॥ ३८॥

निपतद्भिर्गजै राजन् नरैश्चापि सहस्रशः ।
रथैश्चापि नरश्रेष्ठ हयैश्चापि समन्ततः ॥ ३९॥

प्राकम्पत मही राजन् निपतद्भिर्गतासुभिः ।
व्याकुलं सर्वमभवत् पाण्डवानां बलं महत् ॥ ४०॥

कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहञ् शत्रून् नरव्याघ्रश् शुशुभे स परन्तपः ॥ ४१॥

ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिस्सह ।

तत्र तत्रै व मुह्यन्ते दावदाहे गजा इव ॥ ४२॥

क्रोशन्तीव महाराज यथाप्राणं नरोत्तमाः ॥ ४३

तेषां तु क्रोशतां दीनं भीतानां रणमूर्धनि ।

धावतां च दिशो राजन् वित्रस्तानां समन्ततः ॥ ४४

आर्तनादो महानासीत् प्रेतानामिव सम्प्लवे ॥ ४४॥

वध्यमानांस्तु तान् दृष्ट्वा सूतपुत्रेण मारिष ।

वित्रेसुस्सर्वभूतानि तिर्यग्योनिगतान्यपि ॥ ४५॥

ते वध्यमानास्समरे सूतपुत्रेण सृञ्जयाः ।

अर्जुनं वासुदेवं च विक्रोशन्ति मुहुर्मुहुः ॥ ४६॥

प्रेतराजपुरे यद्वत् प्रेतानां वै विचेतसाम् ॥ ४७

श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः ।

अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ॥ ४८

भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ४८॥

अर्जुनः—

पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।

नैतदस्त्रं तु समरे शक्यं हन्तुं कथञ्चन ॥ ४९॥

सूतपुत्रं च संरब्धं पश्य कृष्ण महारथम् ।

अन्तकप्रतिमं वीर्ये कुर्वाणं कर्म दुष्करम् ॥ ५०॥

अभीक्ष्णं चोदयंश्चाश्वान् प्रेक्षते मां मुहुर्मुहुः ।

न च शक्ष्यामि कर्णस्य संयुगे वै पलायितुम् ॥ ५१॥

जीवन् प्राप्नोति पुरुषस् सङ्ख्ये जयपराजयौ ।
मृतस्य हि हृषीकेश वध एव जयः कुतः ॥ ५२॥

एष कर्णो रणे भाति मध्याह्न इव भास्करः ।
निवर्तय रथं कृष्ण जीवन् भद्राणि पश्यति ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ ७३ ॥ कर्णपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

---

## ॥ त्रिसप्ततितमोऽध्यायः ॥

---

कर्णबाणव्यथापनोदनाय युधिष्ठिरं शिबिरगतं विज्ञाय शत्रुनिग्रहे भीमनियोजनपूर्वकमर्जुनेन सह श्रीकृष्णस्य तत्समीपं प्रति गमनम् ॥

---

सञ्जयः—

ततो जनार्दनश्श्रुत्वा तस्य वाक्यं विशां पते ।
रथेनापययौ क्षिप्रं सङ्ग्रामादिति भारत ॥ १

प्रत्यनीकमवस्थाप्य भीमं भीमपराक्रमम् ।
अलं विषहितुं ह्येष कुरूणां सम्प्रपद्यताम् ॥ २

कर्णं च समरे राजन् ग्राहयिष्यञ्श्रमं प्रति ।

विश्रमार्थं च कौरव्य पाण्डवस्य महात्मनः ॥ २

अपयातो रणाद्वीरो राजानं द्रष्टुमेव च ॥ ३॥

अर्जुनं चाब्रवीत् कृष्णो भृशं राजा परिक्षतः ।
तमाश्वास्य कुरुश्रेष्ठ ततः कर्णं हनिष्यसि ॥ ४॥

ततो धनञ्जयश्श्रुत्वा राजानं शल्यपीडितम् ।
याहि याहीति बहुशो वासुदेवमचोदयत् ॥ ५॥

अर्जुनः—

राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः ॥ ६

सञ्जयः—

स चोद्यमानः पार्थेन केशिघ्नो वृष्णिनन्दनः ।
रथेनापययौ क्षिप्रं सङ्ग्रामाद्घोरदर्शनात् ॥ ७

गच्छन्नेव तु कौन्तेयो [1]धर्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत् तत्र चाग्रजम् ॥ ८

युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुस्सहं मन्त्रिणं सङ्ख्ये पराजित्य गुरोस्सुतम् ॥ ९

द्रौणिं पराजित्य तदोग्रधन्वा
कृत्वा महद्दुष्करमार्यकर्म ।
आलोकयामास ततस्स्वसैन्यं
धनञ्जयश्शत्रुभिरप्रधृष्यः ॥ १०

1. क—इतः पादचतुष्टयं नास्ति

संयुध्यमानान् पृतनामुखस्थांस्
तान् वै शूरान् हर्षयन् सव्यसाची ।
पूर्वापदानैः प्रथितैः प्रशंसन्
स्थिरांश्चकारात्मरथाननीके ॥ ११

अपश्यमानस्तु ततः किरीटी
युद्धे स्थितं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाऽभ्युपेत्य
राज्ञः प्रवृत्तिस्त्विह कुत्र चेति ॥ १२

भीमः—

अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः ।
कर्णबाणविभिन्नाङ्गो यदि जीवेत् कथञ्चन ॥ १३

अर्जुनः—

तस्माद्भवाञ् शीघ्रमितः प्रयातु
ज्ञातुं प्रवृत्तिं पुरुषर्षभस्य ।
नूनं स विद्धोऽतिभृशं पृषत्कैः
कर्णेन राजा शिबिरं गतोऽसौ ॥ १४

यस्सम्प्रहारे युधि सम्प्रवृत्ते
द्रोणेन विद्धोऽतिभृशं तरस्वी ।
तस्थौ च तत्रापि जयं प्रतीक्षन्
द्रोणेन यावन्न हतः किलासीत् ॥ १५

स संशयं गमितः पाण्डवाग्र्यस्
सङ्ख्येऽद्य कर्णेन महानुभावः ।
ज्ञातुं प्रयाह्याशु तमद्य भीम
स्थास्याम्यहं शत्रुगणान् निरुध्य ॥ १६

भीमः—

त्वमेव जानीहि महानुभाव
राज्ञः प्रवृत्तिं पुरुषर्षभस्य ।
अहं हि यद्यर्जुन यामि तत्र
वक्ष्यन्ति मां भीत इति प्रवीराः ॥ १७

सञ्जयः—

[1]ततोऽब्रवीदर्जुनो भीमसेनं
संशप्तकाः प्रत्यनीके स्थिता मे ।
एतानहत्वाऽद्य मया न शक्यम्
इतोऽपयातुं रिपुसङ्घमध्यात् ॥ १८

अथाब्रवीदर्जुनं भीमसेनस्
स्ववीर्यमासाद्य कुरुप्रवीर ।
संशप्तकान् प्रतियोत्स्यामि सङ्ख्ये
सर्वानहं याहि धनञ्जयेति ॥ १९

---

1. ख—संशप्तकान् प्रतियोत्स्यामि संख्ये सर्वानहं याहि धनञ्जयेति ।
[ अधिकः पाठः ]

इदमर्धं पुनरप्युपरि च वर्तते

तद्भीमसेनस्य वचो निशम्य
जिष्णुस्तदा भ्रातुरमित्रमध्ये ।
द्रष्टुं कुरुश्रेष्ठमितः प्रयातः
प्रोवाच वृष्णिप्रवरं तदानीम् ॥ २०

अर्जुनः—

राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः ।
चोदयाश्वान् हृषीकेश विहायैनं रणार्णवम् ॥ २१

अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ २१॥

सञ्जयः—

तं रथं चोदयामास बीभत्सोर्वचनाद्धरिः ॥ २२

ततो हयाग्र्यान् स दशार्हमुख्यः
प्रचोदयन् भीममुवाच चेदम् ॥ २२॥

श्रीभगवान्—

नैतच्चित्रं तव कर्माद्य भीम
याह्याहवे जय पार्थारिसङ्घान् ॥ २३

सञ्जयः—

ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरै राजन् वाजिभिर्गरुडोपमैः ॥ २४

प्रत्यनीकमवस्थाप्य भीमसेनमरिन्दमम् ।
सन्दिश्य चैव राजेन्द्र युद्धं प्रति वृकोदरम् ॥ २५

ततस्तु गत्वा पुरुषप्रवीरौ
राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्माद्
ववन्दतुर्धर्मराजस्य पादौ ॥ २६

इत्येवमभिसङ्गृह्य तावुभौ प्राञ्जली स्थितौ ।
शस्त्रक्षतौ महाराज रुधिरेण समुक्षितौ ॥ २७
निहत्य वाहिनीं तुभ्यं त्वपयातौ रणाजिरात् ॥ २७॥
तं दृष्ट्वा पुरुषव्याघ्रं क्षेमिणं पुरुषर्षभौ ।
मुदा ननन्दतुः कृष्णावश्विनाविव वासवम् ॥ २८॥
तावभ्यनन्दद्राजाऽपि विवस्वानश्विनाविव ।
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ॥ २९॥
मन्यमानो हतं कर्णं प्रीतः परपुरञ्जयः ॥ ३०
स भूत्वा पुरुषव्याघ्रो राजा तत्र युधिष्ठिरः ।
हर्षगद्गदया वाचा प्रीतः प्राह परन्तपः[1] ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

1. क—सञ्जयः—अथोपयातौ पृथुलोहिताक्षौ
शराचिताङ्गौ रुधिरप्रदिग्धौ ।
समीक्ष्य सेनाप्रवरप्रवीरौ
युधिष्ठिरो वाक्यमिदं बभाषे ॥ [ अधिकः पाठः ]

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

युधिष्ठिरेण कर्णशरविक्षतस्यात्मनो दिदृक्षया स्वशिबिरमुपागतौ कृष्णार्जुनौ दृष्ट्वा पार्थेन राधेयस्य वधभ्रमेण पार्थस्य प्रशंसनम् ॥

सञ्जयः—

ततो युधिष्ठिरो दृष्ट्वा सहितौ केशवार्जुनौ ।
हतमातिरथिं मेने युद्धे गाण्डीवधन्वना ॥ १

[1]तावभ्यनन्दत् कौन्तेयस् साम्ना परमवल्गुना ।
स्मितपूर्वममित्रघ्नं पूजयन् भरतर्षभ ॥ २

[2]उवाच राजा कौन्तेयम् उपेन्द्रमिव वासवः ॥ २॥

युधिष्ठिरः—

स्वागतं देवकीपुत्र स्वागतं ते धनञ्जय ।
प्रियं मे दर्शनं बाढं युवयोर्नरसिंहयोः ॥ ३॥

अरिष्टयोरक्षतयोः कर्णं हत्वा महारथम् ।
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ॥ ४॥

अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ।
रक्षितं वृषसेनेन सुषेणेन च संयुगे ॥ ५॥

रामेण जामदग्न्येन त्वनुज्ञातं यशस्विना ।

1. अ—नास्तीदमर्धम्
2. क-ख-ग-ङ—नास्तीदमर्धम्

त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ॥ ६॥

हन्तारमरिसैन्यानाम् अमित्रगणमर्दनम् ।
अनलानिलयोस्तुल्यं तेजसा च बलेन च ॥ ७॥

पातालमिव गम्भीरं सुहृदानन्दवर्धनम् ।
दुर्योधनहिते युक्तम् अस्मदुःखाय चोद्यतम् ॥ ८॥

अप्रधृष्यं महारङ्गे देवैरपि सवासवैः ।
अन्तकाभममित्राणां कर्णं हत्वा महाहवे ॥ ९॥

दिष्ट्या युवामिह प्राप्तौ हत्वा [1]वृत्रमिवामरौ ।
तेन युद्धमभीतेन मयाऽद्याप्यच्युतार्जुनौ ॥ १०॥

कृतं घोरं महाबाहू धृष्टद्युम्नस्य पश्यतः ॥ ११

अन्तकेनेव क्रुद्धेन प्रजास्सर्वा जिघांसता ।
तेन केतुश्च मे च्छिन्नो हतौ च पार्ष्णिसारथी ॥ १२

हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ।
वीरयोर्यमयोश्चैव धृष्टद्युम्नशिखण्डिनोः ॥ १३

पश्यतां द्रौपदेयानां शतद्रोश्च महात्मनः ॥ १३॥

एतांश्चित्वा महाबाहुः कर्णश्शत्रुगणान् बहून् ।
जितवान् मां महाबाहो यतमानं महारणे ॥ १४॥
अनुसृत्य च मां युद्धे परुषाण्युक्तवान् बहु ॥ १५

1. क—मृत्युमिवापरम् ख—वृत्तमिवापरम्

तत्र तत्र युधां श्रेष्ठः परिभूय धनञ्जय ॥ १५॥

बहुनाऽत्र किमुक्तेन नाहं तं सोढुमुत्सहे ।
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय ॥ १६॥

न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ।
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय ॥ १७॥

आत्मनो मरणं जानन् वार्ध्राणस इव द्विजैः ॥ १८

यस्य सोऽयं गतः कालश् चिन्तयानस्य भारत ।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ १९

जाग्रत् स्वपंश्च कौन्तेय कर्णमेव स्मराम्यहम् ।
पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ॥ २०

यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय ।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतस्स्थितम् ॥ २१

सोऽहं तेनैव वीरेण संयुगेष्वपलायिना ।
सरथस्सहयः पार्थ सर्वतश्शकलीकृतः ॥ २२

को हि मे जीवितेनार्थो राज्येनार्थेन वा पुनः ।
ममैवं निकृतस्येह कर्णेनाहवशोभिना ॥ २३

तत्र तत्र हि पश्यामि कर्णमेवाग्रतस्स्थितम् ॥ २३॥

सोऽहं तेनैव वीरेण संयुगेष्वपलायिना ।
सहयस्सरथः पार्थ जित्वा जीवन् विसर्जितः ॥ २४॥

भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय ॥ २५

न प्राप्तपूर्वं यद्भीष्मात् कृपाद्द्रोणाच्च संयुगे ।
तत् प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २६

स त्वां पृच्छामि बीभत्सो यथा नः कुशलं तथा ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णस्त्वया हतः ॥ २७

शक्रतुल्यबलो युद्धे यमतुल्यपराक्रमः ।
रामतुल्यस्तथाऽस्त्रेषु स कथं ते निषूदितः ॥ २८

महारथसमाख्यातस् सर्वशस्त्रविशारदः ।
धनुर्धरेषु प्रवरस् सर्वेष्वेव सदाऽर्जुन ॥ २९

पूजितो धृतराष्ट्रेण सपुत्रेण महारथः ।
त्वदर्थमेव राधेयस् स कथं निहतो युधि ॥ ३०

धार्तराष्ट्रस्य योद्धारस् सर्व एव सदाऽर्जुन ।
तव मृत्युं रणे कर्णं मन्यन्ते पुरुषोत्तम ॥ ३१

त्वया स पुरुषव्याघ्रः कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतो युधि ॥ ३२

सोत्सेधमस्य तु शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल शार्दूलेन रुरोर्यथा[1] ॥ ३३

---

1. ख—यथा स पुरुषव्याघ्र सङ्कुलेन यथा कुरु । [ अधिकः पाठः ]

सर्वा दिशः पर्यपतत् त्वदर्थे
त्वां सूतपुत्रस्समरे परीप्सन् ।
दित्सन् नृणां शकटं रत्नपूर्णे
कथं त्वयाऽसौ निहतोऽद्य कर्णः ॥ ३४

त्वया रणे निहतस्सूतपुत्रः
कच्चिच्छेते भूमितले दुरात्मा ।
कच्चित् प्रियं मे परमं त्वयाऽद्य
कृतं रणे सूतपुत्रं निहत्य ॥ ३५

सर्वा दिशः पर्यचरत् त्वदर्थे
मुदान्वितो गर्वितस्सूतपुत्रः ।
स शूरमानी समरे समेत्य
कच्चित् त्वया निहतः पापबुद्धिः ॥ ३६

रौक्मं परं हस्तिगवाश्वयुक्तं
रथं दित्सन् यः परेभ्यस्त्वदर्थे ।
त्वया रणे स्पर्धते यस्स पापः
कच्चित् त्वया निहतः पापबुद्धिः ॥ ३७

योऽसौ नित्यं शौर्यमदेन मत्तो
विकत्थते संसदि कौरवाणाम् ।

सम्प्रीत्यर्थं तात दुर्योधनस्य
कच्चित् स कर्णो निहतस्त्वयाऽद्य ॥ ३८

कच्चित् समागम्य धनुःप्रमुक्तैस्
त्वत्प्रेषितैर्लोहमयैर्विहङ्गैः ।
शेते भिन्नः पांसुषु सूतपुत्रः
कच्चिद्भग्नौ धार्तराष्ट्रस्य बाहू ॥ ३९

यश्श्लाघते राजमध्ये सदा हि
दुर्योधनं हर्षयन् दर्पपूर्णः ।
हन्तास्मि सर्वानिति पाण्डुपुत्रान्
अहं हन्ता फल्गुनस्येति मोहात् ॥ ४०

कच्चिद्वचोऽस्य वितथं कृतं त्वया
यत्तत् प्रियामवदत् तात कर्णः ।
सभामध्ये रूक्षमनेकरूपं
धिक् पाण्डवानपतिस्त्वं हि कृष्णे ॥ ४१

कच्चिद्ध्रुवं शत्रुमथावधीस्त्वम्
अधारयद्द्वादश यस्समास्तु ।
कर्णो व्रतं घोरममित्रसाहो
दुर्योधनस्यार्थनिविष्टबुद्धिः ॥ ४२

पादौ न धावे यावदहं न हन्मि
धनञ्जयं समरेषूग्रवेगम् ।
इत्युक्तवान् यस्समरे निहत्य
कच्चिद्धतं तस्य भग्नं त्वयाऽद्य ॥ ४३

योऽसौ कृष्णामब्रवीद्दुष्टबुद्धिः
कर्णस्सभायां कुरुमध्ये दुरात्मा ।
किं पाण्डवांस्त्वं न जहासि कृष्णे
सुदुर्बलान् पतितान् हीनसत्त्वान् ॥ ४४

यत्तत् कर्णः प्रत्यजानात् त्वदर्थे
[1]नाहं हत्वा सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः
कच्चिच्छेते शरसञ्छिन्नगात्रः ॥ ४५

कच्चित् सङ्ग्रामे विजितो वा त्वयाऽयं
महाहवे पाण्डवसृञ्जयानाम् ।
येनावस्थामीदृशीं प्रापितोऽहं
कच्चित् त्वया सोऽद्य हतस्समेत्य ॥ ४६

कच्चित् त्वया तस्य सुमन्दबुद्धेर्
गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः ।

1. क-ङ—महाबलस्संयुगे शत्रुहन्ता एकः पादोऽधिकः

सकुण्डलं भानुमदुत्तमाङ्गं
कायात् प्रविद्धं वद सव्यसाचिन् ॥ ४७

यत् त्वं मया बाणसमर्पितेन
ध्यातोऽसि कर्णस्य वधाय वीर ।
तन्मे त्वया कच्चिदमोघमद्य
[1]ध्यानं कृतं कर्णनिपातनेन ॥ ४८

यद्दर्पपूर्णस्तु सुयोधनोऽस्मान्
दिधक्षते कर्णसमाश्रयेण ।
कच्चित् त्वया सोऽस्य समाश्रयोऽद्य
भग्नः पराक्रम्य सुयोधनस्य ॥ ४९

यो नः पराशंसति लोभदोषात्
सभामध्ये कौरवाणां समक्षम् ।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये
त्वया हतस्सूतपुत्रोऽत्यमर्षी ॥ ५०

यः प्राहिणोत् सूतपुत्रो दुरात्मा
कृष्णां जितां सौबलेहानयेति ।
स मन्दबुद्धिर्निहतः प्रसह्य
वैकर्तनस्त्वद्य कच्चिन्महात्मन् ॥ ५१

1. ख—अयं पादो नास्ति

[1]अनवाप्यं प्राप्तुमिच्छन्नचिन्त्यं
शिशुर्यथा बालचन्द्रमसंग्रहीतुम् ।
स पापात्मा स तु नो विद्विषाणः
कच्चित् कर्णो निहतो वा त्वयाऽऽसीत् ॥ ५२

अस्मिन् सङ्ग्रामे भीमरूपे त्वयाऽद्य
व्रतं भग्नं सूतपुत्रस्य पार्थ ॥ ५२॥

कच्चित् पापं वचनं द्यूतकाले
यच्चाप्यसौ सग्तिौ वासुदेवम् ।
तथोक्तवान् परुषं सोऽतिकामं
हितं चरन् यस्सततं कुरूणाम् ॥ ५३॥

कच्चित् स कर्णो निहतोऽद्य सङ्ख्ये
यो धार्तराष्ट्रं परिपालयन् रणे ॥ ५४

एकस्सदा शोषयन् मामकं बलं
सपाञ्चालान् केकयांश्चैव सर्वान् ।
श्रियं दित्सन् धार्तराष्ट्रस्य कर्णः
कच्चिद्वेगं प्रत्यवधीस्त्वमद्य ॥ ५५

अप्येतस्य श्वसृगालाश्च गृध्रा
हतस्य मांसान्युद्धरन्ति स्म कायात् ॥ ५५॥

1. अ—नवार्धानि न सन्ति

यश्शत्रुजिच्छ्रेष्ठतमः पृथिव्यां
पितामहं चाक्षिपदल्पचेताः ।
सङ्ख्यायमानोऽर्धरथस्स कच्चित्
त्वया हतोऽद्यातिरथिर्दुरात्मा ॥ ५६॥

यत्तत् त्वया संश्रुतं मे किरीटिन्
सभामध्ये द्वैरथेनेह भूयः ।
अहं कर्णं सूदयिष्ये सपुत्रं
तत् कर्म कृत्वा ह्यनृणोऽसि कच्चित् ॥ ५७॥

अमर्षाग्निं निकृतिसमीरणेरितं
हृदा धृतं शूलमिदं सदा मम ।
हतो मया सोऽद्य समेत्य मन्दधीर्
इति ब्रुवन् प्रशमय मेऽद्य फल्गुन ॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[अस्मिन्नध्याये ५८॥ श्लोकाः ]

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

अर्जुनेन स्वयुद्धानुवादपूर्वकं युधिष्ठिरं प्रति कर्णवधप्रतिज्ञानम् ॥

सञ्जयः—

तद्धर्मशीलस्य वचो निशम्य
राज्ञः क्रुद्धस्यातिरथेर्महात्मा ।
उवाच दुर्धर्षमदीनसत्त्वो
युधिष्ठिरं जिष्णुरनन्तवीर्यः ॥ १

अर्जुनः—

द्रोणं हतं पार्थ कर्णो विदित्वा
भिन्नां नावमिवात्यगाधे कुरूणाम् ।
सम्मुह्यमानान् धार्तराष्ट्रान् विदित्वा
निरुत्साहांश्च विजये परेषाम् ॥ २

सोदर्यवत् त्वरितोऽथामितौजा
उत्तारयिष्यन् धृतराष्ट्रस्य पुत्रान् ।
रणे रथेनातिरथिर्महात्मा
ततो हि मां त्वरितस्सोऽभ्यधावत् ॥ ३

संशप्तकैर्युद्ध्यमानस्य मेऽद्य
सेनाग्रयायी कुरुसैन्यस्य राजन् ।

आशीविषाभान् खगमान् विमुञ्चन्
द्रौणिः पुरस्तात् सहसाऽध्यतिष्ठत् ॥ ४

स मे दृष्ट्वा शूरतमो ध्वजाग्रं
समादिशद्रथसङ्घाननेकान् ।
तेषामहं पञ्चशतं निहत्य
आसादयं द्रोणपुत्रं नदन्तम् ॥ ५

स द्रोणपुत्रस्सदृशं महात्मा
मामप्यरौत्सीत् तदनीकमध्ये ।
किरञ्शरौघान् बहुरूपान् विचित्रान्
स्वातीगतश्शुक्र इवाभिवर्षन् ॥ ६

स मे शरान् सर्वतः कङ्कपत्रान्
अवासृजद्वै पृथिवीप्रकाशान् ।
निवार्य तूर्णं परमाजिमध्ये
ततो हि मां बाणगणैस्समार्पयत् ॥ ७

आकर्षणं वाऽपि विकर्षणं वा
न दृश्यते तस्य महारथस्य ।
न सन्दधानः कुत आददानो
न व्याक्षिपन् न विकर्षन् न मुञ्चन् ॥ ८

सव्येन वा यदि वा दक्षिणेन
न ज्ञायते कतरेणास्यतीति ।
आचार्यवत् समरे पर्यवर्त-
न्महच्चित्रं दर्शयन् सर्वतस्स ॥ ९

दृष्टीविषं चासुहरं परेषां
सर्वा दिशः पूरयानं शरौघैः ।
अलातचक्रप्रतिमं महात्मनस्
सदा नतं कार्मुकं ब्रह्मबन्धोः ॥ १०

ततोऽपरान् बाणगणाननेकान्
आकर्णपूर्णायतविप्रमुक्तान् ।
ससर्ज शीघ्रास्त्रबलेन वीरस्
तथा यथा विस्रवत्युग्रमेघः ॥ ११

अविध्यन्मां पञ्चभिर्द्रोणपुत्रश्
शितैश्शरैः पञ्चभिर्वासुदेवम् ।
अभ्यघ्नं बाणैस्तमहं सुधारैर्
निमेषमात्रेण सुवर्णपुङ्खैः ॥ १२

स निर्विद्धो विरथो द्रोणपुत्रो
रथानीकं चातिरथेर्विवेश ।

मयाऽभिभूतान् स्वरथप्रबर्हान्
अस्त्रं च पश्यन् रुधिरप्रदिग्धः ॥ १३

ततोऽभिभूतं युधि वीक्ष्य सैन्यं
विध्वस्तयोधं द्रुतनागयूथम् ।
पञ्चाशता रथमुख्यैस्समेतः
कर्णस्त्वरन् माऽभ्यपतत् प्रमाथी ॥ १४

तान् सूदयित्वाऽहमपास्य कर्णं
द्रष्टुं भवन्तं त्वरयोपयातः ।
सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णाद्
गन्धेन गावः केसरिणो यथैव ॥ १५

मृत्योरास्यं व्यात्तमिवानुपद्य
प्रभद्रकाः कर्णमासाद्य सर्वे ।
योत्स्यामि तांस्तारयिष्यन् बलौघान्
दिष्ट्या भवान् स्वस्तिमान् पार्थ दृष्टः ॥ १६

हनिष्येऽहं भारत सूतपुत्रम्
अस्मिन् सङ्ग्रामे यदि दृश्यतेऽद्य ।
आयाहि पश्याद्य युयुत्समानौ
मां सूतपुत्रं च धृतौ रणाय ॥ १७

महाझषस्येव मुखं प्रपन्नाः
　　प्रभद्रकाः कर्णमुखं प्रपन्नाः ।
षट्साहस्रा भारत राजपुत्रास्
　　स्वर्गाय लोकाय रणे निमग्नाः ॥　　१८

तानद्य यास्यामि रणाद्विमोक्तुं
　　सर्वात्मना सूतपुत्रं निहन्तुम् ।
[1]रथप्रवीरेण महानुभाव
　　द्विषत्सैन्यं निर्दहभ् विस्तरेण ॥　　१९

समेष्येऽहं सूतपुत्रेण सङ्ख्ये
　　वज्रीव वृत्रेण नरेन्द्रमुख्य ।
एवं गते किञ्च मयाऽद्य शक्यं
　　कार्यं कर्तुं निग्रहे सूतजस्य ॥　　२०

तथैव राज्ञश्च सुयोधनस्य
　　ये चापि मां योद्धुकामास्समेताः ॥　　२०॥
कर्णं न चेदद्य निहन्मि राजन्
　　सबान्धवं युध्यमानं प्रसह्य ।

प्रतिश्रुत्याकुर्वतां या गतिर्वै
　　कष्टां यायां तामहं राजसिंह ॥　　२१॥

---

1. अ—अर्धत्रयं नास्ति

आमन्त्रये त्वां ब्रूहि रणे जयं मे
पुरा भीमं धार्तराष्ट्रा ग्रसन्ति ॥ २२

ततो हनिष्यामि नरेन्द्रसिंह
सैन्यं यथा शत्रुगणांश्च सर्वान् ॥ २२॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

## ॥ षट्सप्ततितमोऽध्यायः ॥

---

कर्णस्यामारणज्ञानाद्रुष्टेन युधिष्ठिरेण अर्जुनं प्रति गर्हणपूर्वकं कृष्णकरे गाण्डीवदानचोदना ॥

---

सञ्जयः—

[1]वैकर्तनं कुशलिनं निशाम्य
क्रुद्धः पार्थः फल्गुनस्यामितौजाः ।
धनञ्जयं वाक्यमुवाच राजा
युधिष्ठिरः कर्णशराभितप्तः ॥ १

1. ख—इदमर्धं नास्ति

युधिष्ठिरः—

इमां च वसतिं प्राप्तो भवान् कर्णेन बाधितः ॥ १॥

अहं त्वं भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।

वासुदेवेन सहिता वयं कर्णेन निर्जिताः ॥ २॥

पुनरेव वनं प्राप्य तपश्चर्यां च कुर्महे ।

अथवा धार्तराष्ट्राणां परिचर्यां चरामहे ॥ ३॥

सञ्जयः—

इत्येवमुक्त्वा बीभत्सुं रोषात् संरक्तलोचनः ।

अब्रवीत् पुनरेवात्र धर्मराजो युधिष्ठिरः ॥ ४॥

युधिष्ठिरः—

एवं यदि द्वैतवने तु सूक्तं
कर्णेन योद्धुं न सहे नृपेति ।
वयं ततः प्राप्तकालं यथावत्
कृत्वाऽभ्युपेक्षाम तथैव राज्यम् ॥ ५॥

मयि प्रतिश्रुत्य वधं हि तस्य
बलस्य चार्धस्य तथैव युद्धे ।
आनीय मां शत्रुमध्ये स कस्मात्
समुन्नाम्य स्थण्डिले प्रत्यपिङ्क्षः ॥ ६॥

अन्वास्य सत्येन यदात्थ पार्थ
सत्यं शपन् वासुदेवेन सार्धम् ।

तन्नस्सत्यं विफलं ह्यकार्षीः
फलस्य काले वाच्छिन्नः पुष्पवृक्षः ॥ ७॥

प्रच्छादितस्त्वं बालिश दुर्यशोभिर्
अनर्थवाक्योऽस्यर्जुन नैव साधुः ।
त्यक्त्वा भीमं सर्वभीमेषु भीमं
त्वं योजितस्सूतपुत्रं निहन्तुम् ॥ ८॥

यत्तत् पृथां वागुवाचान्तरिक्षे
सप्ताह्नि जाते त्वयि मन्दबुद्धौ ।
अपापीयान् वासवात् कुन्ति जातो
बहून् सङ्ग्रामानयमेको विजेता ॥ ९॥

अयं जेता पाण्डवो देवसङ्घान्
सर्वाणि भूतान्यपि चोत्तमौजाः ।
अयं जेता मद्रकलिङ्गजातान्
दैत्यांश्च रक्षांसि समागतानि ॥ १०॥

भूमिं च सर्वां निखिलेन जेता
कुरूंश्च सर्वान् सगणांश्च जेता ।
अस्मात् परो नो भविता धनुर्धरो
नैष्यन्न भूतः कश्चिदेनं विजेता ॥ ११॥

इच्छन्नयं सर्वभूतानि हन्यात्
कुर्याद्वशे सर्वसमाप्तविघ्नः ॥ १२

कान्त्या शशाङ्कस्य जवेन वायोस्
स्थैर्येण मेरोः क्षमया पृथिव्याः ।
अग्नेश्च तापाद् धनदस्य लक्ष्म्या
शौर्येण शक्रस्य जयेन विष्णोः ॥ १३

तुल्यो महात्मा तव कुन्ति पुत्रो
जातोऽदितेर्विष्णुरिवामितौजाः ॥ १३॥

स्वेषां जयाय द्विषतां वधाय
ख्यातो महात्मा तव नन्दकर्ता ॥ १४

इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि
तपस्विनां शृण्वतां वागुवाच ।
एवंविधस्त्वं न च भूतस्तथाऽद्य
देवाश्च नूनमनृतं वदन्ति ॥ १५

तथा परेषामृषिसत्तमानां
श्रुत्वा गिरः पूजयतां सदा त्वाम् ।
न सन्नतिं यामि सुयोधनस्य
न त्वां जानाम्यतिरथेर्भयार्तम् ॥ १६

त्वष्ट्रा कृतं वाह्मकूजनाक्षं
  शुभं समास्थाय कपिध्वजं तम् ।
खड्गं गृहीत्वा हेमचित्रावनद्धं
  धनुर्वरं गाण्डिवं तालमात्रम् ॥ १७

वासुदेवेनोह्यमानः कथं नु
  कर्णाद्भीतो ह्यपयातोऽसि पार्थ ॥ १७॥

पूर्वं यदुक्तं हि सुयोधनेन
  न फल्गुनः प्रमुखे स्थास्यतीति ।
कर्णस्य युद्धे हि महाबलस्य
  मौर्ख्यात् तु तन्नावबुद्धं मयाऽऽसीत् ॥ १८॥

तेनाद्य तप्ये भृशमप्रमेयो
  यन्मित्रवर्गो नरकं प्रविष्टः ।
तदैव वाच्योऽस्मि ननु त्वयाऽहं
  न योत्स्ये ऽहं सूतपुत्रं कथञ्चित् ॥ १९॥

ततो नाहं केकयान् सृञ्जयांश्च
  समानयेयं सुहृदो रणाय ।
एवं गते किं नु मयाऽद्य शक्यं
  कार्यं कर्तुं निग्रहे सूतजस्य ॥ २०॥

तथैव राज्ञश्च सुयोधनस्य
ये चापि मां योद्धुकामास्समेताः ।
धिगस्तु मे जीवितमद्य कृष्ण
योऽहं वशं सूतपुत्रस्य यातः ॥ २१॥

मध्ये कुरूणां ससुयोधनानां
ये चाप्यन्ये योद्धुकामास्समेताः ॥ २२

एकस्तु मे भीमसेनोऽद्य नाथो
येनाभिपन्नोऽस्मि रणे महाभये ।
विमोच्य मां चापि रुषाऽन्वितस्ततश्
शरेण तीक्ष्णेन बिभेद कर्णम् ॥ २३

त्यक्त्वा प्राणान् समरे भीमसेनश्
चक्रे युद्धं कुरुभिस्समेतैः ।
[1]गदाप्रहस्तो रुधिरोक्षिताङ्गश्
चरन् रणे काल इवान्तकाले ॥ २४

असौ हि भीमस्य महान् निनादो
मुहुर्मुहुश्श्रूयते धार्तराष्ट्रैः ॥ २४॥
यदि स्म जीवेत् समरे निहन्ता
महारथानां प्रवरो नरोत्तमः ।

---

1. ख—नाश्लीदमर्षम्

तथाभिन्युस्तनयोऽद्य पार्थ
न चास्मि गन्ता समरे पराभवम् ॥ २५॥

अथापि जीवेत् समरे घटोत्कचस्
तथाऽपि नाहं समरे पराङ्मुखः ।
[1]भीमस्य पुत्रस्समराप्रयायी
महास्त्रविच्चापि तवानुरूपः ॥ २६॥

यत्वं समासाद्य रिपोर्बलं नो
निमीलिताक्षं भयविप्लुतं भवेत् ।
चकार योऽसौ निशि युद्धमेकस्
त्यक्त्वा रणं यस्य भयाद्द्रवन्ते ॥ २७॥

स चेत् समासाद्य महानुभावः
कर्णं रणे बाणगणैः प्रमोह्य ।
धैर्ये स्थितेनापि च सूतजेन
शक्त्या हतो वासवदत्तया तया ॥ २८॥

ममैव भोग्यानि पुरा कृतानि
पापानि नूनं फलवन्ति युद्धे ॥ २९

तृणं च कृत्वा समरे भवन्तं
ततोऽहमेवं निकृतो दुरात्मना ।

---

1. अ—पद्यार्धानि न सन्ति

वैकर्तनेनेह तथा कृतोऽहं
यथा ह्यशक्तः क्रियते ह्यबान्धवः ॥ ३०

आपद्गतं यश्च नरं विमोक्षयेत्
स बान्धवस्स्नेहयुक्तस्सुहृच्च ।
एवं पुराणा ऋषयो वदन्ति
धर्मस्सदा सद्भिरनुष्ठितश्च ॥ ३१

खङ्गं बिभ्रज्जातरूपत्सरुं च
धनुश्चेदं गाण्डिवं तालमात्रम् ।
स केशवेनोह्यमानः कथं नु
कर्णात् पार्थ त्वमपैतुं समैषीः ॥ ३२

स गाण्डीवं केशवाय प्रदाय
यन्ता भवेस्त्वं यदि केशवस्य ।
ततस्तरेत् केशवः कर्णमुग्रं
मरुत्सखो वृत्रमिवात्तवज्रः ॥ ३३

मासेऽपतिष्यो यदि पञ्चमे त्वं
न वा गर्भो यद्यभवः पृथायाः ।

मत्तश्श्रेयान् राजपुत्रोऽभविष्य-
न्न ते यशः फल्गुन इत्यपेयात् ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ७३ ॥ कर्णपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

युधिष्ठिरवधोद्यतमर्जुनं प्रति तत्कारणप्रश्ने तेन तन्निवेदनम् ॥ १ ॥ कृष्णेन वधप्रतिनिधित्वेन युधिष्ठिराधिक्षेपविधानम् ॥ २ ॥

---

सञ्जयः—

युधिष्ठिरेणैवमुक्तः कौन्तेयश्श्वेतवाहनः ।
असिं जग्राह सङ्क्रुद्धो जिघांसुर्भरतर्षभम् ॥ १

तस्य कोपं समाज्ञाय चित्तज्ञः केशवस्तदा ।
उवाच किमिदं खड्गं गृह्णास्यर्जुन शंस मे ॥ २

नेह पश्यामि योद्धव्यं त्वया किञ्चिद् धनञ्जय ।
नेहागता धार्तराष्ट्रास् सर्वे भीमेन वारिताः ॥ ३

उपागतोऽसि कौन्तेय राजा द्रष्टव्य इत्यसौ ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ४

तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले तु सम्प्राप्ते कस्मात्त्वां मन्युराविशत् ॥ ५

न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह ।
कस्माद्भवान् महाखड्गं परिगृह्णात्यकारणात् ॥ ६

तस्मात् पृच्छामि कौन्तेय [1]किमिदं भरतर्षभ ।
परामृशसि संरब्धः खड्गमद्भुतदर्शनम् ॥ ७

एवमुक्तः कटाक्षेण प्रेक्षमाणो युधिष्ठिरम् ।
अर्जुनः प्राह गोविन्दं क्रुद्धस्सर्प इव श्वसन् ॥ ८

अर्जुनः—

अन्यस्मै देहि गाण्डीवम् इति मां यः प्रचोदयेत् ।
भिन्द्यामहं शिरस्तस्य इत्युपांशु व्रतं मम ॥ ९

[2]युधिष्ठिरेण तेनाहम् उक्तश्चास्मि जनार्दन ॥ ९॥

यदुक्तोऽहमदीनार्थे राज्ञाऽनेन यशस्विना ।
समक्षं तव गोविन्द तन्न क्षन्तुमिहोत्सहे ॥ १०॥

तस्मादेनं वधिष्यामि राजानं धर्मचारिणम् ।
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम् ॥ ११॥

एतदर्थं मया खड्गो गृहीतो यदुनन्दन ।
सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ॥ १२॥

---

1. क-ङ—काङ्क्षितम्    2. ख—इदमर्धं नास्ति

विशोको विज्वरश्चैव भविष्यामि जनार्दन ॥ १३

किं च त्वं मन्यसे प्राप्तम् अस्मिन् कार्ये समुत्थिते ।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ १४

जातस्त्वत्तो हि धर्मश्चाधर्मश्चेति परा श्रुतिः ।
तत्तथाऽद्य करिष्यामि यथा मां वक्ष्यते भवान् ॥ १५

सञ्जयः—

धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाऽब्रवीत् पुनः ॥ १५॥

श्रीभगवान्—

इदानीं पार्थ जानामि न वृद्धास्सेवितास्त्वया ।
अकाले पुरुषव्याघ्र संरम्भक्रियायाऽनया ॥ १६॥

न हि धर्मविभागज्ञैर् एवं कार्यं धनञ्जय ॥ १७

योऽकार्याणां क्रियायाश्च संयोगं नावबुध्यते ।
कार्याणामक्रियायाश्च स पार्थ पुरुषाधमः ॥ १८

अनुसृत्य तु ये धर्मं कवयस्समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ १९

अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
एवं स मुह्यत्यवशो यथा त्वं पार्थ मुह्यसि ॥ २०

न हि कार्यमकार्यं वा सुखं ज्ञातुं कथञ्चन ।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ २१

अविज्ञानादिह भवान् सत्यं रक्षति धर्मवित् ।
प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥　　२२

प्राणिनां हि वधात् तात मृतो धर्मो मतो मम ।
अनृतं तु भवेद्वाच्यं न तु हिंसा कदाचन ॥　　२३

स कथं भ्रातरं [1]श्रेष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान् नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥　　२४

अयुध्यमानस्य गुरोस् तथाऽशस्त्रस्य भारत ।
पराङ्मुखस्य द्रवतश् शरणं वाऽपि गच्छतः ॥　　२५
कृताञ्जलेः प्रपन्नस्य न वधः पूज्यते बुधैः ॥　　२५॥

त्वया चैतद्व्रतं पार्थ बालेनैव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौर्ख्यादेवं व्यवस्यसि ॥　　२६॥

स्वगुरुं पार्थ कस्मात् त्वं हन्तुकामोऽभिधावसि ।
असम्प्रधार्य धर्माणां गतिं सूक्ष्मां दुरन्वयाम् ॥　　२७॥

इदं धर्मरहस्यं तु तव वक्ष्यामि भारत ।
यद्ब्रूयात् तव भीष्मो वा राजा वाऽपि युधिष्ठिरः ॥　　२८॥

विदुरो वा पुनः क्षत्ता गान्धारी वा यशस्विनी ।
[2]कुन्ती वा भरतश्रेष्ठ द्रौपदी वा यशस्विनी ॥　　२९॥

तत्ते वक्ष्यामि कौन्तेय तन्निबोध धनञ्जय ॥　　३०

---

1. क-ख-घ—ज्येष्ठं　　　　2. अ—नास्तीदमर्धम्

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सुदुर्विदं हि तत्त्वेन तत् सत्यमिति मे मतिः ॥ ३१

भवेत् सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
तत्रानृतं भवेत् सत्यं सत्यं यत्रानृतं भवेत् ॥ ३२

[1]प्राणात्यये विवाहे वा वक्तव्यमनृतं भवेत् ।
तत्रानृतं भवेत् सत्यं सत्यमत्रानृतं भवेत् ॥ ३३

सर्वस्वहरणे वाऽपि वक्तव्यमनृतं भवेत् ।
तत्रानृतं भवेत् सत्यं सत्यमत्रानृतं भवेत् ॥ ३४

त्वादृशो हन्यते बालो यस्य सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ३५

किमाश्चर्यं महाप्राज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत् प्राप्नुयात् पुण्यं बलाकोऽण्डवधादिव ॥ ३६

अनाश्चर्यं पुनर्मोहाद् धर्मकामो ह्यपण्डितः ।
सुमहत् प्राप्नुयात् पापम् आपगास्विव कौशिकः ॥ ३७

अर्जुनः—

आचक्ष्व भगवन्नेतद् यथा विद्यामहं तथा ।
बलाकाण्डाभिसम्बन्धं नदीनां कौशिकस्य च ॥ ३८

श्रीभगवान्—

मृगव्याधोऽभवत् कश्चिद् बलाको नाम नामतः ।

---

1. ख—अर्धत्रयं नास्ति  घ—अर्धचतुष्टयं नास्ति

यात्रार्थं पुत्रदाराणां मृगान् हन्ति न कामतः ॥ ३९

सोऽन्धौ च मातापितरौ बभारान्यांश्च संश्रितान् ।
स्वधर्मनिरतो नित्यं संविभज्यानसूयकः ॥ ४०

स कदाचिन्मृगान लिप्सुर् नान्वविन्दच्च यत्नवान् ।
अथापश्यत् सुपीवानं श्वापदं घ्राणचक्षुषम् ॥ ४१

अदृष्टपूर्वमपि तत् सत्त्वं तेन हतं तदा ।
अन्वगेव पुनर्व्योम्नः पुष्पवर्षं पपात ह ॥ ४२

अप्सरोगीतवादित्रैर् नादितं च मनोरमम् ।
विमानमागतं स्वर्गान्मृगव्याधनिनीषया ॥ ४३

तद्भूतं सर्वभूतानाम् अभावाय किलार्जुन ।
तपस्तप्त्वा वरं प्राप्य कृतमन्यत् स्वयम्भुवा ॥ ४४

तद्धत्वा सर्वभूतानाम् अभावे कृतनिश्चयम् ।
बलाकोऽगात् स्वर्गलोकं तस्माद् धर्मस्सुदुर्विदः ॥ ४५

कौशिकश्चाभवद्विप्रस् तपस्वी सुबहुश्रुतः ।
नदीनां सङ्गमे ग्रामाद् अदूरे स किलावसत् ॥ ४६

सत्यं मया सदा वाच्यम् इति तस्याभवद्व्रतम् ।
सत्यवादीति विख्यातस् तपस्वी च धनञ्जय ॥ ४७

ततो दस्युभयात् केचित् कदाचित्तत्र संश्रिताः ।
ततस्ते दस्यवः क्रूरास् तान् स्म मार्गन्ति यत्नतः ॥ ४८

अथ कौशिकमभ्येत्य प्रोचुस्ते सत्यवादिनम् । ४८॥

दस्यवः--

कतरेण पथा याता भगवन्निह वै जनाः ।
सत्येन पृष्टः प्रब्रूहि यदि तद्वेत्सि शंस नः ॥ ४९॥

श्रीभगवान्—

सत्यस्य त्वविभागज्ञस् सत्यं तेभ्यश्शशंस सः ॥ ५०

कौशिकः—

बहुवृक्षलतागुल्मम् एतद् गहनमाश्रिताः ॥ ५०॥

श्रीभगवान्—

ततस्ते तान् समासाद्य समाजघ्नुरिति श्रुतिः ॥ ५१

तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः ।
गतस्सुकष्टं निरयं धर्मसूक्ष्मेष्वतत्त्ववित् ॥ ५२

[1]दृढपूर्वश्रुतो मूर्खो धर्माणामविशारदः ।
वृद्धानपृच्छन् सन्देहान् अन्धश्श्वभ्रमिवर्च्छति ॥ ५३

तत्र ते लक्षणोद्देशः कश्चिदेव भविष्यति ॥ ५३॥

दुष्करं प्रतिसङ्ख्यानं कार्त्स्न्येनात्र व्यवस्यति ।
सत्यं धर्म इति ह्येके वदन्ति बहवो जनाः ॥ ५४॥

न च पार्थाभ्यसूयामि नैतत् सर्वत्र शिष्यते ।
श्रुतिस्तु धर्म इत्येके वदन्ति बहवो जनाः ॥ ५५॥

---

1. अ-ङ—नास्तीदमर्धम्

न त्वेतत् प्रत्यसूयामि नात्र सर्वं विधीयते ।
यस्यादहिंसासंयुक्तस् स धर्म इति निश्चयः ॥ ५६॥

अहिंसार्थं च भूतानां धर्मप्रवचनं कृतम् ।
प्रभवार्थं च भूतानां धर्मप्रवचनं कृतम् ॥ ५७॥

यस्यात् प्रभवसंयुक्तस् स धर्म इति निश्चयः ॥ ५८

धारणाद्धर्म इत्याहुर् धर्मो धारयते प्रजाः ।
यस्याद्धारणसंयुक्तस् स धर्म इति निश्चयः ॥ ५९

येऽन्यायेन जिगीषन्तो धर्मं पृच्छन्ति मानवाः ।
अकूजनेन चेन्मोक्षो नात्र कूजेत् कथञ्चन ॥ ६०

अवश्यं कूजितव्ये हि शङ्केरन् वाऽप्यकूजनात् ॥ ६०॥

[1]येऽन्यायेन जिहीर्षन्तो धनं पृच्छन्ति कस्यचित् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विनिश्चितम् ॥ ६१॥

प्राणात्यये विवाहे वा सर्वजात्या महाभये ।
सर्वस्वस्य च लोपे वा वक्तव्यमनृतं भवेत् ॥ ६२॥

[2]अधर्मं हि न पश्यन्ति मृषोद्यं तत्र पण्डिताः ।
सर्वदाऽपि वदेत्तत्तु नानृतं स्याद्विचक्षण ॥ ६३॥

यस्स्तेनैस्सह सम्बन्धो मुच्येत शपथादपि ।
भवेत्तत्रानृतं श्रेयस् सत्यादिति विचारितम् ॥ ६४॥

---

1. अ—नास्तीदमर्धम्        1. अ-घ—पद्यार्धानि न सन्ति

न च तेभ्यो धनं देयं सत्यादिति कथञ्चन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ ६५॥

तस्माद्धर्मार्थमनृतम् उक्त्वा नानृतवाग्भवेत् ॥ ६६

एष ते लक्षणोद्देशस् समुद्दिष्टो यथाविधि ।
एवं ज्ञात्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ६७

अर्जुनः—

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महायशाः ।
सुहृद्ब्रूयाद्यथाऽस्माकं तथोक्तं वचनं त्वया ॥ ६८

भवान् पितृसमो मह्यं भवान् मातृसमोऽपि च ।
गतिश्च परमा त्वं हि त्वमेव च परायणम् ॥ ६९

न हि ते त्रिषु लोकेषु अज्ञातं विद्यते क्वचित् ।
तस्माद्भवान् परं धर्मं वेद सर्वं यथातथम् ॥ ७०

अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् ।
अस्मिन् समयसंयोगे ब्रूहि किञ्चिदनुग्रहम् ॥ ७१

इदं चापरमत्रैव ब्रूहि तत्त्वं विवक्षितम् ॥ ७१॥

जानासि दाशार्ह मम व्रतं त्वं
यो मां ब्रूयात् कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ
यो मत्तोऽस्त्रे वीर्यतो वा विशिष्टः ॥ ७२॥

हन्यामहं केशव तं प्रसह्य
भीमो हन्यात्तूबरकेति चोक्तः ।
तन्मां राजा ह्युक्तवांस्ते समक्षं
धनुर्देहीत्यसकृद्वृष्णिसिंह ॥ ७३॥

न तं हन्यां चेत् केशव जीवलोके
स्थाता नाहं कालमप्यल्पमात्रम् ।
सा च प्रतिज्ञा मम लोकेषु नित्या
यथा सत्या धर्मभृतां वरिष्ठ ॥ ७४॥

यथा जीवेत् पाण्डवेयो हि कृष्ण
तथा बुद्धिं दातुमर्हार्हसि त्वम् ॥ ७५

श्रीभगवान्—

राजा श्रान्तस्ताडितो विक्षतश्च
कर्णेन सङ्ख्ये निशितैर्बाणसङ्घैः ।
तस्मात् पार्थ त्वां परुषाण्यवोचत्
कर्णे द्यूतं ह्यद्य रणे निबद्धम् ॥ ७६

तस्मिन् हते कुरवो निर्जितास्स्युर्
एवं बुद्धिः पार्थिवो धर्मबुद्धिः ॥ ७६॥

[1]ततो वधं नार्हति धर्मपुत्रस्
त्वया प्रतिज्ञाऽर्जुन पालनीया ।

---

1. क—कोशएवेदमर्धद्वयं वर्तते

जीवन्नयं येन मृतो भवेद्धि
तन्मे निबोधेह तवानुरूपम् ॥ ७७॥

यदा मानं लभते माननार्हस्
तदा स वै जीवति जीवलोके ।
यदा ऽवमानं लभते महान्तं
तदा जातो मृत इत्युच्यते सः ॥ ७८॥

सम्मानितः पार्थिवोऽयं सदैव
तथैव भीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषैश्च सद्भिस्
तस्यावमानं कलया प्रयुङ्क्ष्व ॥ ७९॥

[1]शृणु पार्थ यया वृत्त्या हतस्स्याद्भवता गुरुः ।
हतो भवत्येवमुक्तो गुरुश्शस्त्रभृतां वरः ॥ ८०॥

[2]त्वमित्यत्रभवन्तं त्वं ब्रूहि पार्थ युधिष्ठिरम् ।
[3]यदिदं धर्मशास्त्रार्थं वेदेषु च निदर्शनम् ॥ ८१॥
त्वमित्येवं हि वचनं ब्रूहि पार्थ युधिष्ठिरम् ।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ८२॥
एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।

---

1. अ-ख-घ—अर्धद्वयं नास्ति 2. अ—नास्तीदमर्धम्
3. घ—नास्तीदमर्धम् क-ख—अर्धद्वयं नास्ति

अधर्मयुक्तं संयोगं कुरुष्वैनं कुरूद्वह ॥　　८३॥

अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः ।
अविचार्या च कार्या च श्रेयस्कामैर्नरैस्सदा ॥　　८४॥

[1]अवधेन वधः प्रोक्तो यद्रहस्यमिति प्रभो ।
[2]हतो भव त्वमित्युक्तो हतो भवति भारत ॥　　८५॥

एकमाचक्ष्व कौन्तेय धर्मराजं युधिष्ठिरम् ॥　　८६

यदा ह्ययं पाण्डव धर्मराजस्
　त्वत्तोऽयुक्तं लप्स्यते चैव साधु ।
ततोऽस्य पादावभिवाद्य पश्चाच्
　छमं ब्रूयास्सान्त्वपूर्वं च पार्थ ॥　　८७

भ्राता प्राज्ञस्तव कोपं न जातु
　कुर्याद्राजा धर्ममार्गानुसारी ।
मुक्तोऽनृताद्भ्रातृवधाच्च पापा-
　द्धृष्टः कर्ण त्वं जहि पार्थ पश्चात् ॥　　८८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ ७३ ॥ कर्णपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

[ अस्मिन्नध्याये ८८ श्लोकाः ]

---

1. क-ख—इदमर्धं नास्ति　　　　2. क-ख-ग—इदमर्धद्वयं नास्ति

## ॥ अष्टसप्ततितमोऽध्यायः ॥



अर्जुनेन युधिष्ठिराधिक्षेपः ॥ १ ॥ युधिष्ठिराधिक्षेपादात्मवधोद्यतं पार्थं प्रति कृष्णेन तत्प्रतिनिधितया आत्मप्रशंसनचोदना ॥ २ ॥ अर्जुनेनात्मप्रशंसनानन्तरं युधिष्ठिरक्षमापनम् ॥ ३ ॥



सञ्जयः—

इत्येवमुक्तस्तु जनार्दनेन
पार्थः प्रशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराजम्
अनुक्तपूर्वं परुषं प्रसह्य ॥ १

अर्जुनः—

मा त्वं राजन् व्याहरस्वाद्य वाक्यं
त्वं तिष्ठसे क्रोशमात्रादपेत्य ।
भीमस्तु मामर्हति गर्हणाय
यो युध्यते सर्वलोकप्रवीरैः ॥ २

काले हि शत्रूनतिपीड्य वीरो
हत्वा प्रवीरान वसुधाधिपानाम् ।
रथप्रधानोत्तमनागमुख्यान्
सादिप्रवीरानहितांश्च शूरान् ॥ ३

सुदुष्करं कर्म करोति भीमः
कर्तुं यथा नार्हति कश्चिदन्यः ।
रथादवस्कन्द्य गदां परामृशंस्
[1]ततो रणे चापि निहन्ति वारणान् ॥ ४

स कुञ्जराणामधिकं सहस्रं
हत्वाऽनदत्तुमुलं सिंहनादम् ।
[2]काम्भोजवानायुजपार्वतीयान्
ईहामृगाभान् विनिहत्य वाजिनः ॥ ५

[3]महाबलान् द्विरदान् भीमवेगान्
सहेत कः कुञ्जरान् युध्यमानः ।
असौ भीमो धार्तराष्ट्रेषु मग्नस्
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ६

वरासिना चाथ रथाश्वकुञ्जरांस्
तथा रथाङ्गैर्धनुषा च हन्त्यरीन् ।
प्रमृद्य पद्भ्यामहितान् निहन्ति
पुनश्च दोर्भ्यां शतमन्युविक्रमः ॥ ७

महाबलो वैश्रवणान्तकोपमः
प्रसह्य हर्ता द्विषतां शिरांसि ।

1. अ—अयं पादो नास्ति 2. अ—अयं पादो नास्ति
3. अ—नास्तीदमर्धम्

[1]सन्त्रासयानस्समरे शत्रुसङ्घान्
काम्भोजवानायुजपार्वतीयान् ॥ ८
स भीमसेनोऽर्हति गर्हणाय
न त्वं नित्यं रक्ष्यमाणस्सुहृद्भिः ॥ ८॥

कलिङ्गवङ्गाङ्गनिषादमागधान्
सदा महाशैलवलाहकोपमान् ।
निहन्ति यश्शत्रुगणाननेकशस्
स मां हि वक्तुं प्रभवत्यनागसम् ॥ ९॥

सुयुक्तमास्थाय रथं हि काले
धनुर्विधून्वञ् छरपूर्णमुष्टिभिः ।
सृजेश्च यो बाणसङ्घान् परेषु
महाबलो मेघ इवाम्बुधाराः ॥ १०॥

शतान्यष्टौ वारणानामशातयद्
विशातितैः कुम्भकटाग्रहस्तैः ।
यो भीमसेनो निहतारिसङ्घस्
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ११॥

[2]रथाश्च नागाश्च हयाश्च राजन्
भीमेनाजौ निहतास्सङ्घशोऽद्य ।

1. क-ख—न दृश्यत इदमर्धम् 2. अ-ख-घ—अर्धद्वयं नास्ति

राजानश्च बहवो महाबलास्
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १२॥

[1]धृतराष्ट्रपुत्रा बलिना च येन
महाबला निहताः प्रायशो वै ।
शूरो युद्धेष्वप्रतिवार्यवीर्यस्
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १३॥

प्रतापयंस्तद्बलमुग्ररूपं
योऽसौ रणे धार्तराष्ट्रस्य वीरः ।
एकस्सहेताप्रतिसृष्टपौरुषस्
तेनास्मि वाच्यो न त्वया वै कदाचित् ॥ १४॥

महारथा यत्र यत्रैव युद्धे
भिन्दन्ति सैन्यं तव कामतोऽद्य ।
स तत्र तत्रैव रणे महात्मा
दृढं भीमः परसङ्घानमृद्नात् ॥ १५॥

तेनास्मि वाच्यो न त्वयाऽहं कदाचि-
न्मा मा वोचः क्रूरमिहाद्य पार्थ ।
नास्मद्विधो वै भवता तु वाच्यो
यथा भवान् सर्वलोकस्य वाच्यः ॥ १६॥

1. ख-घ—अयं श्लोको नास्ति

एवं हि मां ते ब्रुवतो नरेन्द्र
कथं न [1]शीर्येच्छतधाऽद्य जिह्वा ।
अहो बतेदं सुनृशंसरूपं
कामादवोचस्त्वमिहाद्य यद्वै ॥ १७॥

बलं तु वाचि द्विजसत्तमानां
यत् क्षत्रियाणां बाहुबलं वदन्ति ।
त्वं चाबलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ॥ १८॥

नकुलेन राजन् गजवाजियोधा
हताश्च शूरास्सहसा समेत्य ।
त्यक्त्वा प्राणान् समरे युद्धकाङ्क्षी
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १९॥

कृतं कर्म सहदेवेन दुष्करं
यो युध्यते परसैन्यावमर्दी ।
न चाब्रवीत् किञ्चिदिहागतो बली
पश्यान्तरं तस्य चैवात्मनश्च ॥ २०॥

धृष्टद्युम्नस्सात्यकिर्द्रौपदेया
युधामन्युश्चोत्तमौजाश्शिखण्डी ।

1. क-ङ—दीर्येे

एते च सर्वे युधि सम्प्रपीडितास्
ते मामुपालब्धुमर्हन्ति न त्वम् ॥ २१॥

त्वन्मूलमस्माभिरिदं हि वैरं
प्राप्तं तथा व्यसनं चातिघोरम् ।
द्यूतप्रमत्तेन कृतं त्वयाऽसकृत्
कस्मादुपालब्धुमिहार्हसि त्वम् ॥ २२॥

त्वमेव राजन् सततं प्रमत्तस्
त्वमेव मूढो भारतानामसाधुः ।
त्वां प्राप्य राज्यं च विनष्टमेतत्
प्राप्ता महत् पाण्डवाश्चापि दास्यम् ॥ २३॥

त्वत्तः कृतेऽस्मद्वनवासदुःखं
राज्यस्य नाशो ह्यभिमन्योश्च घोरः ।
आत्मानमेवं सुनृशंसरूपं
ज्ञात्वा किमर्थं गर्हसे माऽद्य वीरम् ॥ २४॥

लज्जस्व राजन् यदि तेऽस्ति लज्जा
तूष्णीम्भूतः पश्य सर्वं कृतं नः ।
भीमो नित्यं समरस्य कर्ता
दर्पस्य भेत्ता पुनरेव नित्यम् ॥ २५॥

स्वयं ह्यशक्तेन नरेन्द्र युद्धे
नरेण कार्या सततं क्षमैव ।
[1]बलं हि वाचि द्विजसत्तमानां
क्षत्रं द्विजा बाहुबलं वदन्ति ॥ २६॥

त्वं वाग्बलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ।
[2]घटामि नित्यं तव कर्तुमिष्टं
दारैस्सुतैर्जीवितेनात्मना च ॥ २७॥

एवं च मां वाक्छलाकैर्भिनत्सि
त्वत्तस्सुखं न वयं विद्म किञ्चित् ।
मा वमंस्था द्रौपदीतल्पसंस्थो
महारथान् प्रतिहन्मि त्वदर्थे ॥ २८॥

सर्वातिशङ्की भारत निष्ठुरोऽसि
त्वत्तस्सुखं नाभिजानामि किञ्चित् ।
प्रोक्तस्स्वयं सत्यसन्धेन मृत्युस्
तव प्रियार्थे नरदेव युद्धे ॥ २९॥

शिखण्डिनाम्ना प्रधने तवार्थे
मयाऽभिगुप्तेन हतश्च भीष्मः ।

---

1. अ—नास्त्ययं पादः 2. अ—अर्धद्वयं नास्ति

द्रोणो हतो यस्सततोपकारी
धृष्टद्युम्नेन स्यन्दनाद्विप्रकृष्य ॥ ३०॥

द्रौणिश्च रुद्धस्सगणो महात्मा
तथाऽपि ते वै वचनं नृशंसवत् ।
दुःखं प्रियं ते नरदेव कर्तुं
यस्य प्रियं ते न करोम्यहं वै ॥ ३१॥

न मुच्यते वै दिवि चेह वा पुमान्
यस्ते मदन्योऽप्रियमारभेत ।
न चाभिनन्दामि तवाधिराज्यं
यतस्त्वमक्षेषु दृढं प्रसक्तः ॥ ३२॥

स्वयं कृत्वा पापमनार्यजुष्टम्
अस्माभिराजौ व्यसनं तितीर्षसि ।
अक्षेषु दोषा बहवो विधर्माश्
श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ॥ ३३॥

तान् नैच्छसि त्यक्तुमनार्यजुष्टां
स्तेन स्म सर्वे निरये त्वयाऽस्ताः ।
त्वं देविता त्वत्कृते राज्यनाशस्
त्वत्सम्भवं व्यसनं नो नरेन्द्र ॥ ३४॥

माऽस्मान् क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वं
भूयो राजन् कोपयस्यल्पबुद्ध्या ॥ ३५॥

सञ्जयः—

एता वाचः परुषास्सव्यसाची
स्थिरप्रतिज्ञश्श्रावयित्वा नरेन्द्रम् ।
[1]बभूवासौ विमना धर्मभीरुः
कृत्वा प्राज्ञः पातकं किञ्चिदेवम् ॥ ३६॥

विनिश्श्वसञ्चुयेष्टमनिष्टमुक्त्वा
ततस्तु कोशादसिमुद्बबर्ह ॥ ३७

[2]तमाह कृष्णः किमिदं पुनर्भवान्
विकोशमाकाशनिभं करोत्यसिम् ।
प्रब्रूहि सत्यं पुनरुत्तरं विधेर्
वचः प्रवक्ष्यामि तवार्थसिद्धये ॥ ३८

इतीव पृष्टः पुरुषोत्तमेन
सुदुःखितः केशवमाह पार्थः ॥ ३८॥

1. क—कोश एकस्मिन्नेवेदमर्धं वर्तते

2. अ—ततोऽनुतप्यन् भृशमार्तरूपो
विनिश्वसंश्चापि स राजपुत्रः ।
समुद्बबर्हासिवरं महात्मा
निहन्तुमात्मानममित्रघाती ॥ [ अधिकः पाठः ]

अर्जुनः—

अहं हनिष्ये स्वशरीरमेतत्
प्रसह्य येनाहितमुक्तवान् गुरुम् ॥ ३९

सञ्जयः—

निशम्य तत् पार्थवचोऽब्रवीदिदं
जनार्दनो धर्मभृतां वरिष्ठः ॥ ३९॥

श्रीभगवान्—

[1]प्रब्रूहि पार्थ स्वगुणानिहात्मनस्
ततो हतात्मा भवसीति निश्चयः ॥ ४०

सञ्जयः—

तथा तु कृष्णस्य वचो निशम्य
ततोऽर्जुनः प्राह धनुः प्रगृह्य ।

1. अ-क-ह—राजानमेनं त्वमिति प्रयुक्ते
तत् कश्मलं प्राविशत् पार्थ घोरम् ।
त्वं चात्मानं हन्तुमिच्छस्यरिघ्न
बहुष्वपायेषु ततः किरीटिन् ॥
धर्मात्मानं भ्रातरं तत्त्वमद्य
खड्गेनामुं परिहन्या नृवीर ।
धर्माद्भीरुस्तत् कथमद्य मन्यसे
किं चोत्तरं नाम करिष्यसि त्वम् ॥
सूक्ष्मो धर्मो दुर्विदश्चापि पार्थ
विशेषतः प्राप्यमाने नृलोके ।
हत्वाऽऽत्मानं प्राप्नुयाद्धि यथा ?
भ्रातुर्नरकं घोररूपम् ? ॥ [अधिकः पाठः]

युधिष्ठिरं धर्मभृतां वरिष्ठं
श्रृणुष्व राजन्निति दुर्वचस्त्वयम् ॥ ४१

अर्जुनः—

न मादृशोऽन्यो नरदेव विद्यते
धनुर्धरो देवमृते पिनाकिनम् ।
अहं हि तेनानुमतो महौजसा
क्षणेन हन्यां सचराचरं जगत् ॥ ४२

मया हि राजन् सदिगीश्वरा दिशो
विजित्य सर्वा भवतः कृता वशे ।
स राजसूयश्च समाप्तदक्षिणस्
सभा च दिव्या भवतो महौजसा ॥ ४३

पाणी पृषत्कालिखिताविमौ पुनर्
धनुश्च सव्ये विततं सबाणम् ।
पादौ च मे लक्षणतः प्रशस्तौ
न मादृशं युद्धगतं जयन्ति ॥ ४४

हता उदीच्या निहताः प्रतीच्याः
प्राच्या हता दाक्षिणात्या निरस्ताः ।
संशप्तकानां किञ्चिदेवावशिष्टं
सर्वस्य लोकस्य हतं मयाऽर्धम् ॥ ४५

शेते मया निहता शत्रुसेना
छिन्नैर्गात्रैर्भूमितले स्खलन्ती ।
येऽनस्त्रज्ञास्तान् न निहन्मि चास्त्रैस्
तस्मान्न भस्मैव करोमि लोकान् ॥ ४६

सञ्जयः—
इत्येवमुक्त्वा पुनरेव पार्थो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।

अर्जुनः—
प्रसीद राजन् क्षम यन्मयोक्तं
काले भवान् वेत्स्यति तन्नमस्ते ॥ ४७

सञ्जयः—
ततस्तु पादावुपगृह्य पार्थस्
समुत्थितो दीप्ततेजाः किरीटी ।
प्रसाद्य राजानममित्रसाहं
स्थितोऽब्रवीच्चैनमभिप्रतप्तम् ॥ ४८

अर्जुनः—
याम्येष भीमं समराद्विमोक्तुं
सर्वात्मना सूतपुत्रं च हन्तुम् ।
भवत्प्रियार्थं मम जीवितं हि
ब्रवीमि सत्यं तदवेहि राजन् ॥ ४९

नेदं चिरात् क्षिप्रमिदं भविष्यद्
आवर्ततेऽसावभियामि चैनम् ।
अद्याप्यपुत्रा तेन हतेन राधा
कुन्ती मया वा तदिदं विद्धि राजन् [1]॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥*
[ अस्मिन्नध्याये ५० श्लोकाः ]

## ॥ एकोनाशीतितमोऽध्यायः ॥

अर्जुनकृतावमानाद्वनं यियासोर्युधिष्ठिरस्य कृष्णेन परिसान्त्वनम् ॥

सञ्जयः—

एतच्छ्रुत्वा पाण्डवो धर्मराजो
भ्रातुर्वाक्यं परुषं चार्जुनस्य ।
उत्थाय तस्माच्छयनादुवाच
पार्थं ततो दुःखपरीतचेताः ॥ १

1. अ—जैत्रं रथं भीममास्थाय कृष्ण
प्रयाति शीघ्रं सूतपुत्रं निहन्तुं ।
इत्येवमुक्त्वा गन्तुमिच्छन् रणाय
समुत्थितो दीप्ततेजाः किरीटी ॥ [ अधिकः पाठः ]

* अ—कोशे नात्राध्यायसमाप्तिर्दृश्यते

युधिष्ठिरः—

कृतं मया पार्थ न साधु कर्म
येन प्राप्तं व्यसनं वस्सुघोरम् ।
तस्माच्छिरश्छिन्धि ममैतदद्य
कुलान्तकस्याधमपूरुषस्य ॥ २

पापस्य पापव्यसनान्वितस्य
विमूढबुद्धेरलसस्य भीरोः ।
वृद्धावमन्तुः परुषस्य चैव
किं ते चिरं मामनुसृत्य रूक्षम् ॥ ३

गच्छाम्यहं वनमद्यैव पापस्
सुखं भवान् वर्ततां मद्विहीनः ।
योग्यो राजा भीमसेनो महात्मा
क्लीबस्य वा किं मम राज्यकृत्यम् ॥ ४

न चास्मि शक्तः परुषाणि सोढुं
पुनस्तवेमानि रुषाऽन्वितस्य ।
भीमोऽस्तु राजा मम जीवितेन
न कार्यमस्त्यत्र महानुभाव ॥ ५

सञ्जयः—

इत्येवमुक्त्वा सहसोत्पपात
रुषाऽन्वितस्तच्छयनं विहाय ।

इयेष निर्गन्तुमितो वनाय
तं वासुदेवः प्रणतोऽभ्युवाच ॥ ६

श्रीभगवान्—

राजन्नविदितं तत्ते यथा गाण्डीवधन्वनः ।
प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता ॥ ७

ब्रूयाद्य एनं गाण्डीवं देह्यन्यस्मै त्वमित्युत ।
स वध्यस्स्यात् पुमाँल्लोके त्वया ह्युक्तोऽयमीदृशम् ॥ ८

ततस्सत्यां प्रतिज्ञां तां पार्थेन परिरक्षता ।
मच्छन्दादवमानोऽयं कृतस्तव महीपते ॥ ९

गुरूणामवमानो हि वध इत्यभिधीयते ।
तस्मात् क्षम महासत्त्व मम पार्थस्य चोभयोः ॥ १०

व्यतिक्रममिमं राजन् सत्यसंरक्षणं प्रति ।
शरणं त्वां महाराज प्रपन्नौ स्व उभावपि ॥ ११

क्षन्तुमर्हसि मे राजन् प्रणतस्याभियाचतः ।
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ॥ १२

सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ।
यस्येच्छसि वधं तस्य गतमेवाद्य जीवितम् ॥ १३

सञ्जयः—

इति कृष्णवचश्श्रुत्वा धर्मराजो युधिष्ठिरः ।
ससम्भ्रमं हृषीकेशम् उत्थाप्य प्रणतं तदा ॥ १४

कृताञ्जलिमुवाचेदं वाक्यं यत् समनन्तरम् ॥ १४॥

युधिष्ठिरः—

एवमेतद्यथाऽऽत्थ त्वम् अस्त्वेषोऽतिक्रमो मम ।

अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव ॥ १५॥

मोक्षिता आपदो घोराद् वयमद्य त्वयाऽच्युत ॥ १६

[1]भवन्तं नावमासाद्य ह्यावां व्यसनसागरात् ।

घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ॥ १७

त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ।

समुत्तीर्णास्सहामात्यास् सनाथास्स्म त्वयाऽच्युत ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

## ॥ अशीतितमोऽध्यायः ॥

अर्जुनेन स्वावमानितस्य युधिष्ठिरस्य प्रसादनम् ॥ १ ॥
अर्जुनेन युधिष्ठिराग्रे कर्णवधप्रतिज्ञानम् ॥ २ ॥

सञ्जयः—

इति स्म कृष्णवचनात् प्रत्युच्चार्य युधिष्ठिरम् ।

बभूव विमनाः पार्थः किञ्चित् कृत्वेव पातकम् ॥ १

1. अ—नास्तीदमर्धम्

ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ॥ १॥

श्रीभगवान्—

कथं नाम भवेदेतद् यदि त्वं पार्थ धर्मजम् ।
असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् ॥ २॥

त्वमित्युक्त्वा तु राजानम् एवं कश्मलमाविशः ।
हत्वा तु नृपतिं पार्थ करिष्यसि किमुत्तरम् ॥ ३॥
एवं हि दुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ४

स भवान् धर्मभीरुत्वाद् ध्रुवं यायान्महत्तमः ।
नरकं घोररूपं च भ्रातुर्ज्येष्ठस्य वै वधात् ॥ ५

स त्वं धर्मभृतां श्रेष्ठं राजानं संशितव्रतम् ।
प्रसादय कुरुश्रेष्ठम् एतदत्र मतं मम ॥ ६

[1]प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे ।
प्रयावस्त्वरया योद्धुं सूतपुत्रवधं प्रति ॥ ७

हत्वाऽद्य समरे कर्णं त्वं पार्थ निशितैश्शरैः ।
विपुलां प्रीतिमाधत्स्व धर्मपुत्राय मानद ॥ ८

एतदत्र महाबाहो प्राप्तकालं मतं मम ।
एवं कृते कृतं चैव तव कार्यं भविष्यति ॥ ९

---

1. क—एवं कृते कृतं चैव तव कार्यं भविष्यति ।

[ अधिकः पाठः ]

सञ्जयः—

ततोऽर्जुनो महाराज लज्जया वै समन्वितः ।
धर्मराजस्य चरणौ प्रपीड्य शिरसाऽनघः ॥ १०

उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः ॥ १०॥

अर्जुनः—

क्षमस्व राजन् यत् प्रोक्तस् त्वं मया धर्मभीरुणा ॥ ११

सञ्जयः—

पादयोः पतितं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभः ॥ १२

उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् ।
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ १३

रुदित्वा सुचिरं कालं भ्रातरौ तौ महाद्युती ।
कृतशौचौ नरव्याघ्रौ प्रीतिमन्तौ बभूवतुः ॥ १४

समाश्लिष्य च बाहुभ्यां मूर्ध्न्युपाघ्राय पाण्डवम् ।
प्रीत्या परमया युक्तः प्रस्मयंश्चाब्रवीद्वचः ॥ १५

युधिष्ठिरः—

कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः ।
हतस्सूतो धनुश्चैव रथश्शक्तिश्शरा ध्वजः ॥ १६

शरैः कृत्ता महेष्वास यतमानस्य संयुगे ॥ १६॥

सोऽहं दृष्ट्वा रणे तस्य कर्म कर्णस्य फल्गुन ।
व्यवसीदामि दुःखेन न तु मे जीवितं प्रियम् ॥ १७॥

त्वमद्य यदि वै वीरं न हनिष्यंसि संयुगे ।
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ॥ १८॥

सञ्जयः—

एवमुक्तः प्रत्युवाच विजयो भरतर्षभम् ॥ १९

अर्जुनः—

सत्येन ते शपे राजंस् त्वत्पादेन तथैव च ।
भीमेन च नरव्याघ्र यमाभ्यां च महीपते ॥ २०

[1]अहमेनं नरश्रेष्ठ सामात्यं च महीपते ॥ २०॥

यथाऽद्य समरे कर्णं हनिष्यामि हतोऽपि वा ।
महीतले पतिष्यामि सत्येनैव च ते शपे ॥ २१॥

सञ्जयः—

एवमाभाष्य राजानम् अब्रवीन्माधवं वचः ॥ २२

अर्जुनः—

अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः ।
त्वमनुध्याहि भद्रं ते वधं तस्य दुरात्मनः ॥ २३

सञ्जयः—

एवमुक्तोऽब्रवीत् पार्थं केशवो राजसत्तम ॥ २३॥

---

1. अ—नास्तीदमर्धम्

श्रीभगवान्—

शक्तोऽसि भरतश्रेष्ठ यत्नं कर्तुं यदात्थ माम् ॥ २४

एष चापि हि मे कामो नित्यमेव महाबल ।
कथं भवान् रणे कर्णं निहन्यादिति फल्गुन ॥ २५

सञ्जयः—

एवमुक्तस्ततो राजन पार्थो वचनमब्रवीत् ॥ २५॥

अर्जुनः—

हन्यते द्वैरथे भूयो युज्यन्तां वै हयोत्तमाः ।
उपावृत्ताश्च तुरगाश् शिक्षिताश्चैव सादिभिः ॥ २६॥

आयुधानि च सर्वाणि सञ्जय त्वं महारथे ।
रथोपकरणैस्सर्वैस् सत्वरं यातु मे रथः ॥ २७॥

सञ्जयः—

एवमुक्तो महाराज फल्गुनेन महात्मना ।
[1]उवाच दारुकं कृष्णः कुरु सर्वं यदब्रवीत् ॥ २८॥

अर्जुनो भरतश्रेष्ठश् श्रेष्ठस्सर्वधनुष्मताम् ॥ २९

आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम ।
योजयामास च रथं वैयाघ्रं शत्रुतापनम् ॥ ३०

युक्तं तु रथमास्थाय दारुकेण महात्मना ।
उपस्थितं रथं दृष्ट्वा पद्मनाभो रणान्तकृत् ॥ ३१

---

1. अ—पद्यार्धानि नसन्ति

भूयश्चोवाच मतिमान् माधवो धर्मनन्दनम् ॥ ३१॥

श्रीभगवान्—

[1]युधिष्ठिरेह बीभत्सुं त्वं सान्त्वयितुमर्हसि ।
अनुज्ञातुं च कर्णस्य वधायाशु दुरात्मनः ॥ ३२॥

श्रुत्वा ह्यावां महासङ्ख्ये त्वां कर्णशरपीडितम् ।
प्रवृत्तिं ज्ञातुमायाताविह पाण्डवनन्दन ॥ ३३॥

दिष्ट्याऽसि राजन् विरुजो दिष्ट्या न ग्रहणं गतः ।
परिसान्त्वय बीभत्सुं जयमाशास्व चानघ ॥ ३४॥

युधिष्ठिरः—

एह्येहि वीर बीभत्सो मां परिष्वज पाण्डव ।
वक्तव्यमुक्तोऽस्म्यहितं त्वया क्षान्तं च तन्मया ॥ ३५॥

अहं त्वामनुजानामि जहि कर्णं धनञ्जय ।
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणम् ॥ ३६॥

सञ्जयः—

ततो धनञ्जयो राजञ् शिरसा प्रणतः पुनः ।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ॥ ३७॥

तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम् ।
मूर्ध्न्युपाघ्राय चैवैनम् इदं पुनरुवाच ह ॥ ३८॥

---

1. ख—नासीदमर्धम्

युधिष्ठिरः—

धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया ।
माहात्म्यं विजयं चापि भूयः प्राप्नुहि शाश्वतम् ॥ ३९॥

अर्जुनः—

अद्य तं पापकर्माणं सानुबन्धं रणे शरैः ।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ४०॥

येन त्वं पीडितो बाणैर् दृढमायम्य कार्मुकम् ।
तस्याद्य कर्मणः कर्णः फलं प्राप्स्यति दारुणम् ॥ ४१॥

अद्य त्वामुपयास्यामि कर्णं हत्वा महीपते ।
सभाजये त्वामाक्रन्दाद् इति सत्यं ब्रवीमि ते ॥ ४२॥

नाहत्वा विनिवर्तिष्ये कर्णमद्य रणाजिरात् ।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ४३॥

सञ्जयः—

इति ब्रुवाणं सुमनाः किरीटिनं
युधिष्ठिरः प्राह वचो बृहत्तदा ॥ ४४

युधिष्ठिरः—

यशोऽक्षयं जीवितमीप्सितं जयं
सदाबलं वीर्यमरिक्षयं सुखम् ।
प्रयाहि वृद्धिं च दिशन्तु देवता
यथाऽहमिच्छामि तथाऽस्तु तच्च ते ॥ ४५

प्रयाहि कर्ण जहि शीघ्रमाहवे
पुरन्दरो वृत्रमिवात्मवृद्धये ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
॥ ७३ ॥ कर्णपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

## ॥ एकाशीतितमोऽध्यायः ॥

कर्णेन योद्धुं निर्गच्छतोऽर्जुनस्य शुभनिमित्तप्रादुर्भावः ॥ १ ॥
श्रीकृष्णेनार्जुनस्य प्रोत्साहनम् ॥ २ ॥

सञ्जयः—

प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना ।
सम्पूज्य देवतास्सर्वा ब्राह्मणान् स्वस्ति वाच्य च ॥ १

कृतमङ्गलकल्याण आरुरोह रथोत्तमम् ॥ १॥

तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषः परमा युङ्क्त युक्तः कर्णवधं प्रति ॥ २॥

प्रयान्तं तं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ ३॥

बभूवुर्विमला राजन् दिशस्सर्वास्समन्ततः ॥ ४

चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ।
प्रदक्षिणमकुर्वन्त पाण्डवं पाण्डुपूर्वज ॥ ५

बहवः पक्षिणो राजन् पुन्नामानश्शिवाश्शुभाः ।
त्वरयन्तोऽर्जुनं सङ्ख्ये सम्प्रहृष्टा ववाशिरे ॥ ६

कङ्का गृध्रा बलाश्चैव वायसाश्च विशां पते ।
अगच्छन्नग्रतस्तस्य भक्ष्यहेतोर्भयानकाः ॥ ७

धन्यानि च निमित्तानि पाण्डवस्य शशंसिरे ।
विनाशमरिसेनायाः कर्णस्य च वधं तथा ॥ ८

[1]निमित्तानि च शुभ्राणि रुतं च मृगपक्षिणाम् ॥ ८॥

प्रयातस्य हि पार्थस्य महान् स्वेदोऽभ्यजायत ।
चिन्ता च विपुला तीव्रा कथमेतद् भविष्यति ॥ ९॥

विषण्णं तु ततो ज्ञात्वा सव्यसाचिनमच्युतः ।
सञ्चोदयति तेजस्वी मधुहा वानरध्वजम् ॥ १०॥

ततो गाण्डीवधन्वानम् अब्रवीन्मधुसूदनः ।
दृष्ट्वा पार्थं तथा यान्तं चिन्तापरिगतं तदा ॥ ११॥

श्रीभगवान्—

गाण्डीवधन्वन् सङ्ग्रामे ये त्वया धनुषा जिताः ।
न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ १२॥

---

1. अ-ख—नास्तीदमर्धम्

एते हि बह्वश्शूराश् शक्रतुल्यपराक्रमाः ।
त्वां प्राप्य समरे पार्थ प्रयाताः परमां गतिम् ॥ १३॥

को हि द्रोणं तथा भीष्मं भगदत्तं जयद्रथम् ।
बिन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ॥ १४॥

श्रुतायुं चाश्रुतायुं च शतायुं च महारथम् ।
प्रत्युद्गम्य भवेत् क्षेमी यो न स्यात् त्वद्विधः प्रभुः ॥ १५॥

अस्त्राणि तव दिव्यानि लाघवं बलमेव च ।
वेधः पातश्च लक्षस्य लघुता च तवार्जुन ॥ १६॥

असम्मोहस्तथा युद्धे धनुषोऽस्य च सन्नतिः ।
भवान् देवान् सगन्धर्वान् हन्यात् सर्वांश्च राक्षसान् ॥ १७॥

पृथिव्यां हि रणे पार्थ त्वत्समो नास्ति विक्रमे ॥ १८

धनुर्गृह्णन्ति ये केचित् क्षत्रिया भुवि भारत ।
आत्मनस्तु समं तेषां न पश्यामि शृणोमि वा ॥ १९

ब्रह्मणा हि प्रजास्सृष्टा गाण्डीवं च धनुर्वरम् ।
तेन त्वं युध्यसे सेनां तस्मान्नास्ति समस्त्वया ॥ २०

न च प्रमुखतो वाच्यो भवानेतद्वचो मया ।
मानितस्य महादर्पो भविष्यति रणेऽर्जुन ॥ २१

अवश्यमेतद्वाच्यं मे तेन त्वां प्रब्रवीम्यहम् ॥ २१॥

अतिमानाच्च ते नात्मा मन्तव्यो वै कथञ्चन ।

जीवमाने रणे कर्णे सूतपुत्रे महारथे[1] ॥ २२॥

त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये परन्तप ।
अवश्यं यत्नमास्थाय त्वया वध्यो महाहवे ॥ २३॥

तेजसा ह्यग्निसदृशो वायुवेगसमो जवे ।
अन्तकप्रतिमः कोपे वज्रसंहननो बले ॥ २४॥

अष्टारत्निर्महाबाहुर् व्यूढोरस्कस्सुदुर्जयः ।
अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ २५॥

सर्वैर्योधगुणैर्युक्तो मित्राणामभयङ्करः ।
सततं पाण्डवद्वेष्टा धार्तराष्ट्रहिते रतः ॥ २६॥

सर्वैरवध्यो राधेयो देवैरपि सवासवैः ।
ऋते त्वयेति मे बुद्धिस् तमद्य जहि भारत ॥ २७॥

कर्णो हि बलवान् धृष्टः कृतास्त्रश्च महाबलः ।
कृती च चित्रयोधी च देशकालस्य कोविदः ॥ २८॥

न हि कर्णं समासाद्य शक्तो हि स्यात् पुरन्दरः ।
क्षेमी प्रत्यागमेत् पार्थ तादृशोऽस्य पराक्रमः ॥ २९॥

त्वां तु प्राप्य महारङ्गे यत्नवानपि भारत ।
निवर्तेत रणात् कर्ण इति मे धीयते मतिः ॥ ३०॥

---

1. घ—धनुर्गृह्णन्ति ये केचित् क्षत्रिया भुवि भारत ।
आत्मनस्तु समं तेषां न पश्यामि श्रुणोमि वा ॥ [अधिकः पाठः]

देवैरपि हि संरब्धैस् सर्वलोकेश्वरैरपि ।
अशक्यं तं रणे मन्ये जेतुं प्रतियुयुत्सुभिः ॥ ३१॥

दुरात्मानं पापवृत्तं नृशंसं
दुष्टात्मानं पाण्डवेयेषु नित्यम् ।
सुयोधनार्थे पाण्डवेयैर्विरुद्धं
हत्वा कर्णं निष्ठितार्थो भवाद्य ॥ ३२॥

अधिकं मन्यते त्मानं येन पापस्सुयोधनः।
तमद्य मूलं पापानां जहि कर्णमरिन्दम ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ७३ ॥ कर्णपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[ अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

## ॥ द्व्यशीतितमोऽध्यायः ॥

कृष्णेनार्जुनं प्रति भीष्मादियुद्धनिधनप्रकारानुवादपूर्वकं तेषां वधे तस्यैव मुख्यकारणत्वकथनम् ॥ १ ॥ बाल्यात्प्रभृति दुर्योधनापनयानुस्मारणपूर्वकं सर्वत्र कर्णस्यैव मूलतया महापराधित्वद्योतनेन तस्यावश्यं हननविधानम् ॥ २ ॥

सञ्जयः—

ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत् ।
कृतसङ्कल्पमायान्तं वधे कर्णस्य भारत ॥ १

श्रीभगवान्—

अद्य सप्तदशाहानि वर्तमानस्य नित्यशः ।
विनाशस्यास्य घोरस्य नरवारणवाजिनाम् ॥ २

भूत्वा च विपुला सेना तावकानां परैस्सह ।
अन्योन्यं समरे प्राप्य किञ्चिच्छेषा महाहवे ॥ ३

भूत्वा हि कौरवाः पार्थ प्रभूतगजवाजिनः ।
विनष्टास्त्वां समासाद्य विक्षिपन्तं महद्धनुः ॥ ४

एते वै पृथिवीपालास् सृञ्जयाश्च सहान्वयाः ।
त्वां समासाद्य वर्धन्ते पाण्डवाश्च व्यवस्थिताः ॥ ५

पाञ्चालैः पाण्डवैर्मात्स्यैः करूशैश्चेदिकाशिभिः ।
मगधैः पार्वतीयैश्च दाक्षिणात्यैस्सकेरलैः ॥ ६

त्वया गुप्तैरमित्रघ्न कृतश्शत्रुगणक्षयः ॥ ६॥

को हि शक्तो रणे जेतुं कौरवान् पार्थ सङ्गतान् ।
अन्यत्र पाण्डवाद्युद्धे श्वेताश्वाद्वानरध्वजात् ॥ ७॥

त्वं हि शक्तो रणे जेतुं ससुरासुरमानुषम् ।
लोकत्रयं समुद्युक्तं किं पुनः कौरवं बलम् ॥ ८॥

भगदत्तं हि राजानं कोऽन्यश्शक्तस्त्वया विना ।
जेतुं भरतशार्दूल योऽपि स्याद्वासवोपमः ॥ ९॥

तथेमां विपुलां सेनां गुप्तां पार्थ त्वयाऽनघ ।
न शक्ताः पार्थिवास्सर्वे चक्षुर्भ्यामपि वीक्षितुम् ॥ १०॥

तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे ।
धृष्टद्युम्नशिखण्डिभ्यां द्रोणभीष्मौ निपातितौ ॥ ११॥

को हि शक्तो रणे पार्थ पाञ्चालानां महात्मनाम् ।
भीष्मद्रोणौ रणे जेतुं शक्रतुल्यपराक्रमौ ॥ १२॥

को हि शान्तनवं भीष्मं द्रोणं वैकर्तनं कृपम् ।
द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च ॥ १३॥

सैन्धवं मद्रराजं च राजानं च सुयोधनम् ।
[1]वीरान् कृतास्त्रान् समरे सर्वानेवानिवर्तिनः ॥ १४॥

अक्षौहिणीपतीन् सर्वान् संरब्धान् युद्धदुर्मदान् ॥ १५

1. क—अर्धचतुष्टयं नास्ति

श्रेण्यश्च बहुला राजन्नुदीर्णाश्वरथद्विपाः ।
नानाजानपदाश्चोग्राः क्षत्रियाणाममर्षिणाम् ॥ १६

गणाश्च दाशमीयानां वसातीनां च भारत ।
[1]नानादेशसमुत्थाश्च नानादेशसमुद्भवाः ॥ १७
त्वां समासाद्य बीभत्सो हता नागाश्च संयुगे ॥ १७॥

प्राच्यानां मागधानां च भोजानामनिवर्तिनाम् ॥ १८
उदीर्णाश्वगजा सेना सर्वक्षत्रस्य भारत ।
त्वां समासाद्य विलयं गता साश्वरथद्विपा ॥ १९

उग्राश्च बहुलाः क्रूरा [2]स्तुषारा यवनाश्शकाः ।
दर्पाभिसारा दरदाः खषा परमतङ्कणाः ॥ २०

[3]आन्ध्रजाश्च कुणिन्दाश्च किराताश्चोग्रविक्रमाः ।
म्लेच्छाश्च पार्वतीयाश्च सागरानूपवासिनः ॥ २१
संरम्भिणो युद्धशौण्डा बलिनोऽथास्त्रपाणयः ॥ २१॥

एते सुयोधनस्यार्थे संरब्धाः कुरुभिस्सह ।
न शक्या युधि निर्जेतुं त्वदन्येन परन्तप ॥ २२॥

धार्तराष्ट्रमुदग्रं हि दृष्ट्वा व्यूढं महद्बलम् ।
यस्य त्वं न भवेस्त्राता कः प्रतीपमभिव्रजेत् ॥ २३॥

---

1. अ—अर्धचतुष्टयं नास्ति
2. क-ख-घ—गान्धारा
3. क—अन्धकाश्च ख—अत्यन्तकाश्च तूर्णन्ता घ—आहुकाश्च

तं सागरमिवोद्धूतं सैन्यसागरमक्षयम् ।
विदार्य पाण्डवैर्युद्धे त्वया गुप्तैर्हताः परे ॥ २४॥

मागधानामधिपतिर् जयत्सेनो महाबलः ।
अद्य सप्त दिने नष्टस् स च सङ्ख्येऽभिमन्युना ॥ २५॥

ततो दश सहस्राणि गजानां भीमकर्मणाम् ।
जघान गदया भीमस् तस्य राज्ञः परिच्छदम् ॥ २६॥

तथाऽन्ये निहता नागा योधाश्च शतशो हताः ।
भीमेन सहसा पार्थ वर्तमाने महाहवे ॥ २७॥

भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः ।
सवाजिनरनागाश्च मृत्युलोकमितो गताः ॥ २८॥

ततस्सेनामुखे तस्मिन् निहते तत्र पाण्डवैः ।
भीष्मः प्रासृजदुग्राणि शरजालानि सङ्घशः ॥ २९॥

सचेदिकान् सपाञ्चालान् करूशान् मत्स्यकेकयान् ।
शरैः प्रच्छादयाञ्चक्रे प्रवरस्सर्वधन्विनाम् ॥ ३०॥

तस्य चापाच्च्युतैर्बाणैः परदेहविदारणैः ।
पूर्णमाकाशमभवद् रुक्मपुङ्खैरजिह्मगैः ॥ ३१॥

गत्या दशम्या ते तत्र जघ्नुर्वाजिनरद्विपान् ।
[1]हित्वा भवद्गतिं दुष्टां स बाणैर्वा यतोऽचरन् ॥ ३२॥

1. क-ङ—भित्वा तव गतिं धृष्टः सबाणैव्यायते चरत्
ख—हित्वा नवगतीरुष्टः

दिनानि दश भीष्मेण हतं यौधिष्ठिरं बलम् ।
शून्याः कृता रथोपस्था हताश्च गजवाजिनः ॥ ३३॥

दशमेऽहनि सम्प्राप्ते कृत्वा घोरं पराक्रमम् ।
दर्शयित्वाऽऽत्मनो वीर्यं रुद्रोपेन्द्रसमं भुवि ॥ ३४॥

पाण्डवानामनीकानि प्रविगाह्य विशां पते ।
विनिघ्नन् पृथिवीपालांश् चेदिपाञ्चालकेकयान् ॥ ३५॥

अहनत् पाण्डवीं सेनां गजाश्वरथसङ्कुलाम् ।
मज्जन्तमप्लवे मन्दम् उज्जिहीर्षुस्सुयोधनम् ॥ ३६॥

तथा चरन्तं सङ्ग्रामे तपन्तमिव भास्करम् ।
[1]पदातिकोटिसाहस्राः प्रवरायुधपाणयः ॥ ३७॥

न शेकुस्सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ॥ ३८

विचरन्तं तथा तं तु सङ्ग्रामे जितसाध्वसम् ।
सर्वोद्योगेन सहसा पाण्डवास्समभिद्रवन् ॥ ३९

स तु विद्राव्य समरे पाण्डवान् सृञ्जयानपि ।
एक एव रणे भीष्म एकवीरत्वमागतः ॥ ४०

तं शिखण्डी समासाद्य त्वया गुप्तो महाव्रतम् ।
मृत्युर्जातोऽवधीद्भीष्मं शरौघैः पातयन् रथात् ॥ ४१

स एष पतितश्शेते शरतल्पे पितामहः ।

---

1. क-ख-घ—नास्तीदमर्धम्

त्वां प्राप्य पुरुषव्याघ्रं वृत्रः प्राप्येव वज्रिणम् ॥ ४२

द्रोणः पञ्च दिनान्युग्रो विधम्य रिपुवाहिनीम् ।
कृत्वा व्यूहं महायुद्धे पातयित्वा महारथान् ॥ ४३

जयद्रथस्य समरे कृत्वा रक्षां महारथः ।
अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत् प्रजाः ॥ ४४

पञ्चमे दिवसे वीरो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं समासाद्य गतस्स परमां गतिम् ॥ ४५

यदि चैव भवान् युद्धे सूतपुत्रमुखान् रथान् ।
न वारयति सङ्ग्रामे कस्माद्द्रोणमसौ जयेत् ॥ ४६

भवता तद्बलं सर्वं धार्तराष्ट्रस्य वारितम् ।
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय ॥ ४७

कश्च शक्तो रणे कर्तुं त्वदन्यः पुरुषर्षभ ।
यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ॥ ४८

विदार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ।
निहतस्सैन्धवो राजा त्वयाऽस्त्रबलतेजसा ॥ ४९

आश्चर्यं सिन्धुराजस्य मन्यन्ते क्षत्रिया वधम् ।
अनाश्चर्य [1]महं मन्ये त्वं तु पार्थ महारथः ॥ ५०

---

1. क—श्रते त्वस्त्यमद्धं ख—महत्त्वेतदद्धं पार्थं महारथ
घ—मम त्वेतत् त्वस्त्यं

त्वां हि प्राप्य रणे क्षत्रम् एकाह्ना पुरुषोत्तम ।
नश्यमानमिदं युद्धे मन्ये जानन् बलं तव ॥ ५१

सेयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे ।
हतसर्वस्वभूयिष्ठा भीष्मद्रोणौ यदा हतौ ॥ ५२

शीर्णप्रवरयोधाढ्या हतवाजिरथद्विपा ।
हीना सूर्येन्दुनक्षत्रैर् द्यौरिवाभाति भारती ॥ ५३

विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रमैः ।
आसुरीव महासेना देवराजपराक्रमैः ॥ ५४

तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ।
द्रौणिश्च कृतवर्मा च कर्णो मद्राधिपः कृपः ॥ ५५

तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ।
हतामित्रां प्रयच्छोर्वीं राज्ञे सद्वीपपत्तनाम् ॥ ५६

द्रोणपुत्रं कृपं शल्यं भोजमातिरथिं तथा ।
एतांस्तु वै नरव्याघ्र हत्वा वीरान् महारथान् ॥ ५७

साकाशजलपातालां सपर्वतमहावनाम् ।
प्रयच्छामितवीर्याय पार्थायाद्य वसुन्धराम् ॥ ५८

एतान् हत्वा महाबाहो पुरा विष्णुरिवासुरान् ।
प्रयच्छ मेदिनीं राज्ञे शक्रायेव पुरा हरिः ॥ ५९

अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया ।

विष्णुना निहतेष्वेव दानवेषु दिवौकसः ॥ ६०

यदि वा द्विपदां श्रेष्ठं द्रोणं मानयतो गुरुम् ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे च भरतर्षभ ॥ ६१

अत्यन्तसम्मतान् बन्धून् मानयन् मातृबान्धवान् ।
कृतवर्माणमासाद्य प्रेषयैनं यमक्षयम् ॥ ६२

[1]भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् ।
यदि त्वमरविन्दाक्ष न जिघांससि मानयन् ॥ ६३

एतत् ते सुकृतं कर्म नात्र किञ्चन विद्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ६४

इमं पापमतिं दुष्टम् अत्यन्तं पाण्डवान् प्रति ।
कर्णमद्य युधां श्रेष्ठ जहि पार्थ शितैश्शरैः ॥ ६५

दहनं यत् सपुत्राया निशि मातुस्तवानघ ।
द्यूतं यच्चैव युष्माकं प्रावर्तत सुयोधनात् ॥ ६६

तत्र सर्वत्र दुष्टात्मा कर्णः पापकृतां वरः ।
प्रोत्साहयद्दुरात्मानं धार्तराष्ट्रं सुदुर्मतिः ॥ ६७

समितौ नर्दते कर्णस् तमद्य जहि भारत ॥ ६७॥

यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ।
तस्य सर्वस्य दुर्बुद्धिः कर्णो मूलमिहार्जुन ॥ ६८॥

---

1. अ—नास्तीदमर्धम्

कर्णं हि मन्यते त्राणं नित्यमेव सुयोधनः ॥ ६९

ततो मामपि संरब्धो निग्रहीतुं पराक्रमात् ।

स्थिता बुद्धिर्नरेन्द्राणां धार्तराष्ट्रस्य चाभि भो ॥ ७०

कर्णः पार्थान् रणे सर्वान् नाशयिष्यति सायकैः ॥ ७०॥

कर्णमाश्रित्य कौन्तेय धार्तराष्ट्रस्य विग्रहः ।

रुचितो भवता सार्धं जानतोऽपि बलं तव ॥ ७१॥

कर्णो जल्पति वै नित्यम् अहं पार्थान् समागतान् ।

वासुदेवं च दाशार्हं विजेष्यामि महारणे ॥ ७२॥

समितौ वल्गते कर्णस् तमद्य जहि भारत ॥* ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

॥ ७३ ॥ कर्णपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

[ अस्मिन्नध्याये ७३ श्लोकाः ]

---

## ॥ त्र्यशीतितमोऽध्यायः ॥

भगवता कर्णकृतापनयानुस्मारणपूर्वकम् अर्जुनं प्रति कर्णवधचोदनम् ॥

---

श्रीभगवान्—

निर्मनुष्याश्च मातङ्गा विरथाश्च महारथाः ।

[1]प्राद्रवन्ति स्म समरे दिशो भीताऽभिमन्यवे ॥ १

---

* ख—नात्राध्यायसमाप्तिर्दृश्यते 1. अ—नास्तीदमर्धम्

यच्च तद् धार्तराष्ट्राणां षड्भिश्शूरैर्महारथैः ।
पश्यतां समरे पुत्रं सौभद्रमपराजितम् ॥ २

द्रोणद्रौणिकृपान् वीरान् कम्पयानं महेषुभिः ।
विधमन्तमनीकानि प्रमर्दन्तं महारथान् ॥ ३

मनुष्यवाजिमातङ्गान् प्रेषयन्तं यमक्षयम् ।
शरैस्सौभद्रमायान्तं दहन्तमरिवाहिनीम् ॥ ४

विगतासूंश्च तुरगान् पत्तीन् व्यायुधजीवितान् ।
कुर्वाणमृषभस्कन्धं कुरुवृष्णियशस्करम् ॥ ५

[1]तन्मे दहति गात्राणि सखे सत्येन ते शपे ॥ ५॥

यत् तत्रासीत् सुदुष्टात्मा कर्णो विनिहतप्रभः ।
न शक्तो ह्यभिमन्योस्तु कर्णस्स्थातुं रणेऽग्रतः ॥ ६॥

सौभद्रशरनिर्भिन्नो विसंज्ञश्शोणितोक्षितः ।
निश्वसन् क्रोधदीप्ताक्षो विमुखस्सायकार्दितः ॥ ७॥

तस्थौ स विह्वलस्सङ्ख्ये प्रहारजनितच्छविः ॥ ८

अपयानकृतोत्साहो निरुत्साहश्च भारत ।
दुर्योधनं रणे दृष्ट्वा लज्जमानो मुहुर्मुहुः ॥ ९

---

1. अ-क-ख-ङ—यच्च युष्मासु वै पापं धार्तराष्ट्रः प्रयुक्तवान् ।
तस्यायमनृजुः पापः कर्ण एव कृतो मुखम् ॥
[ अधिकः पाठः ]

नापयासीत् तदा पार्थ सोऽभिमन्योर्महारणे ॥ ९॥

दृष्ट्वा द्रोणं वधोपायम् अभिमन्योस्तु पृष्टवान् ।
श्रुत्वा द्रोणवचः क्रूरं ततश्चिच्छेद कार्मुकम् ॥ १०॥

ततश्छिन्नायुधं तेन दृष्ट्वा पञ्च महारथाः ।
स चैव निकृतिप्रज्ञः प्रावृणोच्छरवृष्टिभिः ॥ ११॥

[1]तस्मिन् विनिहते वीरे सर्वेषां दुःखमाविशत् ।
प्राहसत् स तु दुष्टात्मा कर्णो राजा च कौरवः ॥ १२॥

यच्च कर्णोऽब्रवीत् कृष्णां सभायां परुषं वचः ।
प्रमुखे पाण्डवेयानां कुरूणां चैव पश्यताम् ॥ १३॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुगामिनि ॥ १४॥

लेखाभ्रु धृतराष्ट्रस्य दासीभूता निवेशनम् ।
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ॥ १५॥

न पाण्डवाः प्रभवन्ति तव कृष्णे कथञ्चन ।
दासभार्याऽसि पाञ्चालि स्वयं दासी च शोभने ॥ १६॥

अद्य दुर्योधनो ह्येकः पृथिव्यां नृपतिस्स्मृतः ।
सर्वे चास्य महीपाला योगक्षेममुपासते ॥ १७॥

---

1. क-ख-घ-ङ—नास्तीदमर्धम्

पश्येदानीं यथा भद्रे विनष्टाः पाण्डवास्समम् ।
अन्योन्यं समुदीक्षन्ते धार्तराष्ट्रस्य तेजसा ॥ १८॥

व्यक्तं षण्डतिला ह्येते नरके च निमज्जिताः ।
प्रेष्यवच्चापि राजानम् उपस्थास्यन्ति कौरवम् ॥ १९॥

उक्तवान् स च पापात्मा तथा परमदुर्मतिः ।
पापः पापवचः कर्णश् शृण्वतस्ते धनञ्जय ॥ २०॥

अस्य पापस्य तद्वाक्यं सुवर्णविकृताश्शराः ।
शमयन्तु शिलाधौता नाशयन्तोऽस्य जीवितम् ॥ २१॥

अद्य कर्णं रणे ग्रस्तं पश्यन्तु कुरवस्त्वया ।
प्रतपन्तमिवादित्यं स्वर्गद्वारगतं यथा ॥ २२॥

अद्य ते समरे वीर्यं पश्यन्तु कुरुयोधिनः ।
सूतपुत्रे हते पार्थ जानन्तु त्वां महारथम् ॥ २३॥

अद्य कङ्का वला गृध्रा वायसा जम्बुकास्तथा ।
विप्रकर्षन्तु गात्राणि सूतपुत्रस्य भारत ॥ २४॥

अद्यातिरथिराक्षिप्तो निहतश्च त्वया रणे ।
कुरूणां शोकमाधत्तां पाण्डवानां मुदं तथा ॥ २५॥

अद्य त्वां प्रतिनन्दन्तु पाञ्चालाः पाण्डवैस्सह ।
यथा वृत्रवधे वृत्ते देवास्सर्वे शतक्रतुम् ॥ २६॥

अद्य कर्णं रणे हत्वा प्राप्य चैवोत्तमं यशः ।
विशोको विज्वरः पार्थ भव बन्धुपुरस्कृतः ॥ २७॥

नरसिंहवपुः कृत्वा यथा शस्तो महासुरः ।
हिरण्यकशिपुर्दैत्यो विष्णुना प्रभविष्णुना ॥ २८॥

तथा त्वमपि राधेयं घोरं कृत्वा महद्वपुः ।
जहि युद्धे महाबाहो त्रायस्व च भयात् स्वकान् ॥ २९॥

तं च हाहाकृतं दीनं विषण्णं त्वच्छरार्दितम् ।
प्रपतन्तं रथात् तूर्णं पश्यन्तु वसुधाधिपाः ॥ ३०॥

तं च स्वशोणिते मग्नं शयानं पतितं भुवि ।
अपविद्धायुधं कर्णम् अद्य पश्यन्तु पाण्डवाः ॥ ३१॥

तच्चैवाद्य महद्वर्म गाण्डीवप्रेषितैश्शरैः ।
रथोपस्थे विशीर्येत ताराजालमिवाम्बरात् ॥ ३२॥

आशु चाद्य शरास्तस्य सम्पतन्तो महाहवे ।
त्वच्छरैस्सन्निकृत्ताग्रा विशीर्यन्तां महीतले ॥ ३३॥

त्वया चाद्य हते तस्य विक्रमे भरतर्षभ ।
विमुखास्सर्वराजानो भवन्तु गतजीविताः ॥ ३४॥

तथा चातिरथौ याते प्रयान्तु कुरवो दिशः ।
मन्वानास्त्वां रथश्रेष्ठं सर्वलोकेषु धन्विनम् ॥ ३५॥

स चैवाद्य भयात् त्यक्त्वा धार्तराष्ट्रो महाचमूम् ।

दुर्योधनो भयोद्विग्नो द्रवतु स्वपुरं प्रति ॥ ३६॥

तथाऽद्य तं हतं श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
मोहेन निपतेद्भूमौ विसंज्ञो वै महीपतिः ॥ ३७॥

अद्य जानन्तु ते पार्थ विक्रमं सर्वधन्विनः ।
यानवोचत् सभामध्ये परुषान् भारत त्वयि ॥ ३८॥

यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि ।
तान्यद्य भरतश्रेष्ठ नाशयन्तु शरास्तव ॥ ३९॥

शान्तं कुरु परिक्लेशं कृष्णायाश्शत्रुतापन ।
हत्वा शत्रुं रणे श्लाघ्यं गर्जन्तमतिपौरुषम् ॥ ४०॥

अद्य चातिरथिर्विद्धस् तव बाणैस्समन्ततः ।
मन्यतां त्वां नरव्याघ्र प्रवरं सर्वधन्विनान् ॥ ४१॥

गाण्डीवप्रसृतान् घोरान् अद्य गात्रैस्स्पृशञ् शरान् ।
एतु कर्णो रणे पार्थ श्वाविच्छललतो यथा ॥ ४२॥

एते द्रवन्ति पाञ्चाला वध्यमानाश्शितैश्शरैः ।
कर्णेन भरतश्रेष्ठ तान् समुद्धर पाण्डव ॥ ४३॥

हतं कर्णसुतं दृष्ट्वा सूतपुत्रो दुरात्मवान् ।
स्मरतां द्रोणभीष्माभ्यां वचः क्षत्तुश्च पाण्डव ॥ ४४॥

गाण्डीवप्रेषितैर्भल्लैश् शितैश्छिन्नतनुच्छदः ।
न चेत् स्मरति राधेयो वचनं द्रोणभीष्मयोः ॥ ४५॥

ते स्वर्णपुङ्खाश्शत्रुघ्ना नाराचा वैद्युतप्रभाः ।
न चेदातिरथेर्वर्म भित्वा पास्यन्ति शोणितम् ॥ ४६॥

उग्रास्त्वद्बाहुनिर्मुक्ता न चेद्वर्मच्छिदश्शराः ।
अद्य कर्णे महावेगाः प्रहिण्वन्ति यमक्षयम् ॥ ४७॥

हस्तिकक्ष्योऽद्य भल्लेन न चेदुन्मथितस्त्वया ।
प्रकम्पमानः पतति महानातिरथेर्ध्वजः ॥ ४८॥

न चेच्छरशतैश्छिन्नं रथं हेमपरिष्कृतम् ।
हतयूथं परित्यज्य भीतश्शल्यः पलायते ॥ ४९॥

न चेत् कर्णसुतं पार्थ सूतपुत्रस्य पश्यतः ।
प्रतिज्ञापालनार्थाय निहनिष्यसि सायकैः ॥ ५०॥

न चेत् सुयोधनो दृष्ट्वा हतमातिरथिं त्वया ।
निराशो जीवितस्याद्य सानुबन्धो भविष्यति ॥ ५१॥

असौ हि तावकान् पार्थ कर्णो निघ्नति संयुगे ।
शक्रतुल्यबलो वीर्याच्छङ्करप्रतिमोऽथवा ॥ ५२॥

पाञ्चालान् द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ ।
नकुलं सहदेवं च दौर्मुखिं जनमेजयम् ॥ ५३॥

धृष्टद्युम्नतनूजांश्च शतानीकं च भारत ।
सुशर्माणं सात्यकिं च विद्धि कर्णवशं गतान् ॥ ५४॥

अभ्याहतानां कर्णेन पाञ्चालानामसौ रणे ।

श्रूयते निनदो घोरस् त्वद्बन्धूनामनाथवत् ॥ ५५॥

न चैव भीताः पाञ्चालाः कथञ्चित् स्युः पराङ्मुखाः ।
न हि मृत्युं महेष्वासा जानन्ति युधि दुर्जयाः ॥ ५६॥

य एकः पाण्डवीं सेनां शरौघैस्समपीडयत् ।
तमप्यासाद्य समरे भीष्मं नासन् पराङ्मुखाः ॥ ५७॥

ते कथं कर्णमासाद्य विद्रवेयुर्महाबलाः ॥ ५८

यस्त्वेकस्सर्वपाञ्चालान् अहन्यहनि नाशयन् ।
कालवच्चरते वीरः पाञ्चालानां रथव्रजे ॥ ५९

तमप्यासाद्य समरे मित्रार्थे मित्रवत्सल ।
तथा ज्वलन्तमस्त्रौघैश्च वरं सर्वधनुष्मताम् ॥ ६०

निर्दहन्तं च समरे दुर्धर्षं द्रोणमञ्जसा ।
ते नित्यमुद्यता जेतुं युधि शत्रुमरिन्दमाः ॥ ६१

न चेदातिरथेर्भीताः पाञ्चालास्स्युः पराङ्मुखाः ॥ ६१॥

तेषामपि ततश्शूराः पाञ्चालानां तरस्विनाम् ।
प्राणानभ्याददे वीरः पतङ्गानामिवानलः ॥ ६२॥

एते द्रवन्ति पाञ्चाला द्राव्यन्ते योधिभिर्द्रुतम् ।
कर्णेन भरतश्रेष्ठ पश्य पश्य तथा कृतान् ॥ ६३॥

[1]तान् भारत महेष्वासान् अगाधे मज्जतोऽप्लवे ।

---

1. क-ख-घ—अर्धद्वयं नास्ति

कर्णार्णवे प्लवो भूत्वा पाञ्चालांस्त्रातुमर्हसि ॥ ६४॥
तान् समारोहतश्शूरान् मित्रार्थे त्यक्तजीवितान् ।
निस्तारय महाबाहो कर्णास्त्रात् पावकोपमात् ॥ ६५॥
अस्त्रं हि रामात् कर्णेन भार्गवादृषिसत्तमात् ।
यदवाप्तं तदा घोरं तस्य रूपमुदीर्यते ॥ ६६॥
तापनं सर्वभूतानां घोरमस्त्रं भयानकम् ।
यमाश्रित्य महासेनां दहते स्वेन तेजसा ॥ ६७॥
एते चरन्ति सङ्ग्रामे कर्णचापच्युताश्शराः ।
भ्रमरा इव शत्रूणां तापयाना जनान् प्रभो ॥ ६८॥
एते भ्रमन्ति पाञ्चाला उद्भ्रमन्ति च मारिष ।
कर्णास्त्रं समरे प्राप्य दुर्निवार्यं महात्मभिः ॥ ६९॥
एष भीमो दृढक्रोधी वृतः पार्थ समन्ततः ।
सृञ्जयैर्योधयन् कर्णं पीडयन्निशितैश्शरैः ॥ ७०॥
पाञ्चालान् सृञ्जयांश्चैव पाण्डवांश्चैव भारत ।
उपेक्षितो दहेत् कर्णो रोगो देहमिवागतः ॥ ७१॥
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले ।
यस्समासाद्य राधेयं स्वस्तिमानाव्रजेद् गृहान् ॥ ७२॥
तमद्य निशितैर्बाणैर् निहत्य भरतर्षभ ।
यथाप्रतिज्ञं पार्थ त्वं तीर्त्वा कीर्तिमवाप्नुहि ॥ ७३॥

त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान् ।
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्‌ब्रवीमि ते ॥ ७४॥

एतत् कृत्वा महत् कर्म हत्वा कर्णं महारथम् ।
कृतार्थस्सफलः पार्थ सुखी भव नरोत्तम ॥ ७५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ७३ ॥ कर्णपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
[ अस्मिन्नध्याये ७५॥ श्लोकाः ]

## ॥ चतुरशीतितमोऽध्यायः ॥

अर्जुनेन कृष्णाग्रे कर्णवधानन्तरभाव्यर्थानुवर्णनपूर्वकं तद्वधप्रतिज्ञा ॥

सञ्जयः—

स केशवस्य बीभत्सुश् श्रुत्वा भारत भाषितम् ।
विशोकश्च प्रहृष्टश्च क्षणेन समपद्यत ॥ १

ततो ज्यामनुमृज्याशु व्याक्षिपद्गाण्डिवं धनुः ।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ २

अर्जुनः—

त्वया नाथेन गोविन्द ध्रुव एव जयो मम ।
प्रसन्नो यस्य भगवान् भूतभव्यभविष्यकृत् ॥ ३

त्वत्सहायो ह्यहं कृष्ण त्रीन् वै लोकान् समागतान् ।
प्रापयेयं परं लोकं किमु कर्णं महारथम् ॥ ४

पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्दन ।
[1]पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ५

भार्गवास्त्रं च पश्यामि प्रतपन्तं समन्ततः ।
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव महाशनिम् ॥ ६

अयं स खलु सङ्ग्रामो यत्र कृष्ण मया कृतम् ।
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ॥ ७

अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥ ८

अद्य राजा धृतराष्ट्रस् स्वबुद्धिमवमंस्यते ।
दुर्योधनमराज्यार्हं यया राज्ये न्यवेशयत् ॥ ९

गुणवन्तं हि यो हित्वा निर्गुणं कुरुते प्रभुम् ।
स शोचति चिरं कृष्ण क्षिप्रमेवागते क्षये ॥ १०

यथा हि पुरुषः कश्चिच् छित्वा चाम्रवणं महत् ।
पलाशसेचने बुद्धिं कृत्वा शोचति मन्दधीः ॥ ११

दृष्ट्वा पुष्पं फले गृध्नुः फलं दृष्ट्वाऽनुशोचति ।
तथेदं धृतराष्ट्रस्य पुष्पलुब्धस्य मानद ॥ १२

---

1. ख—अर्धचतुष्टयं नास्ति

फलं दृष्ट्वा भृशं दुःखं भविष्यति जनार्दन ॥ १२॥

सूतपुत्रे हते त्वद्य निराशो भविता प्रभुः ॥ १३

अद्य राज्याच्च पुत्राच्च श्रियश्चैव निराशवान् ।
सुखाच्च विपुलात् कृष्ण धृतराष्ट्रो वियोक्ष्यते ॥ १४

अद्य दुर्योधनो राज्याज् जीविताच्च निराशवान् ।
भविष्यति रणे कर्णे मृते सत्यं ब्रवीमि ते ॥ १५

अद्य दृष्ट्वा हतं कर्णं शरैर्विशकलीकृतम् ।
स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः ॥ १६

अद्यासौ सौबलः कृष्ण ग्लहाञ्जानातु वै शरान् ।
दुरोदरं च गाण्डीवं मण्डलं च रथं मम ॥ १७

असौ रणे नरानन्यान् पृथिव्यां चावमन्यते ।
[1]तस्याद्य सूतपुत्रस्य मही पास्यति शोणितम् ॥ १८

आशीविषा इव क्रुद्धाः पिबन्तोऽस्य च शोणितम् ।
गाण्डीवमुक्ता दास्यन्ति कर्णस्य सुगतिं शराः ॥ १९

अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदाऽब्रवीत् ।
सभामध्ये वचः क्रूरं कुत्सयन् पाण्डवान् प्रति ॥ २०

एते षण्ढतिलाः कृष्णे निर्वीर्या हृद्गतक्रमाः ।
[2]पाण्डवेभ्यो भयं तीव्रं दास्यामीति यदब्रवीत् ॥ २१

1. अ—नास्तीदमर्धम्   2. अ—नास्तीदमर्धम्

हन्ताऽहं पाण्डवान् सर्वान् सपुत्रानिति माधव ।
अनृतं तत् करिष्यन्ति मामका निशिताश्शराः ॥ २२

हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि ।
[1]अद्यागः पाण्डुपुत्राणां समाप्तिमुपयास्यति ॥ २३

यस्य वीर्यं समाश्रित्य धार्तराष्ट्रो बृहन्मनाः ।
तमद्य कर्णं हन्तास्मि समरे मधुसूदन ॥ २४

[2]अद्य कर्णे हते कृष्ण धार्तराष्ट्रास्सराजकाः ।
विद्रवन्ति दिशो भीता सिंहं दृष्ट्वा मृगा इव ॥ २५

अद्य दुर्योधनो राजा पृथिवीं नान्ववेक्षते ।
हते कर्णे मया सङ्ख्ये सपुत्रे ससुहृज्जने ॥ २६

अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ।
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम् ॥ २७

[3]ससूतपुत्रस्सामात्यस् ससुहृच्च निराशिषः ।
पित्र्ये राज्ये निराशश्च धार्तराष्ट्रो निराश्रयः ॥ २८

अद्य राजा धर्मपुत्रो हतामित्रो भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं राज्यं च हास्यति ॥ २९

---

1. अ—कोश एकस्मिन्नेवेदमर्धं वर्तते
2. अ—अर्धचतुष्टयं नास्ति
3. अ—सपुत्रपौत्रं सामात्यं सभृत्यं च निराशिषम् ।
अद्य कृष्ण करिष्यामि धृतराष्ट्रं जनेश्वरम् ॥ [पाठान्तरम्]

[1]हते वैकर्तने कर्णे भीष्मे द्रोणे च संयुगे ।
कलरत् तद्बलं कृष्ण प्रविष्टं मोक्ष्यते तु यत् ॥ ३०

अद्यप्रभृति राजानं धर्मशीलं युधिष्ठिरम् ।
अनुमोदन्तु सुहृदो ज्ञातपूर्वाश्च ब्राह्मणाः ॥ ३१

अद्य तं निहतं श्रुत्वा कर्णं वैकर्तनं मया ।
करोतु पटहोन्मिश्रं देवतास्थानपूजनम् ॥ ३२

अद्य कृष्ण हते कर्णे कुरुतां चिरसम्भृतम् ।
याजनं वै महाबाहो देवतानां यथाविधि ॥ ३३

अद्य त्वम्बा च कृष्णा च त्वरमाणे परस्परम् ।
सस्वजेतां हृषीकेश सम्पूर्णेऽस्मिन् मनोरथे ॥ ३४

अद्य त्वां पाण्डवो ज्येष्ठस् तथाऽऽर्यश्च वृकोदरः ।
उदीक्षेतां हते कर्णे कृष्ण सौम्येन चक्षुषा ॥ ३५

अभिवाद्य गुरूनद्य कनिष्ठैश्चाभिवादितः ।
सस्वजानो ह्यहं दोर्भ्यां प्राप्स्यामि विपुलं यशः ॥ ३६

अद्य कर्णे हते कृष्ण प्रशंसन्तोऽर्जुनं सुराः ।
त्रिदिवं यान्तु संहृष्टास् सक्ताश्च तपोधनाः ॥ ३७

अद्य लोकास्त्रयः कृष्ण मम जानन्तु पौरुषम् ।
दृष्ट्वा कर्णं हतं युद्धे द्वैरथे सव्यसाचिना ॥ ३८

---

1. अ—अर्धद्वयं नास्ति

अद्याहमनृणः कृष्ण भविष्यामि धनुष्मताम् ।
रथस्य च शराणां च धनुषो गाण्डिवस्य च ॥ ३९

मोक्ष्याम्यद्य महद्दुःखं त्रयोदशसमार्जितम् ।
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ॥ ४०

अद्य कर्णे हते युद्धे सोमकानां महारथाः ।
कृतकार्या भविष्यन्ति मित्रकार्येप्सवो युधि ॥ ४१

न जानेऽहं कथं प्रीतिश् शैनेयस्याद्य माधव ।
भविष्यति हते कर्णे मयि चापि जयाधिके ॥ ४२

अहं हत्वा रणे कर्णं पुत्रांश्चास्य बलाधिकान् ।
प्रीतिं दास्यामि भीमस्य सात्यकेर्यमयोस्तथा ॥ ४३

धृष्टद्युम्नस्य वीरस्य तथैव च शिखण्डिनः ।
अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे ॥ ४४

धर्मराजस्य वार्ष्णेय संश्रुत्य च वधं मिथः ।
अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ॥ ४५

युध्यन्तं कौरवैस्सार्धं घातयन्तं च सूतजम् ॥ ४५॥

भवत्समक्षं वक्ष्यामि पुनरेवात्मसंस्तवम् ।
इत्यप्यमित्रप्रवरम् अद्याहं हन्मि सूतजम् ॥ ४६॥

धनुर्वेदे मत्समः को नु लोके
पराक्रमे वा मम कोऽस्ति तुल्यः ।
को वाऽप्यन्यो मत्समोऽस्ति क्षमायां
ममानृशंस्ये सदृशोऽस्ति कोऽन्यः ॥ ४७॥

अहं धनुष्मान् ससुरासुरांश्च
सर्वाणि भूतानि च सङ्गतानि ।
स्वबाहुवीर्याद्गमये पराभवं
मत्पौरुषं विद्धि परं परेभ्यः ॥ ४८॥

शरार्चिषा गाण्डिवेनाहमेकस्
सर्वान् कुरून् बाह्लिकांश्चाभिपन्नः ।
हिमात्यये कक्षगतो यथाऽग्निस्
तथा दहेयं सगणान् प्रसह्य ॥ ४९॥

पाणी पृषत्कोल्लिखितौ ममैतौ
धनुश्च सव्ये विततं सबाणम् ।
पादौ च मे सरथौ सध्वजौ च
न मादृशं युद्धगतं जयन्ति ॥ ५०॥

सञ्जयः—

[1]इत्येवमुक्त्वाऽच्युतमेकवीरः
क्षिप्रं रिपोस्स क्षतजोपमाक्षः ।

---

1. क-ख—अयं श्लोको नास्ति

भीमं रणान्मोचयितुं प्रयातः
कर्णस्य कायाच्च शिरो जिहीर्षुः ॥ ५१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

द्वन्द्वयुद्धम् ॥

---

धृतराष्ट्रः—

[1]महाहवे पाण्डवसृञ्जयानां
तथाऽवशिष्टस्य बलस्य मह्यम् ।
धनञ्जये तात रणं प्रयाते
बभूव तद्युद्धमतीव कीदृशम् ॥ १

सञ्जयः—

तेषामनीकानि महाध्वजानि
रणे समृद्धानि समागतानि ।
भेरीनिनादोन्मुखराण्यगर्जन्
मेघा इव प्रावृषि मारुतास्ताः ॥ २

---

1. क-ख-घ-ङ— नास्तीदमर्धद्वयम्

गजाकुलं चाकुलमश्ववेगैर्
वादित्रनेमीतलशब्दवच्च ।
[1]हिरण्यवर्मा युध[2]विद्युतं च
शरासिनाराचवरास्त्रधारम् ॥ ३

[3]तद्भीमवेगं रुधिरौघवाहि
खड्गाकुलं क्षत्रियवीरपाति ।
अनार्तवं क्रूरमनिष्टवर्षं
बभूव सङ्कर्षकरं प्रजानाम् ॥ ४

[4]एकं रथं सम्परिवार्य मृत्युं
नयन्त्यथोऽनेकरथास्समेताः ॥ ४॥

एकस्तथैनं रथिनं नरांश्च
तथा हयांश्चापि गजाननेकान् ।
रथान् ससूतान् सगणान् सहाश्वान्
सर्वानरीन् मृत्युवशं शरौघैः ॥ ५॥

---

1. ख—इदमर्धं नास्ति
2. क-ख-ग-ङ—वर्मचितं महारथारावितशब्दवच्च
3. क—तद्भीमवेगं रुधिराम्बुधारं
समाकुलं क्षत्रियजीववाहि । [पाठान्तरम्]
4. क-ख-ग—अर्धद्वयं नास्ति

निनाय पार्थो बलगर्विताक्षो
यथाऽन्तकस्सर्वहरो महौजाः ॥ ६

कृपश्शिखण्डी च रणे समेतौ
दुर्योधनस्सात्यकिमभ्यगच्छत् ।
श्रुतश्रवा द्रौणिमियाय वीरो
[1]युधामन्युश्चित्रसेनेन सार्धम् ॥ ७

कर्णस्य पुत्रस्तु रथी सुषेणं
समागतं सृञ्जयं चोत्तमौजाः ।
गान्धारराजं सहदेवोऽक्षधूर्तं
महर्षभं सिंह इवाभ्यधावत् ॥ ८

शतानीको नाकुलिः कर्णपुत्रं
युवा युवानं वृषसेनं शरौघैः ।
समर्दयन् कर्णपुत्रश्च धीरः
पाञ्चालेयं शरवर्षैरनेकैः ॥ ९

रथर्षभः कृतवर्माणमार्च्छे-
न्माद्रीपुत्रो नकुलश्चित्रयोधी ।
पाञ्चालानामधिपो याज्ञसेनिस्
सेनापतिः कर्णमार्च्छत् ससेनम् ॥ १०

---
क-ख-ग-ङ—अयं पादो नास्ति

दुश्शासनो भारत भारतं तु
　　व्यात्ताननं क्रूरमिवान्तकाभम् ।
[1]भीमं रणे शस्त्रभृतां वरिष्ठं
　　समासदत् भारत भीमसेनम् ॥ ११

कर्णात्मजं तत्र जघान शूरस्
　　तनुच्छिदा सोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ
　　निनादयद्गां निनदेन खं च ॥ १२

[2]सुषेणशीर्षं पतितं पृथिव्यां
　　विलोक्य कर्णोऽथ तदाऽऽर्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च
　　बाणैस्सुधारैर्निशितैर्न्यकृन्तत् ॥ १३

स तूत्तमौजा निशितैः पृषत्कैर्
　　दिव्येन खड्गेन च भास्वरेण ।
पार्ष्णिग्रहांश्चैव कृपस्य हत्वा
　　शिखण्डिवाहांस्त्वरितोऽध्यरोहत् ॥ १४

[3]पाञ्चालराजस्य सुतस्तरस्वी
　　चक्रे शिखण्डी विरथं कृपं वै ।

---

1. क-ख-ग-ङ—अयं पादो नास्ति　　2. क-ख-ग—सुतस्य
3. क-ख-ग—नास्त्यर्धमिदम्

कृपं तु दृष्ट्वा विरथं रथस्थो
नैच्छच्छरैस्ताडयितुं शिखण्डी ॥ १५

तं द्रौणिरावार्य कृपं रथस्थम्
समुज्जह्रे पङ्कगतां यथा गाम् ॥ १५॥

हिरण्यवर्मा विकिरञ् शरौघांस्
[1]तवात्मजानामनिलात्मजोऽथ ।
अधर्षयत् सैन्यमतीव भीमश्
शुचौ स्थितो मध्यगतो यथाऽर्कः ॥ १६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
[ अस्मिन्नध्याये १६॥ श्लोकाः ]

---

1. क-ख-ब समाकिरञ्शीन् पवनात्मजोऽथ

## ॥ षडशीतितमोऽध्यायः ॥

भीमसेनविशोकयोः संवादः ॥

सञ्जयः—

अथ त्विदानीं तुमुले विमर्दे
द्विषद्भिरेको बहुभिर्निरुद्धः ।
महाहवे सारथिमित्युवाच
भीमश्चमूं वारयन् धार्तराष्ट्रीम् ॥ १

भीमसेनः—

त्वं सारथे याहि जवेन वाहिनीम्
नयाम्येतां धार्तराष्ट्रीं यमाय ॥ १॥

सञ्जयः—

स चोदितो भीमसेनेन राजंस्
तवात्मजानां हि बलस्य हेतोः ।
प्रायात् ततस्सारथिरुग्रवेगो
यतो यतो भीमसेनस्त्वगच्छत् ॥ २॥

ततः परे नागरथाश्वपत्तिभिः
प्रत्युद्ययुः कुरवो भीमसेनम् ।
वृकोदरं तूर्णमुदारवेगास्
समन्ततो बाणगणैरविध्यन् ॥ ३॥

ततश्शरानापततो महात्मा
शरैर्विचिच्छेद सुवर्णपुङ्खैः ।
तेषां निपेतुश्शतधा शरौघा
द्विधा त्रिधा भीमशरैर्निकृत्ताः ॥ ४॥

ततो गजस्यन्दनवाजिनृणां
भीमाहतानां पततामाजिमध्ये ।
घोरो निनादस्समभून्नरेन्द्र
वज्राहतानामिव पर्वतानाम् ॥ ५॥

ते वध्यमानाश्च नरेन्द्रमुख्या
निर्भिद्यमानाश्च हि भीमबाणैः ।
भीमं समन्तात् समरेऽभिजग्मुर्
वृक्षं शकुन्ता इव पुष्पहेतोः ॥ ६॥

ततो भीमस्तव सैन्यप्रवाहे
प्रादुश्चक्रे वेगमसह्यवेगः ।
यथाऽन्तकाले प्रदिधक्षुरीशो
भूतान्तकृत् सर्वभूतक्षयाय ॥ ७॥

वेगं हि तस्याप्रतिमप्रभावम्
न शेकुरावारयितुं त्वदीयाः ।

व्यात्ताननस्याददतो यथैव
कालस्य काले विजिघृक्षतः प्रजाः ॥ ८॥

ततो बलं भारत भारतानां
तद्वध्यमानं समरे महात्मना ।
भीतं दिशोऽकीर्यत भीमनुन्नं
महानिलेनाभ्रगणा यथैव ॥ ९॥

तद्विप्रकीर्णं त्वथ भारतं बलं
पुनश्च भीमं परिवारयद्रणे ।
भीमोऽब्रवीत् सारथिमत्र याहि
हतेष्वेतेषु भविताम्यशोकः ॥ १०॥

त्वर त्वर ह्यद्य विशोक शीघ्रम्
एतान् ध्वजाग्रांश्च रथांश्च पश्य ।
सूतात्र जानीहि परान् स्वकान् वा
रथान् ध्वजानापततस्समेतान् ॥ ११॥

संयुध्यतो नाभिजानामि किञ्चि-
न्महत् सैन्यं वारयिष्येऽप्रमत्तः ॥ १२

अरीन् विशोकाभिसमीक्ष्य सर्वतो
महांश्च मन्युः पुनरेति मां भृशम् ।

राजाऽऽतुरो नागमद्वै किरीटी
　　बहूनि दुःखान्यनुचिन्तयामि ॥　　१३

एतद्दुःखं सारथे धर्मराजो
　　यन्मां हित्वा गतवाञ् शत्रुमध्ये ।
नैनं जीवन् नाभिजानाम्यजीवन्
　　बीभत्सुं वा तन्ममाद्यातिदुःखम् ॥　　१४

सोऽहं बलं ह्येतदुदग्रयोधं
　　विनाशयिष्ये परमप्रतीतः ।
एतान् निहत्याजिमध्ये समेतान्
　　प्रीतो भविष्यामि सह त्वयाऽद्य ॥　　१५

अवेक्षस्वेषुधी मे विशोक
　　कियन्तो वा इषवो मेऽवशिष्टाः ।
का वा जातिः किं प्रमाणं च तेषां
　　ज्ञात्वा व्यक्तं तन्ममाचक्ष्व सूत ॥　　१६

कति वा सहस्राणि कति वा शतानि
　　ह्याचक्ष्व मे सारथे क्षिप्रमेव ॥　　१६॥

विशोकः—

सर्वं विदित्वैवमहं वदामि
　　तवार्थसिद्धिप्रदमद्य वीर ॥　　१७

कैकेयकाम्भोजसुराष्ट्रबाह्लिका
म्लेच्छाश्च सुह्माः परतङ्कणाश्च ।
मद्राश्च वङ्गा मगधाः कुणिन्दा
आनर्तकावर्तकाः पार्वतीयाः ॥ १८

सर्वे गृहीतप्रवरायुधास्त्वां
सङ्ख्ये समावेष्ट्य ततो विनेदुः ॥ १८॥

रथे तवास्मिन् निशितास्सुपीतास्
ततो भल्ला द्वादश वै सहस्रशः ।
षण्मार्गणानां दश च क्षुराणां
नाराचानां द्वे सहस्रे च पार्थ ॥ १९॥

वत्सदन्तानां दश कर्णिनां च
अर्धचन्द्राणां द्वादश षट् छतं च ।
विपाठानां प्रवराणां च सप्त
शिलीमुखानां दश च त्रिंशतं च ॥ २०॥

अयोमुखानां क्षुद्रकाणां च त्रिंश-
दस्त्रायुतं पाण्डव तेऽवशिष्टम् ॥ २१

[1]एतद्वहेच्छकटं षड्गवंयद्
एतद्विद्वन् मुञ्च सहस्रशोऽपि ।

1. अ—नास्तीदमर्धम्

शत्रूञ्जयस्वाशु सहस्व वीर
　　गदाऽस्ति बाहुद्रविणं च तेऽस्ति ॥　　२२

[1]प्रासा खड्गाश्शक्तयस्तोमराश्च
　　माभैर्भीम प्राक्षयश्चायुधानाम् ॥　　२२॥

भीमः—

अद्यैव नूनं कथयन्तु सिद्धां
　　मम प्रतिज्ञां सर्वलोके विशोक ।
न मोक्ष्यते वा समरं भीमसेन
　　एकश्शत्रून् समरे वाऽप्यजैषीत् ॥　　२३॥

आशंसितानामिदमेकमस्तु
　　तन्मे देवास्सकलं साधयन्तु ॥　　२४

सूताद्य मद्बाहुमुक्तैस्समन्तात्
　　सम्भिन्दद्भिः पार्थिवानाशुवेगैः ।
छन्नं बाणैराहतं घोररूपं
　　नष्टादित्यं मृत्युलोकप्रकारम् ॥　　२५

[2]अद्यैतद्वै विदितं पार्थिवानां
　　भविष्यति ह्याकुमारं विशोक ।

---

1. ख-घ-ङ—नास्तीदमर्धम्

2. क-ख-घ-ङ—अद्यैव मत्कर्म विदितं भविष्य-
　　त्याकुमारं सर्वलोके विशोक ।　　[ पाठान्तरम् ]

निमग्नो वा समरे भीमसेन
एकः कुरून् वा समरे व्यजैषीत् ॥ २६

सर्वे सङ्ख्ये कुरवो निष्पतन्तु
मां वा लोकाः कीर्तयन्त्वाकुमारम् ।
सर्वानेकस्तानहं पातयिष्ये
ते वा सर्वे भीमसेनं पातयन्तु ॥ २७

आशास्तारः कर्म वाऽप्युत्तमं मे
तन्मे देवास्सफलं साधयन्तु ।
आयातीह केशवसारथी रथी
यथेन्द्रो यज्ञे सहसैवोपहूतः ॥ २८

पश्यस्व पश्यस्व विशोक मे त्वं
बलं परेषामभिघातभिन्नम् ।
नानास्वरान् पश्य विमुच्य सर्वे
तथा द्रवन्ते बलिनो धार्तराष्ट्राः ॥ २९

प्रेक्षस्वैनां भारतीं।दीर्यमाणां
नैते रथा अकुतश्चिद्द्रवन्ति ।
धनञ्जयो नूनमायाति सूत
तस्मात् सेना दीर्यते भारतीयम् ॥ ३०

पश्य ध्वजांश्च द्रवतां विशोक
नागान् हयान् पत्तिसङ्घांश्च सङ्ख्ये ।
[1]रथान् विशीर्णाञ् शरशक्तिताडितान्
व्यश्वान् कृतान् रथिनश्चापि सूत ॥ ३०॥

आपूर्यते कौरवैश्चाप्यभीक्ष्णं
[2]सेना ह्यसौ सुभृशं हन्यमाना ।
धनञ्जयस्याशनितुल्यवेगैर्
ग्रस्ता शरैर्मारुततुल्यवेगैः ॥ ३१॥

एते द्रवन्ति स्म रथाश्वनागाः
पदातिसङ्घानवमर्दयन्तः ।
सम्मुह्यमानाः कौरवास्सर्व एव
[3]विष्णोर्भयार्ता इव दैत्यसङ्घाः ॥ ३२॥

हाहाकृताश्चैव रणे विशोक
मुञ्चन्ति नादान् विपुलान् गजेन्द्राः[4] ॥ ३३

1. क-ख-घ-ङ—पश्यस्व भग्नांश्च रथान् विशोक [ पाठान्तरम् ]
2. क-ख—अयं पादो नास्ति
3. क-ख-घ-ङ—द्रवन्ति दावादिव नागसङ्घाः [ पाठान्तरम् ]
4. क-घ-ङ—सर्वैरेतैः पाण्डवास्ते समृद्धैः [ अधिकः पाठः ]

विशोकः—

[1]न भीम रावं त्वमिहाश्रृणोषि
विष्फूर्जितं गाण्डिवस्यातिघोरम् ।
क्रुद्धेन पार्थेन विकृष्यता ज्यां
कच्चिन्नागौ तव कर्णौ प्रविष्टौ ॥ ३४

[2]सर्वे कामाः पाण्डव ते समृद्धाः
[3]कपिर्ह्यसौ दृश्यते हस्त्यनीके ।

---

1. क-ख—अर्धद्वयं नास्ति

2. क-ख-घ—अर्धं पादो नास्ति

3. इयं क-ख-कोशानुपूर्वी—

क-ख—असौ कपिर्दृश्यते हस्त्यनीके
नीलाद्घनादुत्पतन्तीव विद्युत् ।
कपिर्ह्येषो वीक्षते वै समन्ताद्
ध्वजाग्रमारुह्य धनञ्जयस्य ॥

दिवाकराभो मणिरेष दिव्यः
किरीटसंस्थो ज्वलते पश्य भीम ।
पश्यैनं वै देवदत्तं सुघोषं
पार्श्वे स्थितं मे पार्थ धनञ्जयस्य ॥

दिव्यं शङ्खं पाञ्चजन्यं च पश्य
पार्श्वे स्थितं विमलाभ्रप्रकाशम् ।
अभीशुहस्तस्य जनार्दनस्य
विगाहमानस्य चमूं परेषाम् ॥

चक्रं च पश्य ज्वलनप्रकाशं
रौद्रं यशोवर्धनं केशवस्य ।

नीलाद्घनादुत्पतन्तीव विद्युत्
[1]पश्याग्रं वै धनुषो गाण्डिवस्य ॥ ३५

कपिह्यसौ वीक्षते सर्वतो वै
ध्वजाग्रमारुह्य धनञ्जयस्य ।
दिवाकराभो मणिरेष दिव्यो
विभ्राजते चैव किरीटसंस्थः ॥ ३६

[2]पार्श्वे भीमं पाण्डुवर्णप्रकाशं
पश्यैनं वै देवदत्तं सुघोषम् [3]।

---

सदाऽर्चितं यदुभिरुपेत्य वीरैस्
सविद्युतश्चैव घनस्य शब्दम् ॥
एतदनन्तरं 'विष्फार्यं' 'ददानि ते'
इति द्वौ श्लोकौ वर्तेते, ततोऽध्यायसमाप्तिः ॥

1. क-ख-ङ—कोशेषु "पश्याग्रं वै" इति पादौ "दिवाकराभ"
इत्यतः प्राग्वर्तेते ॥

2. क-ख—अयं पादो नास्ति

3. अ—महास्वनं भीम विराजमानं
पश्यस्व सङ्ख्ये द्विषतां निहन्तुः ॥
अभीशुहस्तस्य जनार्दन [अधिकः पाठः]
ख-ङ—पार्श्वे स्थितं पार्थं धनञ्जयस्य
पार्श्वे स्थितं विमलाभ्रप्रकाशम्
दिव्यं शङ्खं पाञ्चजन्यं च पश्य ।
अभीशुहस्तस्य जनार्दनस्य
विगाहमानस्य चमूं परेषाम् ॥ [अधिकः पाठः]

[1]चक्रं यशोवर्धनमेतदद्य
सदाऽर्चितं यदुभिः [2]पश्य वीर[3] ॥ ३७

[4]कृष्णस्यैतं पाञ्चजन्यं च शङ्खं
विराजमानं द्विजराजवर्णम् ।
वार्ष्णेयकस्योरसि कौस्तुभं च
जाज्वल्यमानं विजयं रथं च ॥ ३८

ध्रुवं रथाग्र्यस्समुपैति पार्थो
वित्रसायन् सैन्यमिदं परेषाम् ।
सिताभ्रवर्णैरनिलाभवेगैर्
हयैर्महार्हैं रथिनां वरिष्ठः ॥ ३९

रथान् हयान् पत्तिगणांश्च सायकैर्
विदारितान् पश्य पतन्त्यमी रथाः ।

---

1. घ-ङ—चक्रं च पश्य ज्वलनप्रकाशं
रौद्रं यशोवर्धनं केशवस्य । [ पाठान्तरम् ]

2. घ-ङ—रुपेत्य वीरैः

3. ङ—सविद्युतश्चैव घनस्य शब्दम् [ अधिकः पाठः ]

4. "कृष्णस्यैत" मित्यादि 38—42 एते पञ्च श्लोकाः
ङ—कोशे नोपलभ्यन्ते ॥

तवानुजेनामरतुल्यवर्चसा
महावनानीव सुपर्णवायुना ॥ ४०

शतान् शतान् पश्य रथान् निपातितान्
सवाजिसूतान् समरे किरीटिना ।
महेषुभिस्सप्त शतानि दन्तिनां
पत्तींश्च सादींश्च हताननेकशः ॥ ४१

अयं समायाति तवान्तिकं बली
निघ्नन् कुरूंश्चित्र इव ग्रहोऽर्जुनः ।
समृद्धकामोऽसि हतास्तवाहिता
बलं तवायुश्च चिराच्च वर्धताम् ॥ ४२

विष्फार्यतो धनुषो गाण्डिवस्य
धनञ्जयेनाभिपन्नस्य काले ।
[1]शब्दो घोरश्श्रूयते तस्य नास्मिन्
कश्चिच्छ्रोता ह्यो बधिरोऽसि पार्थ ॥ ४३

भीमः—

ददानि ते ग्रामवरांश्चतुर्दश
प्रियाख्यानात् सारथे सुप्रसन्नः ।

---

1. ख-घ—अयं पादो नास्ति

दासीशतं चाश्वतरीश्च विंशतिं
यो मेऽर्जुनं वेदयसे विशोक ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ ७३ ॥ कर्णपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
[अस्मिन्नध्याये ४४ श्लोकाः]

## ॥ सप्ताशीतितमोऽध्यायः ॥

अर्जुनपराक्रमः ॥ १ ॥ भीमपराक्रमः ॥ २ ॥

सञ्जयः—

श्रुत्वा तु रथनिर्घोषं सिंहनादं च संयुगे ।
अर्जुनः प्राह गोविन्दं शीघ्रं चोदय वाजिनः ॥ १

अर्जुनस्य वचश्श्रुत्वा गोविन्दोऽर्जुनमब्रवीत् ॥ १॥

श्रीभगवान्—

एष गच्छामि तु क्षिप्रं यत्र भीमो व्यवस्थितः ॥ २

सञ्जयः—

तं यान्तमश्वा हिमशङ्खशुक्लास्
सुवर्ण[1]मुक्तामणिजालनद्धाः ।

1. क-ख-घ-ङ—जालावनतावनद्धाः

जम्भं जिघांसुं प्रगृहीतवज्रम्
[1]इन्द्रं यथा तत्र तथाऽवहंस्ते ॥ ३

[2]ततस्तमायान्तमभिप्रवीक्ष्य
राज्ञा सुशूरेण सुयोधनेन ।
सञ्चोदितास्सिन्धुकालिङ्गवङ्गाः
पुण्ड्राङ्गसौवीरसुराष्ट्रभूपाः ॥ ४

रथाश्वमातङ्गपदातिसङ्घा
बाणस्वनैर्नेमिखुरस्वनैश्च ।
संनादयन्तो वसुधां दिशश्च
क्रुद्धास्सर्वे ह्यर्जुनमभ्युदीयुः ॥ ५

तेषां च पार्थस्य [3]समागमोऽभूद्
[4]देहासुपापक्षपणं सुयुद्धम् ।
त्रैलोक्यहेतोरसुरैर्यथाऽऽसीद्
एकस्य विष्णोर्जयतां वरस्य ॥ ६

तैरस्तमुच्चावचमायुधं तद्
एकः प्रचिच्छेद किरीटमाली ॥ ६॥
क्षुरार्धचन्द्रैर्निशितैश्च भल्लैश्
शिरांसि तेषां बहुधा च बाहून् ।

---

1. ख-घ-ङ—हया
2. अ-ख—नास्त्यर्धद्वयम्
3. क-ख-ङ—च तत्र युद्धे
4. क-ख-घ-ङ—अयं पादो नास्ति

छत्राणि वालव्यजनानि केतून्
अश्वान् रथान् पत्तिगणान् द्विपांश्च ॥ ७॥

ते पेतुरुर्व्यां बहुधा विकृत्ता
वातप्रभग्नानि यथा वनानि ॥ ८

सुवर्णजाला[1]वनता महाद्विपास्
सवैजयन्तीध्वजयोधकल्पिताः ।
[2]सुवर्णपुङ्खैरिषुभिस्समाचिताश्
चकाशिरे प्रज्वलिता इवाचलाः[3] ॥ ९

विदार्य नागाश्वरथान् धनञ्जयश्
शरोत्तमैर्वासववज्रसन्निभैः ।
द्रुतं ययौ कर्णजिघांसया [4]बली
यथा मरुत्वान् बलिनं बलं पुरा[5] ॥ १०

तथा स पुरुषव्याघ्रस् तव सैन्यमरिन्दमः ।
प्रविवेश महाबाहुर् मकरस्सागरं यथा ॥ ११

---

1. क-ख-घ-ङ—घनतै मेहाद्रैः
2. क-ख-घ-ङ—स्वनन्ति नागा ध्वजकल्पिताग्रा [ अधिकः पाठः ]
3. क-घ-ङ— दावाग्निदीप्तैरिव वंशदण्डैः [ अधिकः पाठः ]
4. क-ख-घ-ङ—तदा प्रवृद्धकोपो बलगर्विताक्षः [ पाठान्तरम् ]
5. ख—गाण्डीवधन्वा द्विषतां निहन्ता प्रवृद्धकोपो बलगर्विताक्षः [ अस्यार्धस्यैव—पाठान्तरम् ]

तं दृष्ट्वा तावका राजन् रथपत्तिसमन्विताः ।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ १२

[1]तत्राभिद्रवतां पार्थम् आरावस्सुमहानभूत् ।
क्षुब्धस्य सागरस्येव यथा स्यात् सलिलस्वनः ॥ १३

ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
[2]तेषां चतुश्शतं राजन् यतमाना महारथाः ॥ १४
अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ १४॥

तेषामापततां तत्र शरवर्षाणि मुञ्चताम् ।
अर्जुनो व्यधमत् सैन्यं महावातो घनानिव ॥ १५॥

तेऽर्जुनं सहिता भूत्वा शरवर्षैः प्रहारिणः ।
अपिधाय महेष्वासा विव्यधुर्निशितैश्शरैः ॥ १६॥

[3]शक्तिभिस्तोमरैः प्रासैः कर्कणैः कूटमुद्गरैः ।
शूलैस्त्रिशूलैः परिघैर् भिण्डीपालैः परश्वथैः ॥ १७॥

करवालैर्हेमदण्डैर् यष्टिभिर्मुसलैर्हलैः ।
प्रहृष्टाश्चक्रिरे पार्थे समन्ताद्गूढमायुधैः ॥ १८॥

शिबिरादेशमायान्तम् अर्जुनं सहकेशवम् ॥ १९

ततोऽर्जुनस्सहस्राणि नरवारणवाजिनाम् ।

---

1. क-ख-घ-ङ—तत्र नादो महानासीद्द्रवतामेकमर्जुनम् । [ पाठान्तरम् ]
2. अ-ख-घ—नास्तीदमर्धम्
3. क-ख-घ-ङ—अर्धपञ्चकं नास्ति

प्रैषयच्छरसङ्घातैर् यमस्य सदनं प्रति ॥ २०

[1]ते वध्यमानास्समरे [2]पार्थचापच्युतैश्शरैः ।
तत्र तत्रै व लीयन्ते भये जाते महारथाः ॥ २१

तेषां चतुश्शतान् वीरान् यतमानान् महारथान् ।
अर्जुनो निशितैर्बाणैर् अनयद्यमसादनम् ॥ २२

ते वध्यमानास्समरे नानालिङ्गैश्शरोत्तमैः ।
अर्जुनं समभित्यज्य [3]दुद्रुवुर्वै दिशो भयात् ॥ २३

तेषां शब्दो महानासीद् द्रवतां वाहिनीमुखे ।
महौघस्येव भद्रं ते गिरिमासाद्य दीर्यतः ॥ २४

तां तु सेनां भृशं त्रस्तां द्रावयित्वाऽर्जुनश्शरैः ।
प्रायादभिमुखः पार्थः कर्णानीकाय भारत ॥ २५

तस्याभिद्रवतः कर्णं रथघोषो महानभूत् ।
गरुडस्येव पततः पन्नगार्थं महाम्बरे ॥ २६

तं तु शब्दं तदा श्रुत्वा भीमसेनो महाबलः ।
बभूव परमप्रीतः [4]पार्थदर्शनलालसः ॥ २७

श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान् ।

---

1. ब—अर्धचतुष्टयं नास्ति 2. ख—इतः अर्धचतुष्टयं नास्ति

3. क-ख-ब—समन्ताद्विप्रदुद्रुवुः

4. क-ख-ब-ङ—तव सेनाप्रधर्षणम्

[1]त्यक्त्वा प्राणभयं राजन् सेनां तव ममर्द च ॥ २८

स वायुवीर्यप्रतिमो वायुवेगसमो जवे ।
वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् ॥ २९

तेनार्द्यमाना राजेन्द्र सेना तव विशां पते ।
व्यशीर्यत महाराज नौरिवासाद्य पर्वतम् ॥ ३०

[2]तां तु सेनां तदा भीमो दर्शयन् पाणिलाघवम् ।
शरैरवचकर्तोग्रैः प्रेषयिष्यन् यमक्षयम् ॥ ३१

तत्र भारत भीमस्य बलं दृष्ट्वाऽतिमानुषम् ।
व्यत्रस्यन्त रणे योधाः कालस्येव जिघृक्षतः ॥ ३२

तथाऽर्दितान् भीमबलान् भीमसेनेन भारत ।
दृष्ट्वा दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ ३३

सैनिकान् समहेष्वासान् योधांश्च भरतर्षभ ।
समादिशद्रणे सर्वान् घ्नत भीममिति स्म ह ॥ ३४

---

1. ख—अर्धेत्रयं नास्ति

2. अ—रथान् रथेनाभ्यहनत्तुरंगांस्तुरगैस्तथा ।
गजान् गजवरैर्वीरान् नरैरेवानयद्वधम् ॥
गजचिह्नं समुत्क्षिप्य गजं भीमोऽभ्यपातयत् ।
महौषधिसमायुक्तं हनूमानिव पर्वतम् ॥
कस्य चिद्दन्तमुत्पाट्य दन्तेनैवाहनद्गजम् ।
यथैरावतमासाद्य कुम्भकर्णः पुरा रणे ॥ [अधिकः पाठः]

अस्मिन् हते हतं सर्वं मन्ये सैन्यमशेषतः ॥ ३४॥

प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः ।
भीमं प्रच्छादयामासुस् समन्तान्निशितैश्शरैः ॥ ३५॥

[1]गजाश्च बहुला राजन् नराश्च जयगृद्धिनः ।
रथा हयाश्च राजेन्द्र परिवव्रुर्वृकोदरम् ॥ ३६॥

स तैः परिवृतश्शूरैश् शूरो राजन् समन्ततः ।
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः ॥ ३७॥

[2]परिवेषी यथा सोमः परिपूर्णो विराजते ।
स चचार महासङ्ख्ये दर्शनीयो नरोत्तमः ॥ ३८॥

निर्विशेषं महाराज विजयेनैव संयुगे ॥ ३९

तत्र ते पार्थिवास्सर्वे शरवृष्टिमवासृजन् ।
क्रोधरक्तेक्षणाः क्रूरा हन्तुकामा वृकोदरम् ॥ ४०

तां विदार्य महासेनां शरैस्सन्नतपर्वभिः ।
निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

॥ ७३ ॥ कर्णपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

1. ख—अर्धपञ्चकं नास्ति
2. ध-ङ—द्वयमर्धं नास्ति    क—पादोऽयं नास्ति

## ॥ अष्टाशीतितमोऽध्यायः ॥

भीमपराक्रमवर्णनम् ॥ १ ॥ भीमेन दुर्योधनचोदितस्य शकुनेः पराजयः ॥ २ ॥

सञ्जयः—

हत्वा दशसहस्राणि गजानामनिवर्तिनाम् ।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥ १

पञ्च चाश्वसहस्राणि रथानां शतमेव च ।
ततः प्रास्यन्दयद्भीमो नदीं शोणितकर्दमाम् ॥ २

शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
नरमीनामश्वनक्रां केशशैवलशाद्वलाम् ॥ ३

सञ्छिन्नबाहुभुजगां नानारत्नविभूषिताम् ।
[1]ऊरुग्राहां मज्जपङ्कां शीर्षोपलनिषेविताम् ॥ ४

धनुःकाशशराघाठां गदापरिघफेनिलाम् ।
[2]हंसच्छत्रध्वजोपेताम् उष्णीषवरफेनिलाम् ॥ ५

हारवर्षकरां चैव भूमिरेणूर्मिमालिनीम् ।
योधग्राहवतीं सङ्ख्ये वहन्तीं यमसादनम् ॥ ६

क्षणेन पुरुषव्याघ्रः प्रावर्तयत तां नदीम् ॥ ६॥

---

1. ख-घ-ङ—नास्तीदमर्धम् 2. ख—इदमर्धं नास्ति

यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ।
[1]तथा प्रावर्तयद्भीमो वीरयोधापहारिणीम् ॥ ७॥

यतो यतः पाण्डवेयः प्रातिष्ठद् रथसत्तमः ।
ततस्ततः प्रापतन् वै योधाश्शतसहस्रशः ॥ ८॥

एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे ।
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ॥ ९॥

दुर्योधनः—

जहि मातुल सङ्ग्रामे भीमसेनं महाबलम् ॥ १०

सञ्जयः—

[2]भागिनेयवचश्श्रुत्वा शकुनिश्शठकृत्तमः ।
[3]ततः प्रायान्महाराज सुबलस्यात्मजो बली ॥ ११
रणाय महते युक्तो भ्रातृभिः परिवारितः ॥ ११॥

स समासाद्य सङ्ग्रामे भीमं भीमपराक्रमम् ।
वारयामास बलवान् वेलेव मकरालयम् ॥ १२॥

नात्यवर्तत भीमोऽपि वार्यमाणश्शितैश्शरैः ॥ १३

भीमस्य शकुनिस्तत्र सव्यपार्श्वे स्तनान्तरे ।
प्रेषयामास नाराचान् रुक्मपुङ्खान् शिलाशितान् ॥ १४

---

1. क-ख-ग-ङ—अर्धद्वयं नास्ति
2. अ—नास्तीदमर्धम्
3. क-ख-ग-ङ—अर्धचतुष्टयं नास्ति

वर्म भित्त्वा तु ते घोराः पाण्डवस्य महात्मनः ।
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः ॥ १५

सोऽतिविद्धो रणे भीमश् शरं रुक्मविभूषितम् ।
प्रेषयामास सहसा सौबलं प्रति भारत ॥ १६

तमायान्तं शरं घोरं शकुनिश्शत्रुतापनः ।
चिच्छेद सप्तधा राजन् कृतहस्तो महाबलः ॥ १७

तस्मिन् निपतिते भूमौ भीमः क्रुद्धो विशां पते ।
धनुश्छिच्छेद भल्लेन सौबलस्य हसन्निव ॥ १८

तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ॥ १९

तैस्तस्य तु महाराज भल्लैस्सन्नतपर्वभिः ।
चतुर्भिस्सारथिं विद्ध्वा भीमं पञ्चभिरेव च ॥ २०
धनुरेकेन चिच्छेद ध्वजं द्वाभ्यां विशां पते ॥ २०॥
चतुर्भिश्चतुरो वाहान् विव्याध सुबलात्मजः ॥ २१
[1]ततो हृष्टो महाराज तव पुत्रो महीपतिः ॥ २१॥

दुर्योधनः—

साधु साधु महाबाहो जहि भीमं शितैश्शरैः ।
अयमेव सुदुष्टात्मा सर्वथाऽस्मान् प्रबाधते ॥ २२॥

---

1. क-ख-ग-ङ—अर्धपञ्चकं नास्ति

तत एनं महाबाहो विनिहत्य सुखी भव ॥ २३

सञ्जयः—

ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप समरे [1]रुक्मदण्डामयस्मयीम् ॥ २४

सा भीमभुजनिर्मुक्ता [2]नागजिह्वेव चञ्चला ।
निपपात रथे तूर्णं सौबस्य महात्मनः ॥ २५

[3]ततस्तामेव सङ्गृह्य शक्तिं कनकभूषणाम् ।
भीमसेनाय चिक्षेप क्रुद्धरूपो विशां पते ॥ २६

सा निर्भिद्य भुजं सव्यं पाण्डवस्य महौजसः ।
निपपात तथा भूमौ यथा विद्युन्नभश्च्युता ॥ २७

अथोत्क्रुष्टं महाराज धार्तराष्ट्रैस्समन्ततः ।
न तु तं ममृषे भीमस् सिंहनादं तरस्विनाम् ॥ २८

स सङ्गृह्य धनुस्सज्यं त्वरमाणो महारथः ।
मुहूर्तादिव राजेन्द्र च्छादयामास सायकैः ॥ २९

सौबलस्य बलं सङ्ख्ये त्यक्त्वा नादं महाबलः ॥ २९॥

तस्याश्वांश्चतुरो हत्वा सूतं चैव विशां पते ।
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ३०॥

---

1. क-ख-ङ—भीमां कोपसमन्वितः घ—भीमः क्रोधसमन्वितः
2. क-ख-ङ—भीमवेगा दुरासदा घ—यमजिह्वेव
3. क—अर्धत्रयं नास्ति

हताश्वं रथमुत्सृज्य त्वरमाणो महारथः ।
तस्थौ विष्फारयंश्चापं क्रोधरक्तेक्षणश्श्वसन् ॥ ३१
शरैश्च बहुधा राजन् भीममाच्छेत् परन्तपः ॥ ३१॥
प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ।
धनुश्चिच्छेद सङ्क्रुद्धो विव्याध निशितैश्शरैः ॥ ३२॥
[1] स तु विद्धो बलवता शत्रुणा शत्रुपापनः ।
निपपात तदा भूमौ किञ्चित्प्राणो नराधिपः ॥ ३३॥
ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशां पते ।
अपोवाह रथेनाजौ भीमसेनशरातुरम् ॥ ३४॥
शकुनिं विह्वलं दृष्ट्वा धार्तराष्ट्राः पराङ्मुखाः ।
प्रदुद्रुवुर्दिशो भीता भीमसेनभयात् प्रभो ॥ ३५॥
सौबले निर्जिते राजन् भीमसेनेन धन्विना ।
[2]भयेन महताऽऽविष्टः पुत्रो दुर्योधनस्तव ॥ ३६॥
अपायाज्जवनैरश्वैस् सापेक्षो मातुलं प्रति ॥ ३७
पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत ।
उत्सृज्योत्सृज्य गच्छन्ति द्वैरथानि समन्ततः ॥ ३८
तान् दृष्ट्वा विद्रुतान् सर्वान् धार्तराष्ट्रान् पराङ्मुखान् ।

---

1. क—अर्धद्वयं नास्ति
2. क-ख-घ—पुत्रो दुर्योधनस्तूर्णं दृष्ट्वा तं निर्जितं रणे । [पाठान्तरम्]

जवेनाभ्यपतद्भीमस् सर्वानेव महाबलः ॥ ३९

[1]ते भज्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः ।
कर्णमासाद्य समरे स्थिता राजन् समन्ततः ॥ ४०

स हि तेषां महावीर्यो द्वीपो ह्यासीन्महारथः ॥ ४०॥

भिन्ननौका यथा राजन् द्वीपमासाद्य निर्वृताः ।
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये ॥ ४१॥

तथा कर्णं समासाद्य तावका भरतर्षभ ।
[2]समाश्वस्तास्स्थिता राजन् सम्प्रहृष्टाः परस्परम् ॥ ४२॥

समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ ७३ ॥ कर्णपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

[अस्मिन्नध्याये ४३ श्लोकाः]

---

1. अ—अर्धत्रयं नास्ति
2. क-ख-घ-ङ—नास्तीदमर्धम्

## ॥ एकोननवतितमोऽध्यायः ॥

कर्णपराक्रमवर्णनम् ॥

धृतराष्ट्रः—

एवं भग्नेषु सैन्येषु भीमसेनेन सञ्जय ।
दुर्योधनोऽब्रवीत् किं नु सौबलो वाऽपि साम्प्रतम् ॥ १

कर्णो वा जयतां श्रेष्ठो नृपा वा मामका युधि ।
कृपो वा कृतवर्मा वा द्रौणिर्दुश्शासनोऽपि वा ॥ २

अत्यद्भुतमहं मन्ये पाण्डवेयस्य विक्रमम् ।
[1]यदेकस्समरे सर्वान् योधयामास मामकान् ॥ ३

यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ।
सर्वेषां कुरुयोधानां कर्णो वै शत्रुसूदनः ॥ ४

शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ॥ ४॥

तत् प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा ।
धनुर्धराणां प्रवरः कर्णः किमकरोद्युधि ॥ ५॥

पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ६॥

1. क-ख-घ-ङ—नासीदमर्धम्

सञ्जयः—

अपराह्णे महाराज सूतपुत्रः प्रतापवान् ।
जघान सोमकान् [1]सर्वान् भीमसेनस्य पश्यतः ॥ ७॥
भीमोऽप्यतिबलस्सेनां धार्तराष्ट्रीं व्यपोथयत् ॥ ८
द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धन्विना ।
यन्तारमब्रवीत् कर्णः पाञ्चालानेव मां वह ॥ ९
मद्रराजस्ततश्शल्यश् श्वेतानश्वान् मनोजवान् ।
प्राहिणोच्चेदिपाञ्चालकरूशेषु महाबलः ॥ १०
प्रविश्य च स तां सेनां शल्यः परबलार्दनः ।
न्ययच्छत्तुरगान् हृष्टो यत्र यत्रैच्छदग्रणीः ॥ ११
तं रथं मेघसङ्काशं वैयाघ्रपरिवारणम् ।
सन्दृश्य पाण्डुपाञ्चालास् त्रस्ता ह्यासन् विशां पते ॥ १२
तस्य शब्दो रथस्याथ प्रादुरासीद् विशां पते ।
पर्जन्यसमनिर्घोषः [2]पर्वतस्येव दीर्यतः ॥ १३
ततश्शरशतैस्तीक्ष्णैर् आकर्णात् करानिस्सृतैः ।
हन्यते पाण्डवं सैन्यं शतशोऽथ सहस्रशः ॥ १४
तं तथा समरे कर्म कुर्वाणमपराजितम् ।
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ १५
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः ।

---

1. क-ख-घ—सङ्ख्ये 2. क-ख-घ—प्रास्वनद्येन मेदिनी

नकुलस्सहदेवश्च द्रौपदेयाश्च सात्वतः ॥ १६

परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः ॥ १६॥

सात्यकिस्तु ततः कर्णं विंशत्या निशितैश्शरैः ।

अताडयद् रणे शूरो जत्रुदेशे नरोत्तमः ॥ १७॥

शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च सप्तभिः ।

द्रौपदेयाश्चतुष्षष्ट्या सहदेवश्च सप्तभिः ॥ १८॥

नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ १९

भीमसेनश्च राधेयं नवत्या नतपर्वभिः ।

विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ॥ २०

अथ प्रहस्यातिरथिर् व्याक्षिपद्धनुरुत्तमम् ।

मुमोच निशितान् बाणान् पीडयन् स महारथान् ॥ २१

तान् प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिश्शरैः ॥ २१॥

सात्यकेस्तु धनुश्छित्त्वा ध्वजं च भरतर्षभ ।

अथैनं नवभिर्बाणैर् आजघान स्तनान्तरे ॥ २२॥

[1]भीमसेनं ततः क्रुद्धो विव्याध निशितैश्शरैः ॥ २३

सहदेवस्य भल्लेन ध्वजं चिच्छेद संयुगे ।

सारथिं च त्रिभिर्बाणैर् आजघान स्तनान्तरे ॥ २४

विरथान् द्रौपदेयांश्च चकार भरतर्षभ ।

1. ख—अर्धेमयं नास्ति

अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ॥ २५

विमुखीकृत्य ताञ् छूराञ् शरैस्सन्नतपर्वभिः ।
पाञ्चालानहनच्छूरश् चेदीनां चैव ये रथाः ॥ २६

[1]ते वध्यमानास्समरे चेदिमत्स्या विशां पते ।
कर्णमेकमभिद्रुत्य शरसङ्घैस्समार्पयन् ॥ २७

ताञ्जघान शितैर्बाणैस् सूतपुत्रो महारथः ।
[2]ततस्तान् प्रहसन् वीरो विजिग्ये पाण्डवान् रणे ॥ २८

ते वध्यमानास्समरे चेदिमुख्या विशां पते ।
प्राद्रवन्त रणे भीतास् सिंहात् क्षुद्रमृगा इव ॥ २९

तत्राद्भुततमं कर्म दृष्टवानस्मि भारत ॥ २९॥

यदेकस्समरे शूरान् यतमानान् महारथान् ।
योधयामास समरे सूतपुत्रः प्रतापवान् ॥ ३०॥

पाण्डवेयान् महाराज शरैरावारयद्रणे ॥ ३१

तत्र भारत कर्णस्य लाघवेन महात्मनः ।
तुष्टुवुर्देवतास्सर्वास् सिद्धाश्च सह चारणैः ॥ ३२

अपूजयन् महेष्वासा धार्तराष्ट्रा नरोत्तमम् ।
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम् ॥ ३३

---

1. अ-च-ङ—अर्धद्वयं नास्ति ख—अर्धषट्कं नास्ति

2. अ—नास्तीदमर्धम्

ततः कर्णो महाराज ददाह समरे रिपून् ।
कक्षं शुष्कं यथा वह्निर् निदाघे ज्वलितो दहेत् ॥ ३४

ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ।
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महारथम् ॥ ३५

तत्राक्रन्दो महानासीत् पाञ्चालानां विशां पते ।
वध्यतां सायकैस्तीक्ष्णैर् उग्रैः कर्णधनुश्च्युतैः ॥ ३६

तेन शब्देन वित्रस्ता पाण्डवानां महारथाः ।
कर्णमेकं रणे योधं मेनिरे तत्र भारत ॥ ३७

तत्राद्भुतं महच्चक्रे राधेयश्शत्रुकर्शनः ।
यदेनं पाण्डवास्सर्वे न शेकुरभिवीक्षितुम् ॥ ३८

जलौघः पर्वतश्रेष्ठं यथाऽऽसाद्य प्रभिद्यते ।
तथा तत् पाण्डवं सैन्यं कर्णं प्राप्य व्यदीर्यत ॥ ३९

कर्णोऽपि समरे राजन् विधूमोऽग्निरिव ज्वलन् ।
ददाह पुरुषव्याघ्रः पाण्डवानां महाचमूः ॥ ४०

शिरांसि च महाराज योधानां कुण्डलानि च ।
बाहूनूरूंस्तथा जङ्घाश् चिच्छेद परमेषुभिः ॥ ४१

हस्तिदन्तत्सरून् खड्गान ध्वजाञ् शक्तीर्हयान् गजान् ।
रथांश्च विविधाकारान् पताका व्यजनानि च ॥ ४२

ईषानक्षान् युगांश्चैव चित्रांश्च रथकूबरान् ।

चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः ॥ ४३

तत्र भारत कर्णेन निहतैर्गजवाजिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ४४

विषमं च समं चैव हतैरश्वैः पदातिभिः ।
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन ॥ ४५

नापि स्वे न परे योधा व्यज्ञायन्त विशां पते ।
घोरे शरान्धकारे तु शस्त्रास्त्रे च विजृम्भिते ॥ ४६

राधेयधनुषा मुक्तैश् शरैः कनकभूषणैः ।
सञ्छादितं महाराज पाण्डवानां महद्बलम् ॥ ४७

ते पाण्डवेयास्समरे कर्णेन स्म पुनः पुनः ।
अभज्यन्त महाराज यतमाना महारथाः ॥ ४८

मृगसङ्घान् यथा क्रुद्धस् सिंहो द्रावयते [1]बली ।
[2]पाण्डवानां रथव्रातान् कर्णो द्रावयते तथा ॥ ४९

कर्णस्तु समरे योधांस् तत्र तत्र महायशाः ।
कालयामास सङ्क्रुद्धो यथा पशुगणान् वृकः ॥ ५०

दृष्ट्वा तु पाण्डवीं सेनां धार्तराष्ट्राः पराङ्मुखीम् ।
अनुजग्मुर्महेष्वासा नदन्तो भैरवान् रवान् ॥ ५१

---

1. क-ख-घ-ङ—तथा
2. क-ख-घ-ङ—नासीदमर्षम्

दुर्योधनोऽपि राजेन्द्र मुदा परमया युतः ।
वादयामास संहृष्टो नानावाद्यान्यनेकशः ॥ ५२

पाञ्चालाश्च महेष्वासा भग्ना भग्नाः पुनः पुनः ।
न्यवर्तन्त रणे शूरा मृत्युं कृत्वा निवर्तनम् ॥ ५३

तान् निवृत्तान् रणे शूरान् राधेयश्शत्रुतापनः ।
अनेकशो महाराज बभञ्ज च पुनः पुनः ॥ ५४

तत्र भारत कर्णेन पाञ्चालाः पञ्चविंशतिः ।
निहतास्सायकैः क्रोधाच् [1]चेदयश्च परश्शताः ॥ ५५

कृत्वा शून्यान् रथोपस्थान् वाजिपृष्ठांश्च भारत ।
निर्मनुष्यान् गजस्कन्धान् पादातांश्चापि विद्रुतान् ॥ ५६

आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परैस्तदा ।
कालान्तक इव क्रुद्धस् सूतपुत्रः प्रकाशते ॥ ५७

एवमेतन्महाराज नरवाजिरथद्विपान् ।
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ॥ ५८

यथा भूतगणान् हत्वा कालस्तिष्ठेन्महाबलः ।
तथाऽसौ सोमकान् हत्वा तस्थावेको महारथः ॥ ५९

तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम् ।

---

1. क-घ-ङ—छेदयन्तः पराजिताः
ख—भेदयन्तः परश्शताः

वध्यमानाश्च यत् कर्णं न जहू रणमूर्धनि ॥ ६०

दुर्योधनो महाराज कृपो दुश्शासनस्तथा ।
द्रौणिश्च कृतवर्मा च शकुनिश्चापि सौबलः ॥ ६१

न्यहनन् पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥ ६१॥

कर्णपुत्रौ च राजेन्द्र भ्रातरौ सत्यविक्रमौ ।
बलं नाशयतस्त्वाजौ पाञ्चालानां ततस्ततः ॥ ६२॥

तत्र युद्धं महच्चासीद् घोरं विशसनं महत् ॥ ६३

तथैव पाण्डवाश्शूरा धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयाश्च सङ्क्रुद्धा न्यहनंस्तावकं बलम् ॥ ६४

एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः ।
तावकानां च भूयिष्ठं भीमं प्राप्य महाबलम् ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

॥ ७३ ॥ कर्णपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

[ अस्मिन्नध्याये ६५ श्लोकाः ]

---

## ॥ नवतितमोऽध्यायः ॥



पार्थचोदनया कृष्णेन कर्णसमीपं प्रति रथप्रापणम् ॥ १ ॥ शल्येन कर्णप्रोत्साहनम् ॥ २ ॥



सञ्जयः—

हत्वा तु फल्गुनस्सैन्यं कौरवाणां पृथक् पृथक् ।
सूतपुत्रस्य संरम्भं दृष्ट्वा चापि महाहवे ॥ १

शोणितोदां नदीं कृत्वा मांसमज्जास्थिशैवलाम् ।
[1]मनुष्यशीर्षपाषाणां हस्त्यश्वकृतरोधसम् ॥ २

शूरास्थियवसङ्कीर्णां काकगृध्रादिनादिताम् ।
छत्रहंसप्लवोपेतां वीरक्षीरापहारिणीम् ॥ ३

हारपद्माकरवतीम् उष्णीषवरफेनिलाम् ।
धनुश्शरगृहोपेतां नरक्षुद्रकपालिनीम् ॥ ४

वर्मचर्मभ्रमोपेतां रथोडुपसमाकुलाम् ।
जयैषिणां च सुतरां भीरूणां च सुदुस्तराम् ॥ ५

तां नदीं द्रावयित्वा वै बीभत्सुः परवाहिनीम् ।
वासुदेवमिदं वाक्यम् अब्रवीत् पुरुषर्षभः ॥ ६

---

1. क-ख-ग-ङ—अष्टार्धानि न सन्ति

अर्जुनः—

एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ॥ ६॥

भीमसेनादयश्चैव योधयन्ति महारथाः ।
[1]एते द्रवन्ति पाञ्चालाः कर्णत्रस्ता जनार्दन ॥ ७॥

एष दुर्योधनो राजा श्वेतच्छत्रेण धार्यते ।
कर्णेन भग्नान् पाञ्चालान् द्रावयन् बहु शोभते ॥ ८॥

[2]कृपश्च कृतवर्मा च भारद्वाजश्च वीर्यवान् ।
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः ॥ ९॥

अवध्यमानास्ते चापि योधयिष्यन्ति सोमकान् ॥ १०

एष शल्यो रथोपस्थे रश्मिसङ्ग्राहकोविदः ।
सूतपुत्ररथं कृष्ण वाहयन् बहु शोभते ॥ ११

तत्र मे बुद्धिरुत्पन्ना वाहयात्र रथं मम ।
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ॥ १२

मा स्म कर्णो रणे पार्थान् सृञ्जयांश्च महारथान् ।
निश्शेषान् समरे हन्यात् पश्यतां नो जनार्दन ॥ १३

सञ्जयः—

ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीम् ।
कर्णं प्रति महाराज द्वैरथे सव्यसाचिनः ॥ १४

1. ख—अर्धमयं नास्ति
2. अ—पञ्चार्धानि न सन्ति ख—नास्तीदमर्धम्

स प्रयातो रथेनाशु कृष्णो राजन् महाहवे ।
आश्वासयद्रथेनाशु पाण्डुसैन्यानि सर्वशः ॥ १५

रथघोषस्ततस्तस्य पाण्डवस्य बभूव ह ।
वासवास्त्रनिपातेन पर्वतेष्विव मारिष ॥ १६

महता रथघोषेण पाण्डवस्सत्यविक्रमः ।
अभ्ययात्ताममेयात्मा विजयस्तव वाहिनीम् ॥ १७

तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम् ।
मद्रराजोऽब्रवीत् कर्णं दृष्ट्वा केतुं महात्मनः ॥ १८

शल्यः—

अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान् समरे यं कर्ण परिपृच्छसि ॥ १९

एष तिष्ठति कौन्तेयस् संस्पृशन् गाण्डिवं धनुः ।
तं हनिष्यसि चेदद्य तन्नश्श्रेयो भविष्यति ॥ २०

[1]धनुर्ज्या चन्द्रताराङ्का पताकाकिङ्किणीयुता ।
पश्य कर्णार्जुनस्यैषा सौदामिन्यम्बरे यथा ॥ २१

एष ध्वजाग्रे पार्थस्य प्रेक्षमाणस्समन्ततः ।
दृश्यते वानरो भीमो वीक्षतां भयवर्धनः ॥ २२

एतच्चक्रं गदा शङ्खश् शार्ङ्गं कृष्णस्य च प्रभो ।

---

1. अ—द्वाविंशत्यर्धानि न सन्ति

दृश्यते पाण्डवरथे वाह्यानस्य वाजिनः ॥ २३

एतत् कूजति गाण्डीवं विकृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्रान् शिताश्शराः ॥ २४

[1]विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् ॥ २५

एते परिघसङ्काशाः पुण्यगन्धानुलेपनाः ।
उद्धता रणशौण्डानां पात्यन्ते सायुधा भुजाः ॥ २६

निरस्तजिह्वानेत्रान्ता वाजिनस्सह सादिभिः ।
पतिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते ॥ २७

एते पर्वतशृङ्गाणां तुल्या हैमवता गजाः ।
सञ्छिन्नकुम्भाः पार्थेन प्रपतन्त्यद्रयो यथा ॥ २८

गन्धर्वनगराकारा रथा हतरथेश्वराः ।
विमानादिव पुण्यान्ते स्वर्गिणो निपतन्त्यमी ॥ २९

व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा ॥ ३०

एष तिष्ठति कौन्तेयस् संस्पृशन् गाण्डिवं धनुः ।
तं चेद्धनिष्यसि त्वद्य तन्नश्श्रेयो भविष्यति ॥ ३१

त्वामभिप्रेप्सुरायाति कर्ण निघ्नन् परान् वरान् ।

1. ख—नवार्धानि न सन्ति

असज्जमानो राधेय तं याहि प्रति भारत ॥ ३२

[1]घृणां त्यक्त्वा प्रमादं च भृगोरस्त्रं च संस्मर ।
दृष्टिं मुष्टिं च सन्धानः कृत्वा रामोपदेशजम् ॥ ३३

धनञ्जयं जयप्रेप्सुः प्रत्युद्गच्छ महारथम् ॥ ३३॥

वाजिविद्यापरिज्ञाने नये बुद्धौ बले हरिः ।
न मां विजेष्यते कर्ण गदायुद्धे विशेषतः ॥ ३४॥

एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः ।
अर्जुनस्य भयात् तूर्णं निघ्नतश्शात्रवान् बहून् ॥ ३५॥

वर्जयन् सर्वसैन्यानि त्वरते हि धनञ्जयः ।
त्वदर्थमिति मन्येऽहं यथाऽस्योदीर्यते वपुः ॥ ३६॥

न ह्यवस्थाप्यते पार्थो युयुत्सुः केनचिद्रथम् ।
त्वद्दते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ॥ ३७॥

विरथं धर्मराजं च दृष्ट्वा सुदृढविक्षतम् ।
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम् ॥ ३८॥

द्रौपदेयान् युधामन्युम् उत्तमौजसमेव च ।
नकुलं सहदेवं च वशगांस्ते समीक्ष्य तु ॥ ३९॥

सहसैकरथः पार्थस् त्वामभ्येति परन्तपः ॥ ४०

क्रोधरक्तेक्षणः कर्ण जिघांसुस्सर्वपार्थिवान् ।

---

1. क-ख-ब-ङ—पञ्चार्धानि न सन्ति

त्वरितोऽभिपतत्यस्मान् हत्वा सैन्यं पृथग्विधम् ॥ ४१

त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः ॥ ४१॥

न तं पश्यामि लोकेऽस्मिंस् त्वत्तो ह्यन्यं कथञ्चन ।
योऽर्जुनं सागरौघाभं क्रुद्धं वेलेव वारयेत् ॥ ४२॥

न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः ।
एक एवाभियाति त्वां पश्य साफल्यमात्मनः ॥ ४३॥

त्वं हि शक्तो रणे कृष्णौ योद्धुमेतौ परन्तपौ ।
[1]तवैष भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ४४॥

त्वं समो ह्यसि भीष्मेण द्रोणद्रौणिकृपैरपि ।
सव्यसाचिप्रतिरथस् तं निवारय पाण्डवम् ॥ ४५॥

लेलिहानं यथा सर्पं गर्जन्तं वृषभं यथा ।
वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ४६॥

एते द्रवन्ति समरान्निरपेक्षा नराधिपाः ।
अर्जुनस्य भयात् तूर्णं धार्तराष्ट्रा महारथाः ॥ ४७॥

एषां तु द्रवतां सङ्ख्ये नान्योऽस्ति युधि मानद ।
भयापहो भवेद्वीरस् त्वामृते सूतनन्दन ॥ ४८॥

एते त्वां कुरवस्सर्वे द्वीपमासाद्य संयुगे ।
विष्ठिताः पुरुषव्याघ्र त्वत्तश्शरणकाङ्क्षिणः ॥ ४९॥

---

1. ख—अर्धचतुष्टयं नास्ति

वैदेहाम्बष्ठकाम्भोजास् तथा नग्नजितस्त्वया ।
गान्धाराश्च यया धृत्या जितास्सङ्ख्ये सुदुर्जयाः ॥ ५०॥

तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवम् ।
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना ॥ ५१॥

[1]प्रत्युद्याहि महाबाहो पौरुषे महति स्थितः ॥ ५२

यथैकेन त्वया पूर्वं कृतो दिग्विजयः पुरा ।
मरुत्सूनोर्यथा सूनुर् घातितश्शक्रदत्तया ॥ ५३

कलिङ्गाधिपतिं जित्वा त्वया नीता तदन्तरे ।
दुर्योधनस्य महिषी जरासन्धं विजित्य च ॥ ५४

तदेतत् सर्वमालम्ब्य जहि पार्थं धनञ्जयम् ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
॥ ७३ ॥ कर्णपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
[ अस्मिन्नध्याये ५४॥ श्लोकाः ]

---

1. क-ख-घ-ङ—पद्धर्धानि न सन्ति

## ॥ एकनवतितमोऽध्यायः ॥

कर्णेन पार्थप्रशंसनपूर्वकं तद्वधप्रतिज्ञा ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥

कर्णः—

प्रकृतिस्थोऽसि मे शल्य इदानीं सम्मतस्तथा ।
प्रतिभासि महाबाहो अभीतश्च धनञ्जयात् ॥ १

पश्य बाह्वोर्बलं मेऽद्य धनुषश्शिक्षितस्य च ।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥ २

कृष्णौ च पुरुषव्याघ्रौ तव सत्यं ब्रवीमि भोः ।
नाहत्वा युधि तौ वीरौ प्रतियास्ये कथञ्चन ॥ ३

निहतो वा गमिष्यामि नैकान्तोऽस्ति रणे जयः ।
[1]कृतार्थोऽद्यागमिष्यामि हतो वा स्वर्गमाप्नुयाम् ॥ ४

शल्यः—

[2]अजेयमेनं प्रवदन्ति सङ्ख्ये
धनञ्जयं कर्ण रथे प्रवीरम् ।
एकाकिनं किमु कृष्णाभिगुप्तं
हन्तुं सहायं क इहोत्सहेत ॥ ५

---

1. ख—इदमर्धं नास्ति 2. क-ख-घ-ङ—अर्धद्वयं नास्ति

कर्णः—

नैतादृशो जातु रणो बभूव
अस्मिँल्लोके यादृशस्तु श्रुतो नः ।
[1]तमीदृशं प्रतियोत्स्यामि पार्थं
महाहवे पश्य च पौरुषं मे ॥ ६

रणे चरत्येष रथप्रवीरस्
सितैर्हयैः कौरवराजपुत्रः ।
अद्याहं तं निहनिष्यामि सङ्ख्ये
धनञ्जयं पश्यतस्ते समृद्धम् ॥ ७

अस्वेदिनौ राजपुत्रस्य पाणी
अवेपमानौ जातकिणौ महान्तौ ।
दृढायुधः कृतिमान् क्षिप्रयोधी
न पाण्डवस्य सदृशोऽस्ति योधः ॥ ८

गृह्णन् विमुञ्चन् स निमेषमात्रात्
पुरन्दरस्येव च तुल्यवीर्यः ।
ते क्रोशमात्रे निपतन्त्यमोघा
न पाण्डवस्य सदृशोऽस्ति कश्चित् ॥ ९

[2]रथान् वरानेति रथप्रवीरश्
शीघ्रैर्हयैः कौरवान् राजपुत्रः ।

---

1. क-ख-घ—अर्धद्वयं नास्ति 2. अ—नास्त्यर्धद्वयम्

स चाद्य मां नेष्यति क्षिप्रमन्तं
कर्णस्यान्तेऽप्यत्र भवेत् समर्थः ॥ १०

अतीवान्यान् धनुषि हि राजपुत्रस्
त्वतीवान्यान् केशवश्चक्रयुद्धे ।
तमीदृशं प्रतियोत्स्यामि पार्थं
महाहवे त्वं मम पश्य पौरुषम् ॥ ११

अतोषयत् खाण्डवे यो हुताशं
कृष्णो हि कृष्णेन युतस्तरस्वी ।
लेभे चक्रं तत्र कृष्णो महात्मा
धनुर्वरं गाण्डिवं सव्यसाची ॥ १२

श्वेताश्वयुक्तं च महौघघोषं
रथं महाबाहुरदीनसत्त्वः ।
महेषुधी चाक्षयौ विद्युदाभौ
शस्त्राणि चान्यानि तु हव्यवाहात् ॥ १३

यस्त्विन्द्रलोके निजघान सङ्घशो
यः कालकेयानपरांश्च दैत्यान् ।
लेभे शङ्खं देवदत्तं च तत्र
को नाम तस्याभ्यधिकः पृथिव्याम् ॥ १४

महादेवं तोषयामास चैव
साक्षात् सुयुद्धेन महानुभावः ।
लेभे ततः पाशुपतं सुघोरं
त्रैलोक्यसंहारकरं महास्त्रम् ॥ १५

पृथक् पृथक् लोकपालास्समेता
ददुर्ह्यस्त्राण्यप्रमेयाणि तस्मै ।
[1]अस्त्रैर्जघानाश्वरथप्रवीरान्
सकालकेयानसुरान् समेतान् ॥ १६

अनन्तवीर्येण च केशवेन
नारायणेनाप्रतिमेन गुप्तः ।
तथा विराटस्य पुरे समेतान्
सर्वानस्मानेकरथेन जित्वा ॥ १७

जहार तद्गोधनमाजिमध्ये
वस्त्राणि चादत्त महारथानाम् ॥ १७॥
तमीदृशं वीर्यगुणोपपन्नं
कृष्णाद्वितीयं वरये रणाय ॥ १८

वर्षायुतैर्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वलोकैः ।

1. अ—नास्तीदमर्धम्

महात्मनश्शङ्खचक्रासिपाणेर्
विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥ १९

भयं न मे जायते साध्वसं च
दृष्ट्वा कृष्णावेकरथे समेतौ ॥ १९॥

उभौ च शूरौ कृतिनौ कृतास्त्रौ
महारथौ संहननोपपन्नौ ।
एतादृशौ नरवीरौ समेतौ
स्थानाच्च्युतौ देवकुमारवर्चसौ ॥ २०॥

[1]अप्यादित्याविन्द्रबृहस्पती वा
यमान्तकौ वा शशिपूषणौ वा ।
भगांशमित्रावरुणावश्विनौ वा
मरुद्गणा वा वसवस्सहेन्द्राः ॥ २१॥

व्यस्तास्समस्ताश्च युधा न शक्ता
जेतुं प्रसह्यार्जुनमच्युतं च ॥ २२

एतौ हि तावर्जुनवासुदेवौ
कोऽन्यः प्रतीयान्मद्तेऽद्य शल्य ॥ २२॥

[2]सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ २३॥

---

1. क-ख-घ-ङ—अप्यानिलौ 2. अ—सत्रार्धानि न सन्ति

तावुभौ पुरुषव्याघ्रौ समाने स्यन्दने स्थितौ ।
मामेकमभियोद्धारौ सुजातं बत शल्य मे ॥ २४॥

नैतच्चिरात् क्षिप्रमिमं रथं मे
प्रवर्तयैतावभियामि चैव ।
अस्मिन् मुहूर्ते निहतौ पश्य कृष्णौ
मया हतं वा युधि मामरिभ्याम् ॥ २५॥

[1]मनोरथो यस्तु महान् हि नित्यं
मद्रेश युद्धं प्रति पाण्डवेन ।
नेदं चिरादाशु भविष्यतीह
तोषस्तु मां वर्धयते निकामम् ॥ २६॥

एतावहं वा युधि पातयिष्ये
मां वाऽपि कृष्णौ निहनिष्यतोऽथ ॥ २७

सञ्जयः—

[2]एवं ब्रुवाणस्सहसा महारथस्
त्वभ्यद्रवत् पाण्डवं सूतपुत्रः ॥ २७॥

अभ्येत्य पुत्रेण तवाभिनन्दितास्
समेत्य चोक्ताः कुरुवीरसत्तमाः ।

1. ख-घ-ङ—अर्धत्रयं नास्ति
2. अ—इति ब्रुवन् शल्यममित्रहन्ता
कर्णो रणे मेघ इवोन्ननाद ॥ [ पाठान्तरम् ]

[1]कृपश्च भोजश्च महारथावुभौ
स चापि राजा शकुनिस्सहात्मजैः ॥ २८॥

गुरोस्सुतस्तत्र तवात्मजास्तथा
पदातिसङ्घा द्विरदा रथास्तथा ॥ २९

दुर्योधनः—

निरुन्धताभिद्रवताच्युतार्जुनौ
श्रमेण संयोजयताशु सर्वशः ।
तथा भवद्भिर्भृशविक्षतावुभौ
सुखेन हन्यान्मम वाहिनीपतिः ॥ ३०

सञ्जयः—

तथेति चोक्त्वा त्वरितास्तथाऽर्जुनं
जिघांसमानास्समरे समभ्ययुः ।
[2]शरैश्च जघ्नुर्युधि तं महारथम्
धनञ्जयं सर्वत एव पार्थिवाः ॥ ३१

---

खकोशे
1. संरुन्धताभिद्रवताच्युतार्जुनौ
श्रमेण संयोजयताशु सर्वशः ।
तथा भवद्भिर्भृशदुःखितावुभौ
सुखेन हन्यान्मम वाहिनीपतिः ॥
[अयं श्लोको द्विरुक्तो भवति—अधिकः पाठः]

2. क-ख—इदं पादद्वयं नास्ति

नदीनदान् पूर्णजलान् महार्णवो
यथा तथा तान् समरेऽर्जुनोऽग्रसत् ॥ ३१॥

न सन्दधन्नैव समुद्धरञ् शरान्
न चापि मुञ्चन्नरिभिस्स दृश्यते ।
तथाऽर्जुनास्त्रैर्निशितैर्विदारिता
हता निपेतुर्नरवाजिकुञ्जराः ॥ ३२॥

शरार्चिषं गाण्डीवचारुमण्डलं
युगान्तसूर्यप्रतिमानतेजसम् ।
न कौरवाश्शेकुरुदीक्षितुं तदा
यथा रविं व्याधितचक्षुषो जनाः ॥ ३३॥

तमभ्यधावद्विसृजञ् शरान् कृपस्
तथैव भोजस्तव चात्मजस्स्वयम् ।
[1]महारथो द्रोणसुतश्च सायकैर्
अवाकिरंस्तोयधरा इवाचलम् [2]॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ७३ ॥ कर्णपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
[ अस्मिन्नध्याये ३४॥ श्लोकाः ]

---

1. क-ख-ग-ङ—नासीदमर्धम्
2. क—सञ्जयः—तमभ्यधावद् द्विजपुङ्गवः कृपस्
तथैव भोजस्तव चात्मजस्स्वयम् । [ अधिकः पाठः ]

## ॥ द्विनवतितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

[1]जिघांसुभिस्तान् कुशलैश्शरोत्तमान्
महात्मभिस्सम्प्रहितान् प्रयत्नतः ।
शरैः प्रचिच्छेद च पाण्डवस्त्वरन्
परान् विनिर्भिद्य च तांस्त्रिभिस्त्रिभिः ॥ १

स गाण्डिवव्यायतपूर्णमण्डलस्
तपन् रिपूनर्जुनभास्करो बभौ ।
शरोग्ररश्मिश्शुचिशुक्रमध्यगो
यथैव सूर्यः परिवेषवांस्तथा ॥ २

अथाग्र्यबाणैर्दशभिर्धनञ्जयं
गुरोस्तनूजस्स तदाऽच्युतं त्रिभिः ।
चतुर्भिरश्वांश्च कपिं ततस्त्रिभिश्
शरैश्च नाराचवरैरवाकिरत् ॥ ३

1. घ—तमभ्यधावद्विकिरञ् शरान् कृपस्
तथैव भोजश्च तवात्मजस्स्वयम् ।
[ पुनरप्यधिकतयाऽध्यायारम्भे दृश्यते ]

तथा ततः प्रस्फुरदस्य कार्मुकं
त्रिभिश्शरैर्यन्तृशिरश्चकर्त ह ।
हयांश्चतुर्भिश्चतुरस्त्रिभिर्ध्वजं
धनञ्जयो द्रौणिरथादपातयत् ॥ ४

स रोषपूर्णो मणिवज्रहाटकैर्
अलङ्कृतं तक्षकभोगवर्चसम् ।
स तद्वधे कार्मुकमन्यदाददे
यथा महाहिप्रवरं महत्तदा ॥ ५

स्वमायुधं चाथ विकीर्य भूतले
धनुश्च कृत्वा सगुणं गुणाधिकः ।
स मानयंस्तावजितौ नरोत्तमौ
शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ६

कृपश्च भोजश्च तवात्मजस्तथा
[1]शरैरनेकैर्युधि पाण्डवर्षभम् ।
महारथास्संयुगमूर्धनि स्थितास्
तमोनुदं वारिधरा इवाद्रवन् ॥ ७

कृपस्य पार्थस्सशरं शरासनं
हयान् ध्वजं सारथिमेव चाष्टभिः ।

1. क-ख-घ-ङ—अथ पादोऽनन्तरश्च नस्तः

[1]न्यपातयद्बाहुसहस्रविक्रमस्
तथा यथा वज्रधरः पुरा बलेः ॥ ८

स पाण्डवेनाथ निपातितायुधो
ध्वजावमर्दे च कृते महाहवे ।
ततः कृपो बाणसमानमाचिनोद्
यथाऽऽपगेयः प्रथमं किरीटिना ॥ ९

शरैः प्रचिच्छेद तवात्मजस्य
ध्वजं धनुश्च प्रचकर्त नर्दतः ।
जघान चाश्वान् कृतवर्मणश्शुभान्
ध्वजं प्रचिच्छेद तवात्मजस्य ह ॥ १०

सवाजिसूतेष्वसनान् सकेतनाञ्
जघान नागाश्वरथांश्च स त्वरन् ।
ततः प्रकीर्णं सुमहद्बलं तव
प्रतापितं सवितुरिवौजसा भृशम् ॥ ११

तथाऽर्जुनस्याथ रथेन केशवश्
चकार शत्रूनपसव्यमातुरान् ।
ततः प्रयान्तं त्वरितं धनञ्जयं
शतक्रतुं वृत्रनिजघ्नुषं यथा ॥ १२

1. क-ख-ग-ङ—अर्धेतयं नास्ति

तमन्वधावन् पुनरुच्छ्रितध्वजै
  रथैस्सुयुक्तैरपरे युयुत्सवः ॥ १२॥

अथाभिसृत्य प्रतिवार्य चाहितान्
  धनञ्जयस्यानुचरा महारथाः ।
शिखण्डिशैनेययमाश्शितैश्शरैर्
  अवाकिरन्तो व्यनदन् सुभैरवम् ॥ १३॥

ततोऽभिजघ्नुः कुपिताः परस्परं
  शरैस्तदाऽञ्जोगतिभिस्सुतेजनैः ।
कुरुप्रवीरास्सह पाण्डुसृञ्जयैस्
  सुरारयो देवपतिं यथा तथा ॥ १४॥

जयेप्सवस्स्वर्गमनाय चोत्सुकास्
  सपत्तिनागाश्वरथास्समन्ततः ।
[1]जगर्जुरुच्चैर्बलवच्च विव्यधुश्
  शरैस्सुमुक्तैरितरेतरं हृदि ॥ १५॥

[2]शरान्धकारे तु महात्मभिः कृते
  महाहवे योधवरैः परस्परम् ।

1. क-ख-घ-ङ—तथैव सर्वे बहवश्च

2. क-ख-घ-ङ—शरान्धकारं च कृतं महात्मभिस्
  तदा दिशो न प्रबभुश्शरार्दिताः । [पाठान्तरम्]

[1]चतुर्दिशो वै विदिशश्च पार्थिव
प्रभा च सूर्यस्य तमोवृताऽभवन् ॥ १६॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
॥ ७३ ॥ कर्णपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
[ अस्मिन्नध्याये १६॥ श्लोकाः ]

---

## ॥ त्रिनवतितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

---

सञ्जयः—

राजन् कुरूणां प्रवरैर् बलैर्भीममभिद्रुतम् ।
मज्जन्तमिव कौन्तेयम् उज्जिहीर्षुर्धनञ्जयः ॥ १

विमृद्य सूतपुत्रस्य सेनां भारत सायकैः ।
प्राहिणोन्मृत्युलोकाय परवीरान् धनञ्जयः ॥ २

ततोऽस्याम्बरमावृत्य शरजालानि भागशः ।
अदृश्यन्त ततोऽन्ये च निघ्नन्तस्तव वाहिनीम् ॥ ३

स पक्षिसङ्घाचरितम् आकाशं पूरयन् शरैः ।

---

1. क-ख-ङ—नास्तीदमर्धम्
* ख—नात्राध्यायसमाप्तिः

धनञ्जयो महाबाहुः कुरूणामन्तकोऽभवत् ॥ ४

ततो भल्लैः क्षुरप्रैश्च [1]नाराचैर्विमलैरपि ।
गात्राणि प्रावृणोत् पार्थश् शिरांसि विचकर्त ह ॥ ५

छिन्नगात्रैर्विकवचैर् विशिरस्कैस्समन्ततः ।
पातितैश्च पतद्भिश्च योधैरासीत् समावृता ॥ ६

धनञ्जयशरव्यस्तैस् स्यन्दनाश्वनरद्विपैः ।
[2]सञ्छिन्नैर्विधृतैर्व्यङ्गैर् व्यङ्गाङ्गावयवैस्तदा ॥ ७

गतसत्त्वैस्ससत्त्वैश्च संवृताऽऽसीद्वसुन्धरा ॥ ७॥

[3]सुदुर्गमा सुविषमा घोराऽत्यर्थं सुदुर्दृशा ।
रणभूमिर्बभौ राजन् घोरा वैतरणी यथा ॥ ८॥

ईषाचक्राक्षभग्नैश्च [4]व्यश्वैस्साश्वैश्च युध्यताम् ।
ससूतैर्हतसूतैश्च [5]रथैस्तीर्णाऽभवन्मही ॥ ९॥

सुवर्णवर्मसन्नाहैर् योधैः कनकमालिभिः ।
आस्थिताः कॢप्तवर्माणो भद्रा नित्यमदा द्विपाः ॥ १०॥

क्रुद्धाः क्रुद्धैर्महामात्रैः प्रेषितार्जुनमभ्ययुः ॥ ११

---

1. क-ख-घ—क्षुरैरञ्जलिकैरपि
2. क-ख-ध-ङ—नास्तीदमर्धम्
3. ख-घ-ङ—अर्धद्वयं नास्ति
4. ख-घ-ङ—सादिभिश्चैव वाजिभिः क—सादिहीनैश्च वाजिभिः
5. क-घ—रथैस्तीर्णा वसुन्धरा ख—रथैः कीर्णा वसुन्धरा

चतुश्शता रथवरा हताः पेतुः किरीटिना ।
पर्यस्तानीव शृङ्गाणि ससत्त्वानि महागिरेः ॥ १२

धनञ्जयशराभ्यस्तैः कीर्णा गौर्वरवारणैः ।
अभिपेदेऽर्जुनरथो घनं भित्वा यथांशुमान् ॥ १३

हतैर्गजमनुष्यैश्च भग्नैश्च बहुधा रथैः ।
विशस्त्रवस्त्रकवचैर् युद्धशौण्डैर्गतासुभिः ॥ १४
अपविद्धायुधैस्तीर्णो मार्ग आसीत् किरीटिनः ॥ १४॥

विष्फारितं च गाण्डीवम् अत्यासीद्भैरवस्वनम् ।
सुघोषं वज्रनिष्पेषं स्तनयन्निव तोयदः ॥ १५॥

तव व्यदीर्यत चमूर् धनञ्जयशराहता ।
महावातसमाविद्धा महानौरिव सागरे ॥ १६॥

नानारूपाः प्राणहराश् शरा गाण्डीवचोदिताः ।
अलातोल्काशनिप्रख्यास् तव सैन्यं विनिर्दहन् ॥ १७॥

महागिरौ वेणुवनम् अग्निप्रज्वलितं यथा ।
तथा तव महत् सैन्यं प्रास्फुरच्छरपीडितम् ॥ १८॥

तत् पिष्टनष्टविध्वस्तं तव सैन्यं किरीटिना ।
हतविप्रहतं बाणैः प्रायाद्भीतं दिशो दश ॥ १९॥

सश्वापदा मृगगणा दवाग्नित्रासिता इव ।
कुरवः पर्यवर्तन्त निर्दग्धास्सव्यसाचिना ॥ २०॥

उत्सृज्य हि महाबाहुं भीमसेनं तदा रणे ।
बलं कुरूणामुच्छिन्नम् आसीत् सर्वं पराङ्मुखम् ॥ २१॥

ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ।
भीमसेनं समासाद्य मुहूर्तं स व्यतिष्ठत ॥ २२॥

समागम्य च भीमेन जल्पित्वा च धनञ्जयः ।
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ॥ २३॥

भीमसेनाभ्यनुज्ञातस् ततः प्रायाद्धनञ्जयः ॥ २४
[1]नादयन् रथघोषेण पृथिवीं द्यां च भारत ॥ २४॥

ततः परिवृतो वीरैर् दशभिश्शत्रुतापनः ।
दुश्शासनादवरजैस् तव पुत्रैर्धनञ्जयः ॥ २५॥

ते तमभ्यर्दयन् बाणैर् उल्काभिरिव कुञ्जरम् ।
आततेष्वसना शूरा नृत्यन्त इव भारत ॥ २६॥

अपसव्यं तु तांश्चक्रे रथेन मधुसूदनः ।
[2]नियुक्तान् हि स तान् मेने यमायाशु किरीटिना ॥ २७॥

तथाऽन्ये प्राणदन् मूढाः पराङ्मुख[3]मिवार्जुनम् ॥ २८

तेषां नानदतां केतून् अश्वांश्चापानि सारथीन् ।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यकृन्तत ॥ २९

---

1. ख—अर्धमयं नास्ति
2. क-ख-घ-ङ—नास्तीदमर्धम्
3. घ—रथेऽर्जुने

अथान्यैर्दशभिर्भल्लैस् शिरांस्येषामपातयत् ।
रोषसंरक्तनेत्राणि सन्दष्टोष्ठानि भूतले ॥ ३०

तेषां वक्त्राणि विबभुर् व्योम्नि तारागणा इव ॥ ३०॥

तान् स भल्लैर्महावेगैर् दशभिर्दश कौरवान् ।
रुक्माङ्गदान् रुक्मपुङ्खैर् हत्वा प्रायादमित्रहा* ॥ ३१॥

तं प्रयान्तं महावेगैर् अश्वैः कपिवरध्वजम् ।
[1]कर्णायाभिमुखं वीरम् अरीन् घ्नन्तं धनञ्जयम् ॥ ३२॥

युद्धायाभ्यद्रवन् वीराः कुरूणां नवती रथाः ॥ ३३

[2]कृत्वा संशप्तका घोरान् शपथान् पारलौकिकान् ।
परिवव्रुर्नरव्याघ्रा महात्मानं रणेऽर्जुनम् ॥ ३४

कृष्णश्श्वेतान् महावेगान् अश्वान् कनकभूषणान् ।
मुक्ताजालपरिच्छन्नान् प्रैषीत् कर्णरथं प्रति ॥ ३५

[3]प्रेक्ष्य कर्णरथं यान्तम् अरिघ्नं तं धनञ्जयम् ।
बाणवर्षैरभिघ्नन्तस् संशप्तकगणा ययुः ॥ ३६

त्वरमाणांस्तु तान् सर्वान् ससूतेष्वसनध्वजान् ।
जघान नवतिं वीरान् नवत्या फल्गुनश्शरैः ॥ ३७

---

* अ—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-ख-घ-ङ—नास्तीदमर्धम् 2. क-ख-घ-ङ—नास्तीदमर्धम्

3. अ—नास्तीदमर्धम्

तेऽपतन् निहता बाणैर् नानारूपैः किरीटिना ।
विमानेभ्यस्सुकृतिनस् स्वर्गात् पुण्यक्षये यथा ॥ ३८

ततस्सरथनागाश्वाः कुरवः कुरुसत्तम ।
निर्भया भरतश्रेष्ठम् अभ्यवर्तन्त फल्गुनम् ॥ ३९

तदायस्तमनुष्यं च उदीर्णरथवारणम् ।
पुत्राणां ते महत् सैन्यं तदाऽरौत्सीद्धनञ्जयम् ॥ ४०

शक्त्यृष्टितोमरप्रासैर् गदानिस्त्रिंशसायकैः ।
प्राच्छादयन् महेष्वासाः कुरवः कुरुसत्तमम् ॥ ४१

तामन्तरिक्षे विततां शस्त्रवृष्टिं समुद्यताम् ।
व्यधमत् पाण्डवो बाणैस् तमस्सूर्य इवांशुभिः ॥ ४२

ततो म्लेच्छास्स्थितैर्मत्तैस् त्रयोदशशतैर्गजैः ।
पार्श्वतोऽभ्यहनन् पार्थं तव पुत्रस्य शासनात् ॥ ४३

कर्णिनालीकनाराचैस् तोमरप्रासशक्तिभिः ।
कर्पणैर्भिण्डिपालैश्च रथस्थं पार्थमार्दयन् ॥ ४४

तां शस्त्रवृष्टिमतुलां द्विपस्थैः प्रेषितां प्रभुः ।
चिच्छेद निशितैर्भल्लैर् अर्धचन्द्रैश्च फल्गुनः ॥ ४५

अथ तान् द्विरदान् सर्वान् नानालिङ्गैश्शरोत्तमैः ।
सपताकध्वजारोहान् गिरीन् वज्रैरिवाभिनत् ॥ ४६

ते हेमपुङ्खैरिषुभिर् अर्दिता हेममालिनः ।

हताः पेतुर्महानागास् साग्निज्वाला इवाद्रयः ॥ ४७

[1]ततो गाण्डीवनिर्घोषो महानासीद्विशां पते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ ४८

कुञ्जराश्च हता राजन् दुद्रुवुस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ ४९

रथा हीना महाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ ५०

अश्वारोहा महाराज धावमानास्सहस्रशः ।
तत्र तत्रैव दृश्यन्ते पतिताः पार्थसायकैः ॥ ५१

तस्मिन् क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत् सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ ५२

असंयुक्ताश्च ते राजन् परिवृत्ता रणं प्रति ।
हया नागा रथाश्चैव नदन्तोऽर्जुनमभ्ययुः ॥ ५३

तत्र त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं क्रुद्धो भीमसेनः किरीटिनम् ॥ ५४

हतावशिष्टानुत्सृज्य तावकान् कतिचिद्रथान् ।
जवेनाभ्यपतद्भीमो धनञ्जयरथं प्रति ॥ ५५

---

* क-ख-घ-ङ—अत्राध्यायसमाप्तिर्दृश्यते

1. क-ख-घ-ङ—सञ्जयः— [ अधिकः पाठः ]

ततस्तत् प्राद्रवत् सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वाऽर्जुनं रणे भीमम् आगतं भ्रातरं प्रति ॥ ५६

हतावशिष्टांस्तुरगान् अर्जुनेन महाबलः ।
भीमोऽभ्यधावत् सङ्क्रुद्धो गदापाणिर्महाहवे ॥ ५७

गदापाणिं तदा भीमं दृष्ट्वा भारत भारताः ।
मेनिरे तमनुप्राप्तं दण्डहस्तमिवान्तकम् ॥ ५८

कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ ५९

गदां तुरगनाशाय त्वरन् भीमो व्यवासृजत् ॥ ५९॥
सा जघान बहूनश्वान् अश्वारोहांश्च मारिष ॥ ६०

कांस्यायसतनुत्राणान् नरान् नागांश्च पाण्डवः ।
[1]पातयामास गदया सशब्दं तेऽपतन् हताः ॥ ६१

[2]दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।
भग्नमूर्धास्थिचरणाः क्रव्यादगणमोदनाः ॥ ६२

असृङ्मांसवसाभिश्च तृप्तिमाप हि सा गदा ।
अस्थीन्युद्गिरती तस्थौ कालरात्रीव दुर्दृशा ॥ ६३

---

1. क-ख-घ-ङ—क्षणेन भीमः सङ्क्रुद्धस्ताश्निन्ये वै यमक्षयम् ।
[ पाठान्तरम् ]

2. क-ख-घ-ङ—दशार्धानि न सन्ति

सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूरिशः ।
भीमोऽभ्यधावत् सङ्क्रुद्धो गजानीकं महाबलः ॥ ६४

गदापाणिं ततो भीमं दृष्ट्वा भारत तावकाः ।
मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमम् ॥ ६५

स मत्त इव मातङ्गस् सङ्क्रुद्धः पाण्डुनन्दनः ।
प्रविवेश गजानीकं मकरस्सागरं यथा ॥ ६६

ततस्स समरश्लाघी गजानीकानि पातयन् ।
गदया व्यधमत् सङ्ख्ये दण्डपाणिरिवान्तकः ॥ ६७

गजान् सकङ्कटान् मत्तान् सारोहान् सपताकिनः ।
न्यहनल्लीलया राजन् शिक्षया च बलेन च ॥ ६८

ते गजा बह्वशोभन्त हन्यमाना महारणे ।
विनदन्तस्तदा तूर्णं पक्षवन्त इवाद्रयः ॥ ६९

निपेतुरुर्व्यां समरे भीमसेनेन ताडिताः ।
छिन्नपक्षा यथा काले वज्रुगणा इवाद्रयः ॥ ७०

हत्वा तु तद् गजानीकं भीमसेनो महाबलः ।
पुनस्स्वरथमास्थाय पृष्ठतोऽर्जुनमभ्ययात् ॥ ७१

ततः पराङ्मुखीभूतं निरुत्साहं बलं तव ।
व्यलम्बत महाराज प्रायशश्शस्त्रवेधितम् ॥ ७२

विलम्बमानं तत् सैन्यम् अप्रगल्भमवस्थितम् ।
दृष्ट्वा प्रच्छादयामास फल्गुनश्शरवृष्टिभिः ॥ ७३

[1]नराश्वरथमातङ्गा युधि गाण्डीवधन्वना ।
शरव्रातैश्चिता रेजुः कदम्बा इव केसरैः ॥ ७४

ततः कुरूणामभवद् आर्तनादो महान् नृप ।
नराश्वनागासुहरान् दृष्ट्वा बाणान् किरीटिनः ॥ ७५

हाहाकृतं भृशं त्रस्तं लीयमानं परस्परम् ।
अलातचक्रवत् सैन्यं तदा बभ्राम तावकम् ॥ ७६

ततोऽर्जुनशरध्वस्तं कुरूणामभवद्बलम् ।
न तत्रासीदनिर्भिन्नो रथो वाजी नरो गजः ॥ ७७

आदीप्तमिव तत् सैन्यं शरभिन्नतनुच्छदम् ।
आसीत् स्वशोणितक्लिन्नं रौद्रं द्रष्टुं विशां पते ॥ ७८

तत् सैन्यं भरतश्रेष्ठ वध्यमानं शितैश्शरैः ।
न जहौ समरं प्राप्य फल्गुनं शत्रुतापनम् ॥ ७९

तत्राद्भुतमपश्याम कौरवाणां पराक्रमम् ।
वध्यमानाऽपि यत् पार्थं न जहुर्भरतर्षभ ॥ ८०

तं दृष्ट्वा विक्रमं तस्य कुरवस्सव्यसाचिनः ।
निराशास्समपद्यन्त सर्वे कर्णस्य जीविते ॥ ८१

---

1. क-ख-घ-ङ—अर्धद्वयं नास्ति

अविषह्यं तु पार्थस्य शरसंस्पर्शमाहवे ।
कुरवः पर्यवर्तन्त जिता गाण्डीवधन्वना ॥ ८२

ते हित्वा समरे पार्थं वध्यमानाश्च सायकैः ।
प्रदुद्रुवुर्दिशो भीताश् चुक्रुशुश्चापि सूतजम् ॥ ८३

तान् विद्रावयते पार्थः किरञ् शरशताञ् शितान् ।
हर्षयन् पाण्डवीं सेनां राजंस्तं च वृकोदरम् ॥ ८४

पुत्रास्तव महाराज जग्मुः कर्णरथं प्रति ।
अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत् तदा ॥ ८५

कुरवोऽपि महाराज निर्विषा इव पन्नगाः ।
कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः ॥ ८६

[1]यथा भूतानि सर्वाणि मृत्योर्भीतानि भारत ।
[2]धर्ममेवोपलीयन्ते धर्मवन्ति हि यानि वै ॥ ८७

तथा कर्णं महेष्वासं पुत्रास्तव नराधिप ।
उपालीयन्त संत्रासात् पाण्डवस्य महात्मनः ॥ ८८

ताञ् शोणितपरिक्लिन्नान् विषमस्थाञ् शरातुरान् ।
मा भैष्टेत्यब्रवीत् कर्णो भीतानाविष्टचेतसः ॥ ८९

प्रभग्नं हि बलं दृष्ट्वा महत् पार्थेन तावकम् ।

---

1. ख—अर्धद्वयं नास्ति

2. क-घ-ङ—उपलीयन्ति सन्त्रासाद्धर्मं लोकपरायणम् । [पाठान्तरम्]

[1]धनुर्विष्फारयन् कर्णस् तस्थौ पार्थजिघांसया ॥ १०

तान् विद्रुतान् कुरून् दृष्ट्वा कर्णश्शस्त्रभृतां वरः ।
विष्फारयित्वा दुर्धर्षं चापमातिरथिर्महत् ॥ ११

समभ्यधावत् पाञ्चालान् पश्यतस्सव्यसाचिनः ॥ ११॥

ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः ।
शरौघैश्छादयामासुर् महामेघा इवाचलम् ॥ १२॥

ततश्शरसहस्राणि कर्णमुक्तानि भारत ।
पाञ्चालानां हरन् प्राणांस् तमांसीव तमोनुदः ॥ १३॥

युद्धमासीत् ततो घोरं पाञ्चालानां विशां पते ।
वध्यतां सूतपुत्रेण मित्रार्थे [2]जयगृद्धिना ॥ १४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ७३ ॥ कर्णपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
[ अस्मिन्नध्याये ९४॥ श्लोकाः ]

---

1. क-ख—इदमर्धद्वयं नास्ति
2. क-ख-घ-ङ—ऽमितभीरुणा

## ॥ चतुर्नवतितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥ १ ॥ भीमदुश्शासनयोः समागमो विवादश्च ॥ २

---

सञ्जयः—

ततः कर्णः कुरुषु प्रद्रुतेषु
सेनापतिश्श्वेतहयेन राजन् ।
पाञ्चालपुत्रान् व्यधमत् सूतपुत्रो
महेषुभिर्वात इवाभ्रसङ्घान् ॥

सूतं रथादञ्जलिकैर्निपात्य
जघान चाश्वाञ्जनमेजयस्य ।
शतानीकं सुतसोमं च भल्लैर्
अवाकिरद्धनुषी चाप्यकृन्तत् ॥

धृष्टद्युम्नं [1]निर्बिभेदाथ षड्भिर्
जघान चाश्वान् परवीरहन्ता ।
हत्वा चाश्वान् सात्यकेस्सूतपुत्रः
कैकेयपुत्रं न्यवधीद्विशोकम् ॥

तमभ्यधावन्निहते कुमारे
सेनापतिं कैकयो मित्रवर्मा ।

---

1. क-ख-ग-ङ—निशितैराजघान षड्भिर्बाहुं दक्षिणं तस्य सङ्ख्ये

शरैर्विधून्वन् भृशमुग्रवेगैः
कर्णात्मजं चाप्यहनत् सुदेवम् ॥ ४

तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त
प्रसह्य बाहू च शिरश्च कर्णः ।
स स्यन्दनाद् गामपतद् गतासुः
परश्वथैस्साल इवावकृत्तः ॥ ५

हताश्वमञ्जोगतिभिस्सुदेवं
शिनिप्रवीरो निशितैः पृषत्कैः ।
जघान नृत्यन्निव कर्णपुत्रश्
शैनेयबाणाभिहतः पपात ॥ ६

पुत्रे हते क्रोधपरीतचेताः
कर्णश्शिनीनां प्रवरं जिघांसुः ।
हतोऽसि हे सात्यक इत्युदीर्य
व्यवासृजद्बाणममित्रसाहम् ॥ ७

तमस्य चिच्छेद शरं शिखण्डी
त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम् ।
शिखण्डिनः कार्मुकं च ध्वजं च
च्छित्त्वा क्षुराभ्यां न्यहनच्च सूतम् ॥ ८

शिखण्डिनं षड्भिरविध्यदुग्रो
धार्ष्टद्युम्नेस्स शिरश्चोच्चकर्त ।
ततोऽभिनत् सुतसोमं क्षुरेण
सुसंशितेनातिरथिर्महात्मा ॥ ९

[1]जनाक्रन्दे तुमुले वर्तमाने
धार्ष्टद्युम्ने निहते तत्र कृष्णः ।
अपाञ्चाल्यं क्रियते याहि पार्थ
कर्णं जहीत्यब्रवीद्राजसिंह ॥ १०

ततः प्रहस्याशु नरप्रवीरो
रथं रथेनातिरथेर्जगाम ।
भये तेषां त्राणमिच्छन् सुबाहुर्
अभ्याहतानां रथयूथपेन ॥ ११

[2]ततोऽपरे भारत दुष्प्रकम्प्याः
पाञ्चालानां रथसङ्घास्समेताः ।
प्रतिश्रुता ह्यन्तरिक्षे महाभा
धनुःप्रवीरास्तु रथप्रवीराः ॥ १२

1. क-ख-घ-ङ—अर्धचतुष्टयं नास्ति
2. अ—नास्त्यर्धद्वयम्

[1]विष्फार्य गाण्डीवमथोग्रघोषं
ज्यां वै समाहत्य तले भृशं च ।
बाणान्धकारं सहसा चकार
जघान नागाश्वरथान् नरांश्च ॥ १३

तं भीमसेनोऽनुययौ रथेन
[2]पृष्ठे रक्षन् पाण्डवमेकवीरम् ।
तौ राजपुत्रौ त्वरितौ रथाभ्यां
कर्णं हि यातावरिभिर्विषक्तौ ॥ १४

अत्रान्तरे सुमहत् सूतपुत्रश्
चक्रे युद्धं सोमकान् सम्प्रमृद्नन् ।
रथाश्वमातङ्गनरान् निजघ्ने
प्रच्छादयामास शरैर्दिशश्च ॥ १५

तमुत्तमौजा जनमेजयश्च
क्रुद्धौ युधामन्युशिखण्डिनौ च ।
कर्णं ववर्षुस्सहसा पृषत्कैस्
सन्तर्जयानास्सह पार्षतेन ॥ १६

---

1. क-ख-घ-ङ—रथं रथेनातिरथेर्जगाम
भये तेषां त्राणमिच्छन् सुबाहुः ।
अभ्याहतानां रथयूथपानां
विष्फार्य गाण्डीवमथोग्रघोषम् ॥ [ अधिकः पाठः ]

2. क-ख-घ-ङ—अयं पादो नास्ति

ते पञ्च पाञ्चालरथप्रवीरा
वैकर्तनं कर्णमभिद्रवन्तः ।
तस्मा[1]द्रथाच्चालयितुं न शेकुर्
धैर्यात् कृतात्मानमिवेन्द्रियाणि ॥ १७

तेषां [2]ध्वजान् वाजिसङ्घान् पताकास्
तूणीर्धनूंषि प्रचकर्त बाणैः ।
तान् पाञ्चालानभ्यहनत् पृषत्कैः
कर्णस्ततस्सिंह इवोन्ननाद ॥ १८

तस्यास्यतस्तानहितान् वै घ्नतश्च
ज्याबाणहस्तस्य धनुस्स्वनेन ।
साद्रिद्रुमाऽऽसीत् पृथिवी विशीर्णा
इतीव मत्वा तु जना विषेदुः ॥ १९

स शक्रचापप्रतिमेन धन्वना
भृशाततेनातिरथिश्शरान् बहून् ।
सृजन् बभौ दीप्तमरीचिमण्डलो
यथांशुमाली परिवेषवांस्तथा ॥ २०

शिखण्डिनं द्वादशभिः पराभिनच्
छितैश्शरैष्षड्भिरथोत्तमौजसम् ।

---

1. क-ख-ङ—द्रणाच्चा 2. क—ध्वजाननुकर्षान् पताकाः

त्रिभिर्युधामन्युमविध्यदाशुगैस्
त्रिभिस्त्रिभिस्सोमकपार्षतान् सदा ॥ २१

पराजिताः पञ्च महारथास्तु ते
महाहवे सूतसुतेन मारिष ।
निरुद्यमास्तस्थुरमित्रनन्दना
यथेन्द्रियाण्यात्मवता जितास्तथा ॥ २२

निमज्जतस्तानथ कर्णसागरे
विपन्ननावो वणिजो यथाऽर्णवे ।
समुद्धरन् नौभिरिवार्णवाद्रथैस्
सुकल्पितैर्द्रौपदिजास्स्वमातुलान् ॥ २३

ततश्शिनीनामृषभश्शितैश्शरैर्
निकृत्य कर्णप्रहितानिषून् बहून् ।
विदार्य कर्णं निशितैरयस्मयैस्
तवात्मजं ज्येष्ठमविध्यदष्टभिः ॥ २४

कृपोऽथ भोजश्च तवात्मजस्तथा
स्वयं च कर्णो निशितैरताडयन् ।
स तैश्चतुर्भिर्युयुधे यदूत्तमो
दिगीश्वरैर्दैत्यपतिर्यथा तथा ॥ २५

समाततेनेष्वसनेन कूजता
महास्वनेनाशनि[1]बाणवर्षिणा ।
बभौ सुदुर्धर्षतरस्स सात्यकिश्
शरन्नभोमध्यगतो यथा रविः ॥ २६

पुनस्समास्थाय रथान् सुदंशिताश्
शिनिप्रवीरं जुगुपुः परन्तपाः ।
समेत्य पाञ्चालरथा महाहवे
मरुद्गणाश्शक्रमिवारिनिग्रहे ॥ २७

ततोऽभवद्युद्धमतीव दारुणं
तवाहितानां तव सैनिकैस्सह ।
रथाश्वमातङ्गविनाशनं तथा
यथा सुराणामसुरैः पुराऽभवत् ॥ २८

रथाश्वमातङ्गपदातयोऽपिच
भ्रमन्ति नानाविधशस्त्रवेष्टिताः ।
परस्परेणाभिहताश्च चस्खलुर्
विनेदुरार्ता व्यसवः पतन्ति च ॥ २९

तथागते भीममभीस्तवात्मजस्
ससार राजावरजः किरञ् शरान् ।

1. क-च-छ—दीधितिः ख—पातिदीधितिः

तमभ्यधावत् त्वरितो वृकोदरो
महारुरुं सिंह इवाभिपेदिवान् ॥ ३०

ततस्तयोर्युद्धमतीव दारुणं
प्रदीव्यतोः प्राणदुरोदरैर्द्वयोः ।
परस्पराभावविवृद्धरोषयोर्
उदग्रयोश्शम्बरशक्रयोरिव ॥ ३१

शरैश्शरीरान्तकरैस्सुतेजनैर्
निजघ्नतुस्तावितरेतरं भृशम् ।
सकृत् प्रभिन्नाविव वाशितान्तरे
महागजौ दोर्भिरतीव घातिनौ ॥ ३२

आलोक्य तौ तत्र परस्परं ततस्
समं च शूरौ च ससारथी तदा ।
भीमोऽब्रवीद्याहि दुश्शासनाय
दुश्शासनो याहि वृकोदराय ॥ ३३

तयो रथौ सारथिभ्यां प्रचोदितौ
समं रणे तौ सहसा समीयतुः ।
नानायुधौ चित्रपताकिनौ ध्वजौ
दिवीव पूर्वं बलशक्रयो रणे ॥ ३४

भीमः—

दिष्ट्याऽसि दुश्शासन मेऽद्य दृष्टः
ऋणं प्रतीच्छे सहवृद्धिमूलम् ।
चिरोद्यतं यन्मया ते सभायां
कृष्णाभिमर्शेन गृहाण मत्तः ॥ ३५

सञ्जयः—

स एवमुक्तस्तु ततो महात्मा
दुश्शासनो वाक्यमुवाच वीरः ।

दुश्शासनः—

सर्वं स्मरे नैव च विस्मरामि
उदीर्यमाणं शृणु भीमसेन ॥ ३६

स्मरामि चात्मप्रभवं चिराय
यज्जातुषे वेश्मनि राञ्यहानि ।
विश्वासहीना मृगयां चरन्तो
वसन्ति सर्वत्र निराकृतास्तु ॥ ३७

महाभये राञ्यहनी स्मरन्तस्
तथोपभोगाच्च सुखाच्च हीनाः ।
वनेष्वटन्तो गिरिगह्वराणि
पाञ्चालराजस्य पुरं प्रविष्टाः ॥ ३८

मायां यूयं कामपि सम्प्रविष्टा
यतो वृतः कृष्णया फल्गुनो वः ।

सम्भूय पार्थैस्तदनार्यवृत्तं
　　कृतं तदा मातृकृतानुरूपम् ॥ ३९

एको वृतः पञ्चभिस्त्वाऽभिपन्ना
　　ह्यलज्जमानैश्च परस्परस्य ।
स्मरे सभायां सुबलात्मजेन
　　दासीकृतास्स्थ सह कृष्णया च ॥ ४०

सञ्जयः—

[1]इत्येवमुक्तस्तु तवात्मजेन
　　पाण्डोस्सुतः कोपवशं जगाम ।
तवात्मजस्याथ वृकोदरो भृशं
　　धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ॥ ४१

ललाटमप्यस्य बिभेद पत्रिणा
　　शिरश्च कायात् प्रजहार सारथेः ॥ ४१॥

स राजपुत्रोऽन्यदवाप्य कार्मुकं
　　वृकोदरं द्वादशभिः पराभिनत् ।
स्वयं नियच्छंस्तुरगानजिह्मगैश्
　　शरैश्च भीमं पुनरप्यवीवृषत् ॥ ४२॥

---

1. अ-ख-घ-ङ— नास्तीदमर्धद्वयम्

[1]ततश्शरं सूर्यमरीचिसप्रभं
सुवर्णवज्रोत्तमरत्नभूषितम् ।
महेन्द्रवज्राशनिपातनिस्वनम्
मुमोच भीमाङ्गविदारणक्षमम् ॥ ४३॥

स तेन निर्भिन्नतनुर्वृकोदरो
निपातितस्त्रस्ततनुर्गतासुवत् ।
प्रसार्य बाहू रथवर्यमास्थितः
पुनश्च संज्ञामुपलभ्य चानदत् ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
॥ ७३ ॥ कर्णपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

भीमेन राज्ञां समक्षं दुश्शासनवक्षसो रक्तपानम् ॥

सञ्जयः—

स राजपुत्रेण समार्च्छदुग्रं
दुश्शासनेन निकृतो निकृत्या ॥ ॥

तत्राकरोद्दुष्करं राजपुत्रो
दुश्शासनः कुरुवीरो महात्मा ।
यद्भीमसेनं प्रतियोधयद्रणे
जम्भो यथा शक्रमुदारवीर्यम् ॥ १॥

धनुश्छित्त्वा भीमसेनस्य सङ्ख्ये
षड्भिश्शरैस्सारथिमभ्यविध्यत् ।
ततोऽविध्यत् त्रिंशता भीमसेनं
वरेषुभिर्वन्यमिव द्विपेन्द्रम् ॥ २॥

स कार्मुकं गृह्य तु भारसाधनं
भीमस्तदा राजपुत्रं ह्यविध्यत् ।
पञ्चाशता बाणगणैस्स्तनान्तरे
तोत्त्रैर्यथाऽद्रिप्रतिमं द्विपेन्द्रम् ॥ ३॥

[1]स तत् कृत्वा राजपुत्रस्तरस्वी
विव्याध भूयो नवभिः पृषत्कैः ।
ततः क्रुद्धो भीमसेनस्तरस्वी
शक्तिं चोग्रां प्राहिणोत्ते सुताय ॥ ४॥

तामापतन्तीं सहसाऽतिघोरां
दृष्ट्वा सुतस्ते ज्वलितामिवोल्काम् ।
आकर्णपूर्णैरिषुभिर्महात्मा
चिच्छेद पुत्रो दशभिः पृषत्कैः ॥ ५॥

दृष्ट्वा तु तत् कर्म कृतं सुदुष्करं
प्रापूजयन् सर्वयोधाः प्रहृष्टाः ॥ ६

[2]अथाभिमानी स शरेण भूयो
गाढं हि विव्याध सुतस्त्वदीयः ।
चुक्रोध भीमः पुनराशुगेन
भृशं प्रजज्वाल रुषाऽभिविष्टः ॥ ७

[3]ततो विद्धो विरथं तं महात्मा
दुश्शासनो भीमसेनं चकार ।

---

1. क-ख-ब-ङ—अर्धपञ्चकं नास्ति
2. क-ख-ब-ङ—अर्धद्वयं नास्ति
3. अ—अर्धषट्कं नास्ति

निहत्य सङ्ख्ये चतुरोऽस्य वाहान्
छित्वा रथेषां पुनरेव चाक्षिपत् ॥ ८

ततः क्षितिस्थो ह्यवरुह्य यानाद्
वृकोदरो गदया तस्य वाहान् ।
यमक्षयं प्रेषयित्वा महात्मा
रथं समाकर्षत राजसूनोः ॥ ९

तस्मादवप्लुत्य रथात् ससर्ज
दुश्शासनस्तोमरमुग्रवेगम् ।
स तेन विद्धो ह्युरसि ह्यप्रमेयो
गदां तस्मै विससर्जाप्रमेयाम् ॥ १०

[1]विचिक्षिपे तां यमदण्डसन्निभाम्
भीमो हि भीमां ज्वलितामिवोल्काम् ।
प्रगृह्य वज्राशनितुल्यवेगां
गदां करेणाथ वृकोदरो रुषा ॥ ११

[2]ततः क्रोधाद्भीमसेनः कृतानि
सर्वाणि दुःखान्यनुसंस्मरन् वै ।

---

1. क-ङ—कोशयोरेवार्धद्वयमिदं दृश्यते
2. अ—विद्धोऽस्मि वीराद्य भृशं त्वयाऽद्य
सहस्व भूयोऽपि गदाप्रहारम् ।
उक्त्वैवमुच्चैः कुपितोऽथ भीमो
जग्राह तां भीमगदां वधाय ॥ [ अधिकः पाठः ]

संस्मृत्य संस्मृत्य तथा प्रतिज्ञाम्
उग्रामधो राजपुत्रो न्यषीदत् ॥ १२

[1]अथैनमुग्रस्तनयस्तवोग्रां
शक्तिं वेगात् प्राहिणोन्मृत्युरूपाम् ।
आविध्य भीमोऽपि गदां सुभीमां
चिक्षेप रोषेण परीतमूर्तिः ॥ १३

[2]सञ्चिन्तयन् रोषमतीव वेगात्
त्रयोदशाब्दं पुरुषप्रवीरः ।
[3]गदां करेणाथ वृकोदरो रुषा
निपातयित्वा पृथिवीतले भृशम् ॥ १४

[4]आदाय दुश्शासनमुग्रवेगं
सन्ताडयामास बली वृकोदरः ।
अतीव सन्ताडितभिन्नगात्रो
दुश्शासनो वै निपपात भूमौ ॥ १५

आक्रम्य कण्ठे युधि राजपुत्रं
संरक्तनेत्रो ह्यब्रवीद्धार्तराष्ट्रम् ।

---

1. अ—इतः अष्टाविंशतिरर्धानि अकोश एकस्मिन्नेव वर्तन्ते नान्यत्र
2. ख—अर्धद्वयं नास्ति
3. ख—समापतन्तीं ज्वलितामिवोल्कां [ अधिकः पाठः ]
4. ख-घ—अयं पादो नास्ति

तद्ब्रूहि किं त्वं परिमार्गमाणो
 ह्यस्मान् पराभूय इहागतः पुनः ॥ १६

[1]आदीपयंस्तद्भृशदीपितं मे
 चिरार्जितं रोषमतिप्रदीप्तम् ।
मधु प्रपास्ये तव कोष्ठभाजनाद्
 इत्यब्रवीद्भीमसेनस्तरस्वी ॥ १७

[2]दुश्शासनं कण्ठदेशे प्रमृद्नंस्
 ततः क्रूरं भीमसेनश्चकार ।
तं ध्वंसयित्वा सहसा ससार
 बलादसौ धार्तराष्ट्रस्तरस्वी ॥ १८

भीमोऽभिदुद्राव सुतं त्वदीयं
 सपत्नतां दर्शयन् धार्तराष्ट्रे ।
मृगं मुहुस्सिंहशिशुर्यथा वने
 तथाऽऽश्वभिद्रुत्य महाबलं बली ॥ १९

निगृह्य चैनं परमेण कर्मणा
 उत्क्षिप्य चोत्क्षिप्य च तूर्णमेनम् ।
भूमौ तदा निष्पिपेषाथ वीरम्
 असिं विकोशं विमलं चकार ॥ २०

---

1. ख—इदं पादद्वयं नास्ति
2. घ—अर्धद्वयं नास्ति ख—अर्धषट्कं नास्ति

[1]तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुश्शासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ॥ २१

स तस्य शक्तिं सहसा विमृद्य
पुत्रं तवाजौ ताडयामास मूर्ध्नि ।
तया हतः पतितो वेपमानो
दुश्शासनो गदया वेगवत्या ॥ २२

विध्वस्तवर्माभरणोरुहस्तको
विवेष्टमानो भृशवेदनार्तः ।
[2]तं पातयित्वाऽथ वृकोदरोऽपि
जगर्ज हर्षेण निनादयन् दिशः ॥ २३

नादेन तेनाखिलसादिपत्तयो
मूर्च्छाकुलाः पतितास्त्वाजिमध्ये ।
भीमोऽपि वेगादवतीर्य यानाद्
दुश्शासनं वेगवानभ्यधावत् ॥ २४

---

1. क-ख-घ—अर्धद्वयं नास्ति
2. अ—हयाश्च सूतश्च हता नरेन्द्र
चूर्णीकृतश्चापि रथः पपात । [अधिकः पाठः]

स समीपस्थितो भीमो विसंज्ञं प्रेक्ष्य ते सुतम् ।
चकार चेदं मनसा चिन्तां च परमां ययौ ॥ २५

अचेतनस्य रुधिरं कथं पास्याम्यहं रिपोः ।
अजानतोऽस्य पापस्य दुर्मतेर्मित्रघातिनः ॥ २६

एवं विचिन्तयन् भीमो ददर्शाथ विचेतनम् ।
वस्त्रेणावीजयच्चैनं तेन संज्ञामवाप सः ॥ २७

दृष्ट्वा स संज्ञां सम्पन्नं पादेनाक्रम्य वक्षसि ।
प्रहृष्टरूपो भीमस्तु सार्दि प्रोवाच तं तदा ॥ २८

भीमसेनः—

ये राजसूयावभृथे पवित्रिता
जाताः कचा याज्ञसेन्या दुरात्मन् ।
ते पाणिना कतरेणापकृष्टास्
तद्ब्रूहि त्वं पृच्छते मे नृशंस ॥ २९

सञ्जयः—

उक्तस्तथाऽसौ तनयस्सरोषं
जगाद भीमं परिवृत्य नेत्रे ॥ २९॥

दुश्शासनः—

सोऽयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ॥ ३०॥

अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ॥ ३१॥

सञ्जयः—

एवं ब्रुवाणस्य तु भीमसेन
उत्पाटयामास भुजं महात्मा ।
समुत्थितोऽसौ तमतीव रुष्टस्
सन्ताडयामास भुजेन तेन ॥ ३२॥

भीमोऽभिदुद्राव सुतं द्वितीयं
मृगं यथा सिंहशिशुर्वनान्ते ।
तमप्यभिद्रुत्य महाबलं बली
निगृह्य चैनं परमेण मन्युना ॥ ३३॥

उत्क्षिप्य चोद्भ्राम्य च तूर्णमेनं
भूमौ तथा निष्पिपिषेऽथ वीरः ।
कण्ठे समाक्रम्य च वेपमानं
कृत्वा तु रूपं परमं सुघोरम् ॥ ३४॥

कालान्तकाभ्यां सदृशं तदानीं
विदार्य वक्षस्स महारथस्य ।
दुश्शासनस्य रिपुशासनस्य
उद्धृत्य वक्षः पतितस्य भूमौ ॥ ३५॥

ततोऽपिबच्छोणितमस्य कोष्णम्
आस्वाद्य चास्वाद्य च वीक्षमाणः ॥ ३६

क्रुद्धोऽतिहृष्टो निजगाद वाक्यं
स्तन्यस्य मातुः पयसोऽमृतस्य ।
माध्वीकजस्येव रसस्य तस्य
मधोश्च पानाद्यवकस्य पानात् ॥ ३७

पयोदधिभ्यां मथिताच्च मुख्यात्
तथेक्षुसारस्य मनोहरस्य ।
सर्वेभ्य एवाभ्यधिको रसोऽस्य
मतो ममाद्याहितलोहितस्य ॥ ३८

एवं ब्रुवाणं पुनरुत्थितं तम्
आस्फोट्य वल्गन्तमतीव हृष्टम् ।
ये भीमसेनं ददृशुस्तदानीं
प्रायेण तेऽपि व्यथिता निपेतुः ॥ ३९

ये चापि नासन् पतिता मनुष्यास्
तेषां कराभ्यां पतितं तु शस्त्रम् ।
भयाच्च सञ्चुक्रुशुरस्वरैस्तदा
निमीलिताक्षा मुमुहुश्च तत्र ॥ ४०

ये तत्र भीमं रुधिरं पिबन्तं
दुश्शासनस्य ददृशुः प्रपन्नाः ।
[1]नायं मनुष्यस्त्विति भाषमाणास्
सर्वेऽपलायन्त भयाभिपन्नाः ॥ ४१

भीमोऽपि हत्वा तत्रैव दुश्शासनममर्षणम् ।
पूरयित्वाऽञ्जलिं भूयो रुधिरास्योग्रनिस्वनः ॥ ४२

स पीत्वा रुधिरं तस्य चरणौ गृह्य भारत ।
शृण्वतां सर्ववीराणां पुनर्वाक्यमथाब्रवीत् ॥ ४३

भीमः—

एष ते रुधिरं तीव्रं पिबामि पुरुषाधम ।
ब्रूहीदानीं सुसंरब्धः पुनर्गौरिति गौरिति ॥* ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

1. ख—नास्त्यर्धमिदम्

* अकोशे नात्राध्यायसमाप्तिर्दृश्यते

## ॥ षण्णवतितमोऽध्यायः ॥

दुश्शासनवधक्रोधादात्मानमभिद्रुतवतां तदनुजानां भीमेन वधः ॥

भीमः—

[1]ये वाऽस्मान् प्रत्यनृत्यन्त पुरा गौरिति गौरिति ।
[2]तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ १

प्रमाणकोट्यां शयने कालकूटकभोजनम् ।
दंशनं चाहिभिस्तीक्ष्णैर् दाहो जतुगृहे च यः ॥ २

द्यूते च दोषभूयस्त्वम् अरण्ये वसतिश्च या ।
[3]इष्वस्त्राणि च सङ्ग्रामे अनिलानिलवेश्मसु ॥ ३

[4]महाक्षयश्च सङ्ग्रामेष्वसुखानि च वेश्मनि ।
विराटभवने यश्च क्लेशोऽस्माकं पृथक् पृथक् ॥ ४

शकुनेर्धार्तराष्ट्रस्य राधेयस्य च मंत्रिते ।
अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि ॥ ५

---

1. ख—इदमर्धं नास्ति
2. अ-क-ख—इदमर्धं नास्ति
3. अ—द्रौपद्याः केशपक्षस्य ग्रहणं च सुदारुणम् । [ पाठान्तरम् ]
4. क-ख-ङ—अर्धचतुष्टयं नास्ति

दुःखान्येवाभिजानीमो न सुखानि कदाचन ।
धृतराष्ट्रस्य दौरात्म्यात् सपुत्रस्य सदा वयम् ॥ ६

सञ्जयः—

इत्युच्चैर्वचनं प्रोच्य जयं प्राप्य वृकोदरः ।
पुनरेव महाराज तव सैन्यमभिद्रवत् ॥ ७

रक्तार्द्रगात्रस्तु ततो महात्मा
गदापाणिः काल इवान्तकाले ।
विभीषयानस्तव पुत्रसैन्यम्
इतस्ततो धावति वाहिनीं ते ॥ ८

ततः क्षणाद्भारत शून्यरूपम्
आयोधनं घोरतरं कुरूणाम् ।
यत्राजिमध्ये प्रापिबद्भीमसेनो
दुश्शासनस्य रुधिरं क्रोधदीप्तः ॥ ९

स हत्वा समरे राजन् राजपुत्रो महाबलः ।
पूर्णकामो मदोदग्रस् सिंहो रुरुमिवोत्कटः ॥ १०

रुधिरार्द्रो महाराज ह्यशोभत परन्तपः ॥ १०॥

सपुष्पः किंशुक इव रक्ताद्रक्ततरो बभौ ॥ ११

रुधिराक्तो घोरवेषः क्रुद्धो राजन् वचोऽब्रवीत् ॥ ११॥

भीमसेनः—

ब्रूहीदानीं पापमते नृशंस पतितो ह्यसि ॥ १२

दुश्शासने यादृशं संश्रुतं नस्
तदवाप्तं पाण्डवैस्सर्वमेतत् ।
अत्रैवमाप्स्याम्यपरं द्वितीयं
दुर्योधनं यज्ञपशुं विशस्य ॥ १३

शिरो मृदित्वाऽस्य पुनश्च शान्तिं
यास्याम्यहं कौरवाणां समक्षम् ।
या चापतिस्सा सपतिर्हि जाता
यास्तास्सपत्योऽपतयस्तु जाताः ॥ १४

पश्यन्तु चित्रं विविधं हि लोके
ये वै तिलाष्षण्डतिला बभूवुः ।
ते चेत् सुसिद्धा निधनं गताः परे
किं चित्ररूपं बत जीवलोके ॥ १५

सञ्जयः—
एतावदुक्त्वा वचनं प्रहृष्टः
प्राक्रोशदुच्चै रुधिरार्द्रवक्त्रः ।
ननर्त चैवातिबलो महात्मा
वृत्रं निहत्येव सहस्रनेत्रः ॥ १६

दृष्ट्वा तु नृत्यन्तमुदग्ररूपं
कालं यथा त्वन्तकाले प्रजानाम् ।
महद्भयं चातिरथिं विवेश
जये निराशाश्च सुतास्त्वदीयाः ॥ १७

दुश्शासने तु निहते पुत्रास्तव महारथाः ।
महत् क्रोधविषं वीरा धारयन्तोऽपलायिनः ॥ १८
ते तु राजन् महावीर्या भीमं प्राच्छादयञ् छरैः ॥ १८॥
निषङ्गी कवची खङ्गी दण्डधारो धनुर्धरः ।
अलम्बुर्जलसन्धश्च वातवेगसुवर्चसौ ॥ १९॥
एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ।
भीमसेनं महाबांहु पीडयामासुरञ्जसा ॥ २०॥
स वध्यमानो विशिखैस् समन्तात् तैर्महारथैः ।
भीमः क्रोधाभिरक्ताक्षः क्रुद्धः काल इवाबभौ ॥ २१॥
ततः परिवृतो राजन् नवभिश्शत्रुतापनैः ।
दुश्शासनादवरजैः पुत्रैस्तव वृकोदरः ॥ २२॥
तांस्तु भल्लैर्महावेगैर् नवभिर्नव भारत ।
रुक्माङ्गदान् रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ २३॥
हतेषु तव पुत्रेषु बलं तद्विप्रदुद्रुवे ।

* अ—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

पश्यतस्सूतपुत्रस्य पाण्डवस्य भयार्दितम् ॥ २४॥

ततः कर्णं महाराज प्रविवेश महद्भयम् ।

दृष्ट्वा भीमस्य विक्रान्तम् अन्तकस्य प्रजास्विव ॥ २५॥

तस्य त्वाकारभावज्ञश् शल्यस्समितिशोभनः ।

उवाच वचनं कर्णं प्राप्तकालं हितं तदा ॥* २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ७३ ॥ कर्णपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

## ॥ सप्तनवतितमोऽध्यायः ॥

दुश्शासनादिनिधनाद्बिभ्यतः कर्णस्य शल्येन प्रोत्साहनम् ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥

शल्यः—

मा व्यथां कुरु राधेय नैतत्त्वय्युपपद्यते ॥ ॥

एते द्रवन्ति राजानो भीमसेनभयार्दिताः ।

दुर्योधनश्च सम्मूढो भ्रातृव्यसनदुःखितः ॥ १॥

दुश्शासनस्य रुधिरे पीयमाने महात्मना ।

व्यापन्नचेतास्सहसा शोकोपहतचेतनः ॥ २॥

* अ—कोशे अत्राध्यायसमाप्तिर्न दृश्यते

उपासते त्वामेते हि परिवार्य महारथाः ।
कृपप्रभृतयः कर्ण हतशेषाश्च भारताः ॥ ३॥

पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः ।
त्वामेवाभिमुखाश्शूरा युद्धाय समुपस्थिताः ॥ ४॥

स त्वं पुरुषशार्दूल पौरुषे महति स्थितः ।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ ५॥

भारो हि धार्तराष्ट्रेण त्वयि सर्वस्समाहितः ।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ ६॥

जये स्याद्विपुला कीर्तिर् ध्रुवस्स्वर्गः पराजये ॥ ७

वृषसेनश्च राधेय सङ्क्रुद्धस्तनयस्तव ।
त्वयि मोहं समापन्ने पाण्डवानभिधावति ॥ ८

सञ्जयः—

एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः ।
हृदि मानुष्यकं भावं [1]चक्रे युद्धाय सुस्थिरम् ॥ ९

ततः क्रुद्धो वृषसेनोऽभ्यधावद्
भीमं समायान्तममित्रसाहम् ।
बाणैः किरन्तं प्रतियाति चोग्रं
व्यात्ताननं कालमिवापतन्तम् ॥ १०

---

1. क-ख—कृत्वा युद्धाय सोऽत्वरत्
* अ—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

तमभ्यधावन्नकुलः प्रवीरम्
आरादमित्रं प्रतुदन् पृषत्कैः ।
तं कर्णपुत्रं परमप्रहृष्टो
जिष्णुर्जिघांसुर्मघवेव जम्भहम् ॥ ११

ततो ध्वजं स्फाटिकहेमचित्रं
चिच्छेद धैर्यान्नकुलः क्षुरेण ।
कर्णात्मजस्येष्वसनं च चित्रं
[1]भल्लेन जाम्बूनदपट्टबद्धम् ॥ १२

अथान्यदादाय धनुस्स शीघ्रं
कर्णात्मजः पाण्डवमभ्यविध्यत् ।
दिव्यैरस्त्रैरभ्यवर्षत्तदैनं
कर्णस्य पुत्रो नकुलं कृतास्त्रम् ॥ १३

ततः क्रुद्धो नकुलः कर्णपुत्रं
शरैर्महोल्काभिरिवाभ्यपीडयत् ।
स कर्णपुत्रो नकुलस्य राजन्
सर्वानस्त्रान् वारयदुत्तमास्त्रैः ॥ १४

आसीत् सुघोरं भरतप्रवीर
युद्धं तदा कर्णजपाण्डवाभ्याम् ॥ १४॥

1. क-ख-घ-ङ—क्षुरेण

वनायुजान् सुकुमारान् सुशुभ्रान्
अलङ्कृताञ्जातरूपेण चित्रान् ।
जघान चाश्वान् नकुलस्य वीरो
रणाजिरे सूतपुत्रस्य पुत्रः ॥ १५।

ततो हताश्वादवरुह्य यानाच्
चर्माददे रुचिरं पद्मचित्रम् ।
आकाशसङ्काशमसिं प्रगृह्य
प्रकाशमानः खगवच्चचार ॥ १६।

ततोऽस्य पक्षाननयद्यमाय
द्विसाहस्रान्नकुलः क्षिप्रकारी ।
ते प्रापतन्नसिना वै विशस्ता
यथाऽश्वमेधे पशवश्शमित्रा ॥ १७॥

ततस्ततो विजिता युद्धशौण्डा
नानादेश्यास्सुहृदस्सत्यसन्धाः ।
एकेन शीघ्रं नकुलेन नुन्नास्
सारेप्सुनेवोत्तमचन्दनस्य ॥ १८॥

भूमौ चरन्तं नकुलं रथस्थास्
समन्ततस्सायकैः प्रत्यगृह्णन् ।
स तुद्यमानो नकुलो विहङ्गैश्
चचार सङ्ख्ये द्विषतो विनिघ्नन् ॥ १९॥

तं कर्णपुत्रो विचरन्तमाजौ
　　नराश्वमातङ्गरथप्रवीरान् ।
निघ्नन्तमष्टादशभिः पृषत्कैर्
　　विव्याध वीरस्स चुकोप युद्धे ॥　　२०॥

[1]स तेन विद्धोऽतिभृशं तरस्वी
　　महाहवे वृषसेनेन राजन् ।
[2]ततोऽभ्यधावत् समरे जिघांसुः
　　कर्णात्मजं पाण्डुसुतो नृवीरम् ॥　　२१॥

[3]वितत्य पक्षौ सहसा पतन्तं
　　श्येनं यथैवामिषलुब्धमाजौ ।
अवाकिरद्वृषसेनस्तरस्वी
　　शितैश्शरैर्नकुलमुदारवीर्यम् ॥　　२२॥

स तान् मोघांस्तस्य कुर्वन् शरौघांश्
　　चचार मार्गान् नकुलश्चित्ररूपान्[4] ।
तस्येषुभिर्व्यधमत् सूतपुत्रो
　　महारणे चर्म सहस्रतारम् ॥　　२३॥

---

1. क-ख-घ-ङ—नास्तीदमर्धम्
2. अ—नास्तीदमर्धम्
3. क-ख-घ-ङ—अर्धत्रयं नास्ति
4. अ—अथास्य तूर्णं चरतो नरेन्द्र
　　खड्गेन वीरो नकुलस्य तस्य ।　　[अधिकः पाठः]

तस्याथ कांस्यं सुशितं सुपीतम्
असिप्रवीरं गुरुभारसाहम् ।
द्विषच्छरीरासुहरं सुघोरम्
आधून्वतस्सर्पमिवास्तकोशम् ॥ २४॥

क्षिप्रं शरैष्षड्भिरमित्रसाहश्
चकर्त खड्गं निशितैस्सुधारैः ॥ २५

पुनश्च पार्थे निशितैः पृषत्कैस्
स्तनान्तरे क्षिप्रमिवात्यविध्यत् ॥ २५॥

स भीमसेनस्य रथं च गत्वा
ववर्ष वै शरवर्षं सुघोरम् ॥ २६

[1]नकुलमथ विदित्वा भिन्नबाणासनासिं
विरथमरिशरार्तं सूतपुत्रास्त्रमग्नम् ।

---

1. अ—आपुप्लुवे सिंह इवाचलाग्रं
सम्प्रेक्षमाणस्य धनञ्जयस्य ।
ततः क्रुद्धो वृषसेनो महात्मा
ववर्ष ताविषुजालेन वीरः ॥
महारथावेकरथौ समेतौ
शरैः प्रभिन्दन्निव पाण्डवेयौ ।
अन्ये च संहत्य कुरुप्रवीरास्
ततो भ्यघ्नन् शरवर्षैरुपेत्य ॥
तौ पाण्डवेयौ परितस्समन्तात्
समिध्यमानाविव हव्यवाहौ ॥ [ अधिकः पाठः ]

पवनचलपताकाह्लादिनो वल्गिताश्वाः
परपुरुषनियुक्तास्त्वै रथैश्शीघ्रमीयुः ॥ २७

द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा
द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः ।
द्विरदरथनराश्वान् सूदयन्तस्त्वदीयान्
भगवत इव रुद्रास्सञ्चयया हेतिमन्तः ॥ २८

अथ तव रथमुख्यास्तान् प्रतीयुर्ध्वजिन्यां
हृदिकसुतकृपौ च द्रौणिदुर्योधनौ च ।
शकुनिशुकवृकाश्च क्राथदेवावृधौ च
द्विरदजलदघोषैस्स्यन्दनैः कार्मुकैश्च ॥ २९

तव रथवरवर्यास्तान् दशैकप्रवीरान्
इषुभिरशनिकल्पैस्ताडयन्तो न्यरुन्धन् ।
नवजलधरवर्णैर्हस्तिभिस्तान् स्म वव्रुर्
गिरिशिखरनिकाशैर्भीमवेगैः कुणिन्दाः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

## ॥ अष्टनवतितमोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

सुकल्पिता हैमवता मदोत्कटा
रणाभिकामैः कृतिभिस्समास्थिताः ।
सुवर्णजालावतता बभुर्गजास्
तथा यथा वै जलदास्सविद्युतः ॥ १

कुणिन्दपुत्रो दशभिर्महाशरैः
कृपं ससूताश्वमताडयद्भृशम् ।
ततश्शरद्वत्सुतसायकैर्हतस्
सहैव नागेन च भूतलेऽपतत् ॥ २

कुणिन्दपुत्रावरजस्तु तोमरैर्
दिवाकरांशुप्रतिमैरयस्मयैः ।
जघान भोजस्य हयाननेकशः
क्षुरैर्विशस्तः कृतवर्मणो गजः ॥ ३

अथापरे द्रौणिशरार्दिता गजास्
त्रयस्तु सर्वायुधयोधकेतनाः ।
निपेतुरुर्व्यां व्यसवो विचेतनास्
तथा यथा वज्रहता महाचलाः ॥ ४

कुणिन्दराजावरजादनन्तरम्
स्तनान्तरे पत्रिवरैरताडयत् ।
तवात्मजस्याथ तवात्मजस्ततश्
शरैश्शरीरं बिभिदे द्विपस्य भिः ॥ ५

स नागराजस्सह राजसूनुना
पपात रक्तं बहु सर्वतः क्षरन् ।
शचीशवज्रप्रहतोऽम्बुदागमे
यथा पुरा गैरिकपर्वतस्तथा ॥ ६

कुणिन्दपुत्रप्रहितोऽपरो गजः
क्राथं ससूताश्वरथं व्यपोथयत् ।
ततोऽपतत्तस्य शरार्दितो गजो
महेन्द्रवज्राभिहतो यथा गिरिः ॥ ७

रथी द्विपस्थेन हतोऽपतच्छरैः
क्राथाधिपः पर्वतजेन दुर्जयः ।
सवाजिसूतेष्वसनध्वजस्तथा
यथा महावातहतो महाद्रुमः ॥ ८

वृको गजस्थं गिरिराजवासिनं
भृशं शरैर्द्वादशभिः पराभिनत् ।

ततो वृकं साश्वरथं महागजस्
त्वरंश्चतुर्भिश्चरणैरपोथयत् ॥ ९

स पोथितो नागवरेण वीर्यवान्
पराभिनद्द्वादशभिश्शिलीमुखैः ।
वृकेण बाणाभिहतोऽपतत् क्षितौ
स वारणो बभ्रुसुतेन सार्धम् ॥ १०

[1]कुणिन्दराजस्य सुतोऽपरस्तदा
[2]स चापि शूरस्सहसा समर्पितः ।
पपात बाणैस्सहदेवसूनुना
विषाणपुच्छापरगात्रघातिना ॥ ११

[3]गजेन वाहान् शकुनेः कुणिन्दजो
[4]निनाय वैवस्वतमन्दिरं रणे ।
रथं च संक्षुभ्य ननाद नर्दतस्
ततोऽस्य गान्धारपतिश्शिरोऽहरत् ॥ १२

---

1. ख—अयं पादो नास्ति
2. ख—चकार युद्धमपरेण दन्तिना
   क—द्विपेनदेघाप्यूथमभ्यपीडयत् [ एकपादोऽधिकः पाठः ]
3. अ—तथाऽपरश्शत्रुवरप्रमाथिना
   गजेन वाहान् शकुनेः कुणिन्दजः [ पाठान्तरम् ]
4. क-ख-घ—नास्त्ययं पादः

ततः कुणिन्देषु हतेषु तेष्वथ
प्रहृष्टरूपास्तव ते महारथाः ।
भृशं प्रदध्मुर्लवणाम्बुसम्भवान्
वरांश्च बाणासनपाणयोऽभ्ययुः ॥ १३

अथाभवद्युद्धमतीव दारुणं
पुनः कुरूणां सह पाण्डुसृञ्जयैः ।
शरासिशक्त्यृष्टिगदापरश्वथैर्
नराश्वनागासुहरं भृशाकुलम् ॥ १४

रथाश्वमातङ्गपदातयस्ततः
परस्परं विप्रहताः पतन् क्षितौ ।
यथा सविद्युत्स्तनिता जलप्रदास्
समुत्थितैर्दिग्भ्य इवोग्रमारुतैः ॥ १५

ततश्शतानीकशराहता गजा
हया रथाः पत्तिवराश्च तावकाः ।
सुपर्णवातप्रहता यथोरगास्
तथा हता गामगमन् विचूर्णिताः ॥ १६

ततोऽभ्यविद्ध्यद्बहुभिश्शितैश्शरैस्
स विन्दपुत्रो नकुलात्मजं स्मयन् ।

ततोऽस्य कायाद्विचकर्त नाकुलिश्
शिरः क्षुरेणाम्बुजसन्निभाननम् ॥ १७

ततश्शतानीकमविध्यदायसैस्
त्रिभिश्शरैः कर्णसुतोऽर्जुनं त्रिभिः ।
त्रिभिश्च भीमं नकुलं च सप्तभिर्
जनार्दनं द्वादशभिश्च सायकैः ॥ १८

ततोऽस्य कर्मातिमनुष्यकर्मणस्
समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् ।
पराक्रमज्ञाश्च धनञ्जयस्य ये
हुतोऽयमग्नाविति मेनिरे च ते ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

## ॥ एकोनशततमोऽध्यायः ॥

अर्जुनेन कर्णसूनोर्वृषसेनस्य वधः ॥

सञ्जयः—

ततः किरीटी परवीरघाती
हताश्वमालोक्य कुरुप्रवीरम् ।
[1]माद्रीसुतं नकुलं राजमध्ये
समीक्ष्य बाणैर्भृशविक्षतं च ॥ १

तमभ्यधावद्वृषसेनमुग्रो
राधासुतस्य प्रमुखेऽस्य पुत्रम् ॥ १॥

[2]तमापतन्तं तरसोग्ररूपं
कुरूत्तमं बाणसहस्रधारम् ।
अभ्यापतत् कर्णसुतो महात्मा
यथाऽमरेन्द्रं नमुचिः पुरा रणे ॥ २॥

तौ तत्र शूरौ रथकुञ्जरौ रणे
परस्परस्याभिमुखौ महारथौ ।
ससर्जतुश्शरसङ्घाननेकान्
सम्भ्रान्तरूपौ सुभृशं तदानीम् ॥ ३॥

1. क-ख—इदमर्धं नास्ति 2. ख-घ—अर्धेद्वयं नास्ति

ततोऽद्भुतेनैकरथेन पार्थं
शरेण विद्ध्वा युधि कर्णपुत्रः ।
ननाद नादान् स महानुभावो
विद्ध्वेव शक्रं नमुचिः पुरा वै ॥ ४॥

[1]पुनस्स पार्थं वृषसेन उग्रैर्
बाणैरविद्ध्यद्भुजमूले तु मध्ये ।
[2]तथैव कृष्णं नवभिस्समर्पयन्
पुनश्च पार्थं दशभिर्जघान ॥ ५॥

[3]पूर्वं तदा वृषसेनप्रयुक्तैर्
अभ्याहतश्श्वेतहयश्शरैस्तैः ।
संरम्भमीषद्गमितो वधाय
कर्णात्मजस्याशु मतिं प्रदध्रे ॥ ६॥

ततस्स रुष्टो रणमूर्ध्नि पार्थः
कृत्वा त्रिशाखां भ्रुकुटिं ललाटे ।
मुमोच राजन् विशिखान् महात्मा
[4]वधे धृतः कर्णसुतस्य सङ्ख्ये ॥ ७॥

---

1. क-ख-घ-ङ—ततोऽर्जुनं वृषसेनो भुजाग्रे
शरैरविध्यद्दशभिश्चित्रपुङ्खैः [ पाठान्तरम् ]
2. क-ख-घ-ङ—स वासुदेवं नवभिः पृषत्कैः
पुनश्च पार्थं नवभिः शिलीमुखैः । [ पाठान्तरम् ]
3. क-ख-घ-ङ—अर्धद्वयं नास्ति तथा वृषसेनेन विद्धो महाहवे
4. क-ख-घ-ङ—वधाय तूर्णं सूतपुत्रस्य सङ्ख्ये

विव्याध चैनं दशभिः पृषत्कैः
किरीटमाली वृषसेनमुग्रैः ।
चिच्छेद चास्येष्वसनं भुजौ च
क्षुरेण वीरश्शिर एव चोग्रः ॥ ८॥

स पार्थबाणाभिहतः पपात
रथाद्विबाहुर्विशिरा धरायाम् ।
सुपुष्पितो वज्रहतोऽतिमात्रो
भग्नो यथा साल इवावकृत्तः ॥ ९॥

तं पार्थबाणाभिहतं पतन्तं
सम्प्रेक्ष्य कर्णस्सुतमाशुकारी ।
रथं रथेनातिरथिर्जगाम
किरीटिनः पुत्रवधाभितप्तः ॥ १०॥

शिरः करौ चैव शरासनं च
एकेषुणा वृषसेनस्य सङ्ख्ये ।
चिच्छेद पार्थो ह्यङ्गराजस्य सैन्यं
कोपाग्निना चतुरङ्गं ददाह ॥ ११॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ७३ ॥ कर्णपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
[अस्मिन्नध्याये ११॥ श्लोकाः ]

---

## ॥ शततमोऽध्यायः ॥

रणाय कर्णार्जुनयोः समागमः ॥ १ ॥ तदवलोकनाय दिवि देवगन्धर्वादीनां समागमः ॥ २ ॥ देवासुरादीनां कर्णार्जुनसमाश्रयणेन द्वैधीभावः ॥ ३ ॥

सञ्जयः—

वृषसेनं हतं दृष्ट्वा कोपामर्षसमन्वितः ।
दुःखशोकोद्भवं वारि नेत्राभ्यां [1]समवासृजत् ॥ १

रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुम् ।
युद्धायामर्षताम्राक्षस् समाहूय धनञ्जयम् ॥ २

तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारणौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ [2]समागतौ ॥ ३

शुशुभाते महात्मानौ द्वावादित्यौ यथा दिवि ।
श्वेताश्वैः पुरुषादित्यावास्थितावरिमर्दनौ ॥ ४

रथौ चतुर्भिर्जलदैर् भगमित्राविवाम्बरे ॥ ४॥

तौ दृष्ट्वा विस्मयं जग्मुस् सर्वभूतानि मारिष ।
त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव ॥ ५॥

रथज्यातलनिर्ह्रादैर् बाणशङ्खरवैरपि ।
तौ रथावभ्यवर्तन्त क्षत्रियास्सर्वे एव हि ॥ ६॥

1. क-ख-घ—सहसाऽसृजत्   2. क-ङ—समाहितौ

ध्वजावालोक्य वीराणां विस्मयस्समपद्यत ।
हस्तिकक्ष्यां च कर्णस्य वानरं च किरीटिनः ॥ ७॥

तौ रथौ सम्प्रसक्तौ च दृष्ट्वा भारत पार्थिवाः ।
सिंहनादरवांश्चक्रुस् साधुवादांश्च पुष्कलान् ॥ ८॥

श्रुत्वा तयोर्द्वैरथं च तत्र योधास्समन्ततः ।
चक्रुर्बाहुरवं चैव तथा बाणरवं महत् ॥ ९॥

आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः ।
राधेयमभितो दध्मुश् शङ्खाञ् शतसहस्रशः ॥ १०॥

तथैव पाण्डवास्सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशस्सर्वा व्यनादयन् ॥ ११॥

क्ष्वेलितास्फोटितोत्क्रुष्टैस् तुमुलं सर्वतोऽभवत् ।
बाहुघोषैश्च शूराणां कर्णार्जुनसमागमे ॥ १२॥

तौ दृष्ट्वा पुरुषव्याघ्रौ समाने स्यन्दने स्थितौ ।
प्रगृहीतमहाचापौ शरशक्तिध्वजायुतौ ॥ १३॥

वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभितौ ।
तूणीरवरसम्पन्नौ द्वावतीव सुदर्शनौ ॥ १४॥

रक्तचन्दनदिग्धाङ्गौ सुसंरब्धाविवानलौ ।
[1]चापविद्युत्प्रभोपेतौ श्वेतच्छत्रोपशोभितौ ॥ १५॥

---

1. क-ख-घ-ङ—पञ्चार्धानि न सन्ति

सिंहस्कन्धौ सिंहभुजौ रक्ताक्षौ हेममालिनौ ।
अन्योन्यस्पर्धिनौ वीरावन्योन्यवधकाङ्क्षिणौ ॥ १६॥

अन्योन्यमभिधावन्तौ गोष्ठे गोवृषभाविव ।
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ ॥ १७॥

आशीविषसमप्रख्यौ [1]यमकालान्तकोपमौ ।
इन्द्रवृत्राविव क्रुद्धौ चन्द्रसूर्यसमप्रभौ ॥ १८॥

महाग्रहाविव क्रूरौ युगान्ताय समुत्थितौ ।
देवगर्भौ देवसमौ देवतुल्यौ च रूपतः ॥ १९॥

[2]बलिनौ समरे दृप्तौ नानाशस्त्रास्त्रधारिणौ ।
तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव वेगिनौ ॥ २०॥

बभूव परमो हर्षस् तावकानां विशां पते ॥ २१

संशयस्सर्वभूतानां विजये समपद्यत ।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ २२

उभावस्त्रविदां श्रेष्ठावुभौ तीव्रपराक्रमौ ।
[3]उभौ च बाहुशब्देन नादयन्तौ नभस्थलम् ॥ २३

[4]उभौ वरायुधधरावुभौ रणकृतश्रमौ ।

---

1. क-ख—चन्द्रसूर्यसमप्रभौ समेतौ कर्णपाण्डवौ
2. क-ख-घ-ङ—अर्धचतुष्टयं नास्ति
3. क-ख—नास्त्यर्धमिदम्
4. क-ख—इदमर्धं नास्ति

उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ॥　　　　२४

उभौ च सदृशौ युद्धे शम्बरामरराजयोः ।
[1]कार्तवीर्यसमौ चोभावुभौ दाशरथेस्समौ ॥　　　　२५

विष्णुवीर्यसमौ चोभावुभौ भवसमौ युधि ।
उभौ श्वेतहयौ राजन् रथप्रवरमास्थितौ ॥　　　　२६

सारथिप्रवरौ चापि उभौ मद्रजनार्दनौ ॥　　　　२६॥

तौ तु दृष्ट्वा महाराज भ्राजमानौ वृषाविव ।
सिद्धचारणसङ्घानां विस्मयस्समजायत ॥　　　　२७॥

धार्तराष्ट्रास्ततस्तूर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं कर्णमाहवशोभिनम् ॥　　　　२८॥

तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः ।
[2]यमौ च चेकितानश्च प्रहृष्टाश्च प्रभद्रकाः ॥　　　　२९॥

नानादेश्याश्च ये शूराश् शिष्टा युद्धाभिनन्दिनः ।
ते सर्वे सहिता हृष्टाः परिवव्रुर्धनञ्जयम् ॥　　　　३०॥

रिरक्षिषन्तश्शत्रुघ्नं पत्त्यश्वरथकुञ्जरैः ।
धनञ्जयस्य विजये धृताः कर्णवधेऽपि च ॥　　　　३१॥

तथैव तावकास्सर्वे यत्तास्सेनाप्रहारिणः ।
दुर्योधनमुखा राजन् कर्णं जुगुपुराहवे ॥　　　　३२॥

---

1. ख—अर्धद्वयं नास्ति　　　　2. अ—अर्धद्वयं नास्ति

तावकानां रणे कर्णो ग्लहो ह्यासीद्विशां पते ।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवत् तदा ॥ ३३॥

तयोस्तु सभ्यास्तत्रासन् प्रेक्षका येऽभवन् युधि ।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ३४॥

ताभ्यां वै द्यूतमारब्धं विजयायेतराय वा ।
अस्माकं पाण्डवेयानां स्थितानां रणमूर्धनि ॥ ३५॥

तौ संस्थितौ महाराज समरे युद्धशालिनौ ।
अन्योन्यं प्रति संरब्धावन्योन्यवधकाङ्क्षिणौ ॥ ३६॥

तावुभौ विजिगीषन्ताविन्द्रवृत्राविव प्रभो ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ३७॥

[1]ततोऽन्तरिक्षे सञ्जज्ञे विवादो भरतर्षभ ।
[2]तौ समेतौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ ॥ ३८॥

अर्जुनो जयतां कर्णम् इति शक्रोऽब्रवीत् तदा ।
जयतामर्जुनं कर्ण इति सूर्योऽभ्यभाषत ॥ ३९॥

इहार्जुनो मम सुतः कर्णं जयतु संयुगे ।
हत्वा कर्णो जयत्वत्र मम पुत्रो धनञ्जयम् ॥ ४०॥

इति सूर्यस्य चैवासीद् विवादो वासवस्य च ।
पक्षसंस्थितयोस्तत्र तयोर्विबुधसिंहयोः ॥ ४१॥

---

1. अ—मासीदमर्षम् 2. क-ख-घ-ङ—दशार्धानि न सन्ति

द्वैविध्यमासीद्देवानाम् असुराणां च भारत ।
यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः ॥ ४२॥

रथयूथपयोः पक्षे कुरुपाण्डववीरयोः ।
मिथो भेदश्च भूतानाम् आसीत् कर्णार्जुनान्तरे ॥ ४३॥

व्याश्रयन्त द्विधा भिन्नास् सर्वे लोकाः परन्तप ॥ ४४

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
प्रतिपक्षा ग्लहं चक्रुः कर्णार्जुनसमागमे ॥ ४५

द्यौरासीत् कर्णपक्षेऽत्र सनक्षत्रा विशां पते ।
भूर्विशाला पार्थमाता पुत्रस्य जयकाङ्क्षिणी ॥ ४६

सागरा गिरयश्चैव सरितश्च नरोत्तम ।
महीजा जलजाश्चैव व्याश्रयन्त किरीटिनम् ॥ ४७

असुरा यातुधानाश्च गुह्यकाश्च परन्तप ।
[1]कर्णस्समभवद्यत्र खेचराणि वयांसि च ॥ ४८

रत्नानि निधयस्सर्वे वेदाश्चाख्यानपञ्चमाः ।
सोपवेदोपनिषदो व्याश्रयन्त किरीटिनम् ॥ ४९

वासुकिश्चित्रसेनश्च तक्षकश्चोपतक्षकः ।
महीवियज्जलचराः काद्रवेयाश्च सान्वयाः ॥ ५०

विषवन्तो महावेगा नागाश्चार्जुनतोऽभवन् ॥ ५०॥

---

1. अ—ते कर्णं समपद्यन्त हृष्टरूपास्समन्ततः । [ अधिकः पाठः ]

ऐरावतास्सौरभेया वैशालेयाश्च भोगिनः ।
एतेऽभवन्नर्जुनस्य पापास्सर्पाश्च कर्णतः ॥ ५१॥

ईहामृगा व्यालमृगा माङ्गल्या मृगपक्षिणः ।
[1]मङ्गलाः पशवश्चैव सिंहव्याघ्रास्तथैव च ॥ ५२॥

पार्थस्य विजये राजन् सर्वे एव समाश्रिताः ॥ ५३

[2]वसवो मरुतस्साध्या रुद्रा विश्वेऽश्विनावपि ।
अग्निरिन्द्रश्च सोमश्च [3]पन्नगाश्च दिशो दश ॥ ५४

कर्णतस्समपद्यन्त श्वसृगालवयांसि च ॥ ५४॥

[4]वसवश्च महेन्द्रेण मरुतश्च सहाग्निना ।
धनञ्जयस्य ते वर्गा आदित्याः कर्णतोऽभवन् ॥ ५५॥

देवताः पितृभिस्सार्धम् ऋषयश्च परन्तप ।
तुम्बुरुप्रमुखास्सर्वे गन्धर्वा भरतर्षभ ॥ ५६॥

यमो वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः ।
देवर्षिब्रह्मर्षिगणास् सर्वे च खचराश्च ये ॥ ५७॥

[5]प्रामेयास्सहमौनेयाश् शुभाश्चाप्सरसां गणाः ।
सहाप्सरोभि [6]श्शुद्धाभिर् देवदूताश्च गुह्यकाः ॥ ५८॥

---

1. अ-ख—नास्तीदमर्धम्
2. ख—अर्धत्रयं नास्ति
3. घ—यमो वैश्रवणस्तथा
4. अ—मृगाश्च पशवश्चैव कर्णमेवाभिसंश्रिताः । [ अधिकः पाठः ]
5. ख—प्रवेयास्सह भामेया
6. क-ख-घ—शुभ्राभिर्

किरीटिनं संश्रितास्स्म पुण्यगन्धा मनोरमाः ॥ ५९

अमनोज्ञाश्च ये गन्धास् ते सर्वे कर्णमाश्रिताः ।
विपरीता[1]न्यरिष्टानि भवन्ति विनशिष्यताम् ॥ ६०

ये त्वन्तकाले पुरुषं विपरीतमुपाश्रितम् ।
प्रविशन्ति नरं क्षिप्रं मृत्युकालेऽभ्युपागते ॥ ६१

ते भावास्सहिताः कर्णं प्रविष्टास्सूतनन्दनम् ॥ ६१॥

ओजस्तेजश्च सिद्धिश्च प्रहर्षस्सत्यविक्रमौ ।
मनस्तुष्टिर्जयश्चापि तथाऽऽनन्दो नृपोत्तम ॥ ६२॥

ईदृशानि नरव्याघ्र तस्मिन् सङ्ग्रामसागरे ।
निमित्तानि च शुभ्राणि विविशुर्जिष्णुमाहवे ॥ ६३॥

ऋषयो ब्राह्मणैस्सार्धम् अभजन्त किरीटिनम् ॥ ६४

ततो देवगणैस्सार्धं सिद्धाश्च सह चारणैः ।
[2]द्विधा भूता महाराज व्याश्रयन्त नरोत्तमौ ॥ ६५

विमानानि विचित्राणि गुणवन्ति च सर्वशः ।
समारुह्य समाजग्मुर् द्वैरथं कर्णपार्थयोः ॥ ६६

अन्तरिक्षे महाराज देवगन्धर्वराक्षसाः ।
[3]दिदृक्षवस्समाजग्मुः कर्णार्जुनसमागमम् ॥ ६७

एवं सर्वेषु भूतेषु द्विधा भूतेषु भारत ।

---

1. क-ख-घ—न्यनिष्टानि
2. घ—नास्तीदमर्धम्
3. ख—इदमर्धं नास्ति

आशंसमानेषु जयं राधेयस्यार्जुनस्य च ॥ ६८

विमानायतसम्बाधम् आकाशमभवत् तदा ॥ ६८।

ईहामृगैर्व्यालमृगैर् द्विपाश्वरथपत्तिभिः ।

ऊह्यमानाः परे मेघैर् वायुनाऽनिमिषेक्षणाः ॥ ६९।

दिदृक्षवस्समाजग्मुः कर्णार्जुनसमागमम् ॥ ७०

देवदानवगन्धर्वा नागयक्षपतत्रिणः ।

महर्षयो देवगणाः पितरश्च स्वधाभुजः ॥ ७१

तपोविद्यौषधीसिद्धा नानारूपाम्बरत्विषः ।

अन्तरिक्षे महाराज विवदन्तोऽवतस्थिरे ॥ ७२

ब्रह्मा ब्रह्मर्षिभिस्सार्धं प्रजापतिभिरेव च ।

भवश्चैवास्थिता यानं दिव्यं तं देशमागमन् ॥ ७३

ततः प्रजापतिस्तूर्णम् आजगाम महीपते ।

द्वैरथं युधि तं द्रष्टुं कर्णपाण्डवयोस्तदा ॥ ७४

विजित्य कर्णस्स्विदिमां वसुन्धराम्

अथार्जुनस्स्वित् प्रतिपद्यतेऽखिलाम् ।

इतीश्वरस्यापि बभूव संशयः

प्रजापतेः प्रेक्ष्य तयोर्महद्बलम् ॥ ७५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि शततमोऽध्यायः ॥ १०० ॥

॥ ७३ ॥ कर्णपर्वणि शततमोऽध्यायः ॥ १०० ॥

[ अस्मिन्नध्याये ७५ श्लोकाः ]

## ॥ एकाधिकशततमोऽध्यायः ॥

कर्णार्जुनसमाश्रयात् लोकक्षयभीरुणा प्रजापतिना ब्रह्माणं प्रति उभयोः साम्येन जयप्रार्थना ॥ १ ॥ इन्द्रेण सकारणनिरूपणमर्जुनस्यैव जये प्रार्थिते ब्रह्मेशानाभ्यां तदङ्गीकारे देवैर्हर्षात्पुष्पवर्षणम् ॥ २ ॥

सञ्जयः—

[1]दृष्ट्वा प्रजापतिं देवास् स्वयम्भुवमचोदयन् ॥ ॥

देवाः—

कोऽनयोर्विजयी देव कुरुपाण्डववीरयोः ॥ १

कर्णार्जुनविवादेन सर्वं संशयितं जगत् ।
स्वयम्भो ब्रूहि नस्तत्त्वम् एतयोर्विजये प्रभो ॥ २

सञ्जयः—

प्रजापतिस्तु तं दृष्ट्वा देवभागं समागतम् ।
अब्रवीत्तु ततो राजन् पश्यतो वै स्वयम्भुवः ॥ ३

प्रजापतिः—

उभावतिरथौ शूरावुभौ दृढपराक्रमौ ।
उभौ सदृशकर्माणौ वज्रिचक्रायुधोपमौ ॥ ४

अहो बत महद्युद्धं कर्णार्जुनसमागमे ।
भविष्यति महाघोरं वृत्रवासवयोरिव ॥ ५

1. क-ख-ग-ङ—अर्धचतुष्टयं नास्ति

सञ्जयः—

प्रजापतिरथोक्त्वैवं स्वयम्भुवमचोदयत् ॥ ५॥

प्रजापतिः—

समोऽस्तु विजयः कामम् उभयोर्नरसिंहयोः ॥ ६

कर्णार्जुनविवादेन मा नश्येदखिलं जगत् ।
स्वयम्भो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः ॥ ७

सञ्जयः—

एवमुक्तस्तु भगवान् जये ताभ्यामनिश्चिते ।
इत्यब्रवीन्महाराज महान् ब्रह्मा प्रजापतिम् ॥ ८

ब्रह्मा—

द्वावप्येतौ हि कृतिनौ द्वावप्यतिबलोत्कटौ ।
भविष्यत्यनयोर्युद्धं त्रैलोक्यस्य भयावहम् ॥ ९

सञ्जयः—

ततः प्रजापतिं तत्र सहस्राक्षोऽभ्यचोदयत् ॥ ९॥

इन्द्रः—

विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः ॥ १०

मनस्वी बलवान् शूरः कृतविद्यस्तपोधनः ।
बिभर्ति च महातेजा धनुर्वेदमशेषतः ॥ ११
अतिक्रमेत माहात्म्याद् दिष्ट[1]मप्यतिवीर्यवान् ॥ ११॥

---

1. क-घ-ङ—मस्य स वीर्यवान् ख—मथ विपर्ययात्

अतिक्रमे च लोकानाम् अभावो नियतो भवेत् ।
नावस्थानं च पश्यामि क्रुद्धयोः कृष्णयोः क्वचित् ॥ १२॥

स्रष्टारौ जगतश्चैतौ ततश्च पुरुषर्षभौ ।
नरनारायणावेतौ पुराणावृषिसत्तमौ ॥ १३॥

अनियम्यौ नियन्तारौ जगतः पुरुषर्षभौ ॥ १४

कामं तु सुकृताँल्लोकान् प्राप्नोत्वेष परन्तपः ।
कर्णो वैकर्तनश्शूरो विजयस्तु नरे ध्रुवः ॥ १५

[1]वसूनां वा सलोकत्वं मरुतां वा समश्नुताम् ।
सहैव द्रोणभीष्माभ्यां नाकपृष्ठे महीयताम् ॥ १६

क्लेशितो हि वने पार्थो दीर्घकालं पितामह ।
तस्मादेष जयेद्युद्धे तपसाऽभ्यधिकोऽर्जुनः ॥ १७

पूर्वं भगवता प्रोक्तः कृष्णयोर्विजयो ध्रुवः ।
तत् तथास्तु नमस्तेऽस्तु प्रभो ब्रूहि पितामह ॥ १८

सञ्जयः—

तत् सहस्राक्षवचनं निशम्य भगवान् प्रभुः ।
नोवाच तज्जयं तुल्यं तयोः कर्णकिरीटिनोः ॥ १९

तस्मादाशां गतश्शक्रस् तूष्णींभूते पितामहे ॥ १९॥

विजयं पाण्डवेयस्य वधं कर्णस्य चाहवे ।

1. ख—अर्धपङ्क्तं नास्ति

ब्रह्मेशानौ ततो वाक्यम् ऊचतुर्भुवनेश्वरौ ॥ २०॥

ब्रह्मेशानौ—

[1]विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः[2] ॥ २१

सञ्जयः—

[3]तथोक्ते देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः ।
[4]आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात् ॥ २२

इन्द्रः—

श्रुतं भवद्भिर्यत् प्रोक्तं भगवद्भ्यां जगद्धितम् ।
तत्तथा व्येतु वो रोगश् शमाप्नुत विमन्यवः ॥ २३

---

1. ख—इदमर्धं नास्ति

2. अ—खाण्डवे येन हुतभुक् तोषितस्सव्यसाचिना ।
 स्वर्गं च समनुप्राप्य साहाय्यं शक्र ते कृतम् ॥
 कर्णेन दानवः पक्षो ह्यतः कार्यः पराजयः ।
 एवं कृते भवेत् कार्यं देवानामिति निश्चितम् ॥ [ अधिकः पाठः ]

3. क-ङ—मनस्वी जयवाञ्छूर कृतविद्यस्तपोधनः ।
 बिभर्ति च महातेजा धनुर्वेदमशेषतः ॥
 अतिक्रमेच्च माहात्म्याद्दिष्टमस्य स वीर्यवान् ।
 अतिक्रमे च लोकानामभावो नियतो भवेत् ॥
 न च विद्य व्यवस्थानं कृष्णयोः क्रुद्धयोः क्वचित् ।
 स्रष्टारौ जगतश्चैव सतश्च पुरुषर्षभौ ॥
 नरनारायणावेतौ पुराणावृषिसत्तमौ ।
 अनियाम्यौ नियन्तारौ जगतः पुरुषर्षभौ ॥
 कामं तु सुकृताँल्लोकान् प्राप्नोत्वेष परन्तपः ।
 कर्णो वैकर्तनश्शूरो विजयस्तु नरे ध्रुवः ॥ [ अधिकः पाठः ]

4. अ—नास्तीदमर्धम्

सञ्जयः—

इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष ।
[1]विस्मितान्यभवन् राजन् पूजयाञ्चक्रिरे तदा ॥ २४
नोचुस्तदा जयं तुल्यं तयोः पुरुषसिंहयोः ॥ २४॥

ससृजुश्च सुगन्धीनि नानारूपाणि हर्षिताः ।
पुष्पवर्षाणि विबुधा देवतूर्याणि चानदन् ॥ २५॥

दिदृक्षयाऽऽगतास्सर्वे द्वैरथं नरसिंहयोः ।
विस्मयोत्फुल्लनयना नान्या बुबुधिरे क्रियाः ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥
॥ ७३ ॥ कर्णपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

---

1. क-ख—इदमर्धं नास्ति

## ॥ द्व्यधिकशततमोऽध्यायः ॥

शल्यकर्णयोः संलापः ॥ १ ॥ कृष्णार्जुनयोः संलापः ॥ २ ॥ अर्जुनेन कृष्णं प्रति स्वसामर्थ्यकथनम् ॥ ३ ॥

सञ्जयः—

रथौ तयोश्श्वेतहयैर् युक्तौ दिव्यौ महास्वनौ ।
समास्थिता लोकवीराश् शङ्खान् दध्मुः पृथक् पृथक् ॥ १
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत ॥ १॥

तद्भीरुसंत्रासकरं युद्धं समभवत् तदा ।
अन्योन्यस्पर्धिनोर्घोरं शक्रशम्बरयोरिव ॥ २॥

तयोर्ध्वजौ हि विमलौ शुशुभाते शुभाकृती ।
[1]राहुकेतू यथाऽऽकाश उदितौ जगतः क्षये ॥ ३॥

पृथग्ज्वलन्तौ सज्जेतां क्रुद्धौ युद्धे परस्परम् ॥ ४

कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।
पुरन्दरध्वजप्रख्या हस्तिकक्ष्या व्यराजत ॥ ५

कपिश्रेष्ठस्तु पार्थस्य व्यादितास्यो भयावहः ।
भीषयन्निव दंष्ट्राभिर् दुर्निरीक्ष्यो रविर्यथा ॥ ६

क्रुद्धोऽभिलषितं गत्वा ध्वजो गाण्डीवधन्वनः ।

---

1. क-ख-ब—नास्तीदमर्धम्

कर्णध्वजमुपातिष्ठत् स्वस्थानाद्वेगवान् कपिः ॥　७

उत्पत्य च महावेगः कक्ष्यामभ्यहनत् तदा ।
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ॥　८

सा किङ्किणीकाभरणा कालपाशोपमाऽपरा ।
अभ्यद्रवत संरब्धा नागकक्ष्याऽपि तं कपिम् ॥　९

तयोर्घोरतरे युद्धे द्वैरथे द्यूत आहिते ।
प्रकुर्वाते ध्वजौ युद्धं प्रत्यहेषन् हयान् हयाः ॥　१०

अविध्यत् पुण्डरीकाक्षं शल्यो नयनसायकैः ।
तं चापि पुण्डरीकाक्षस् तथैव समुदैक्षत ॥　११

तत्राजयद्वासुदेवश् शल्यं नयनसायकैः ।
कर्णं चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनञ्जयः ॥　१२

अथाब्रवीत् सूतपुत्रश् शल्यमाभाष्य सस्मितम् ॥　१२॥

कर्णः—

यदि पार्थो रणे हन्याद् अद्य मामिह कर्हिचित् ।
किमुत्तरं तदा ते स्यात् सत्यमेतद्ब्रवीहि मे ॥　१३॥

शल्यः—

यदि कर्ण रणे हन्याद् अद्य त्वां श्वेतवाहनः ।
उभावेकरथेनाहं हन्यां माधवपाण्डवौ ॥　१४॥

सञ्जयः—

एवमेव तु गोविन्दम् अर्जुनोऽप्यभ्यभाषत ।

तं प्रहस्याब्रवीत् कृष्णः पार्थं परमिदं वचः ॥ १५॥

श्रीभगवान्—

पतेद्दिवाकरस्स्थनाच्छीर्येद्भूमिरनेकधा ।
शैत्यमग्निरियाद्धि त्वां कर्णो हन्याद् धनञ्जय ॥ १६॥

यदि त्वेतत् कथञ्चित् स्याल्लोके पर्यसनं भवेत् ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ १७॥

सञ्जयः—

इति कृष्णवचश्श्रुत्वा प्रहसन् कपिकेतनः ।
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ १८॥

अर्जुनः—

ममैव तु न पर्याप्तौ कर्णशल्यौ जनार्दन ॥ १९

सपताकध्वजं कर्णं सशल्यरथवाजिनम् ।
सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ॥ २०

तं पश्याद्य मया कृष्ण शरैः क्षिप्तं धरातले ॥ २०॥

अद्यैनं सरथं साश्वं सशक्ति[1]कवचायुधम् ।
सञ्चूर्णितमिवामर्दे वृक्षं पश्याद्य दन्तिना ॥ २१॥

अद्य राधेयभार्याणां वैधव्यं समुपस्थितम् ।
ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव ॥ २२॥

ध्रुवमद्यैव द्रष्टासि विधवाः कर्णशल्ययोः ॥ २३

---

1. क-ख-घ—वरकार्मुकम्

न हि मे शाम्यते मन्युर् यदनेन पुरा कृतम् ॥ २३॥

कृष्णां सभां गतां दृष्ट्वा मूढेनादीर्घदर्शिना ।
[1]अस्मांस्तथाऽपहसता जल्पता च पुनः पुनः ॥ २४॥

अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया ।
वारणेनेव मत्तेन पुष्पितं जगतीरुहम् ॥ २५॥

अद्य ता मधुरा वाचश् श्रोतासि मधुसूदन ।
दिष्ट्या जयसि गोविन्द इति कर्णे निपातिते ॥ २६॥

अद्याभिमन्युजननीम् [2]अनृणस्सांत्वयिष्यसि ।
कुन्तीं पितृष्वसारं च सम्प्रहृष्टो जनार्दन ॥ २७॥

अद्य बाष्पमुखीं कृष्णां समाश्वासय माधव ।
वाग्भिश्चामृतकल्पाभिर् धर्मराजं युधिष्ठिरम् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ७३ ॥ कर्णपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

---

1. क-ख-घ-ङ—नासीदमर्षम्
2. ख-घ-ङ—अनृणां

## ॥ त्र्यधिकशततमोऽध्यायः ॥

कर्णार्जुनयोर्युद्धारम्भः ॥ १ ॥ द्रौणिना दुर्योधनाय हिताख्यानम् ॥ २ ॥ तेन तदनादृत्य रणाय सेनानियोजनम् ॥ ३ ॥

सञ्जयः—

तद्देवनागासुरसिद्धयक्ष-
गन्धर्वरक्षोप्सरसां च सङ्घैः ।
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं
बभौ वियद्विस्मयनीयरूपम् ॥ १

नानद्यमानं निनदैर्मनोज्ञैर्
वादित्रगीतस्तुतिहासनृत्तैः ।
सर्वेऽन्तरिक्षं ददृशुर्मनुष्याः
खस्थाश्च तान् विस्मयनीयरूपान् ॥

ततः प्रहृष्टाः कुरुपाण्डुमुख्या
वादित्रपत्रायुधसिंहनादैः ।
संनादयन्तो वसुधां दिशश्च
स्वनेन सर्वे द्विषतो निजघ्नुः ॥ ३

रथाश्वमातङ्गनरायुतं तदा
शरासिशक्त्यृष्टिनिपातदुस्सहम् ।

अभीरुजुष्टं हतदेहसङ्कुलम्
रणाजिरं लोहितरक्तमाबभौ ॥ ४

तथा प्रवृत्ते सुभृशं परन्तपौ
धनञ्जयश्चातिरथिश्च सायकैः ।
दिशश्च सर्वा निशितैरजिह्मगैः
परस्परं प्रावृणुतां च दंशितौ ॥ ५

ततस्त्वदीयाश्च परे च सायकैः
कृतेऽन्धकारे विविदुर्न किञ्चन ।
भयात्तु तावेव रथौ समाश्रयंस्
तमोनुदं स्वप्रसृता इवांशवः ॥ ६

ततोऽस्त्रमस्त्रेण परस्परं च तौ
विधूय वाताविव पूर्वपश्चिमौ ।
घनान्धकारे विगते तमोनुदौ
यथोदितौ तद्वदतीव रेजतुः ॥ ७

न चाभिसर्तव्यमिति प्रचोदिताः
परे त्वदीयाश्च तथाऽवतस्थिरे ।
महारथौ तौ परिवार्य सर्वतस्
सुरासुरा वासवशम्बराविव ॥ ८

मृदङ्गभेरीपणवानकस्वनैर्
निनादितौ वाहनशङ्खनिस्वनैः ।
तौ सिंहनादैर्बभतुर्नरोत्तमौ
[1]शशाङ्कसूर्याविव मेघसम्प्लवे ॥ ९

महाधनुर्मण्डलमध्यगोचरौ
सुवर्चसौ बाणसहस्रदीधिती ।
दिधक्षमाणौ सचराचरं जगद्
युगान्तसूर्याविव दुस्सहौ युधि ॥ १०

उभावजय्यावहितान्तकावुभा-
वुभौ जिघांसू कृतिनौ परस्परम् ।
महाहवे वीरतरौ समीयतुस्
सुरेन्द्रजम्भाविव कर्णपाण्डवौ ॥ ११

ततो महास्त्राणि महाधनुर्धरौ
विमुञ्चमानाविषुभिर्भयानकैः ।
रथान् द्विपांश्चापि तथा हयान् नरान्
परस्परं जघ्नतुरुत्तमेषुभिः ॥ १२

ततो विसस्रुः पुनरर्दितास्शरैर्
नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।

---

1. क-रु—पतङ्गचन्द्राविव दुस्सहावुभौ

सनागपत्त्यश्वरथा दिशो द्रुतास्
तथा यथा सिंहभयाद्वनौकसः ॥ १३

ततस्तु दुर्योधनभोजसौबलाः
कृपो गुरोश्चापि सुतो महाहवे ।
महारथाः पञ्च धनञ्जयाच्युतौ
शरै [1]श्शरीरान्तकरैरताडयन् ॥ १४

धनूंषि तेषामिषुधीन् हयान् द्विपान्
रथांश्च सूतांश्च धनञ्जयश्शरैः ।
समं प्रचिच्छेद पराभिनच्च तान्
शरोत्तमैर्द्वादशभिश्च सूतजम् ॥ १५

अथाभ्यधावंस्त्वरितास्शतं रथाश्
शतं च नागा जयमाततायिनः ।
शकास्तुरङ्गैर्यवनाश्च सादिनस्
सहैव काम्भोजवरैर्जिघांसवः ॥ १६

वरायुधैः प्राणिशतं शरैस्सह
क्षुरैर्निकृत्तान्यपतञ् शिरांसि च ।
हयाश्च नागाश्च रथाश्च युध्यता
धनञ्जयेनारिगणाः [2]क्षता इति ॥ १७

1. क—शरीरातिदरै घ-ङ—शरीरार्ति
2. क-ख-घ-ङ—क्षिताविह

ततोऽन्तरिक्षे सुरतूर्यनिस्स्वनास्
ससाधुवादा हृषितैस्समीरिताः ।
निपेतुरप्युत्तमपुष्पवृष्टयस्
सुरूपगन्धाः पवनेरिताश्शुभाः ॥ १८

तदद्भुतं देवमनुष्यसाक्षिकं
समीक्ष्य भूतानि विसिष्मिरे नृप ।
तवात्मजस्सूतसुतश्च तावुभौ
न विस्मयं जग्मतुरेकनिश्चयौ ॥ १९

अथाब्रवीद्द्रोणसुतस्तवात्मजं
करं करेण प्रतिपीड्य सान्त्वयन् ॥ १९॥

अश्वत्थामा—

प्रसीद दुर्योधन शाम्य पाण्डवैर्
अलं विरोधेन धिगस्तु विग्रहम् ॥ २०

हतो गुरुर्ब्रह्मसमो महास्त्रवित्
तथैव भीष्मप्रमुखा [1]महारथाः ।
अहं त्ववध्यो मम चैव मातुलः
प्रशाधि राज्यं सह पाण्डवैश्चिरम् ॥ २१

धनञ्जयस्स्थास्यति वारितो मया
जनार्दनो नैव विरोधमिच्छति ।

1. क-ख—नराधिपाः

युधिष्ठिरो भूतहिते रतस्सदा
वृकोदरस्तद्वशगस्तथा यमौ ॥ २२

त्वया च पार्थेन कृते च संविदे
प्रजास्सुखं प्राप्नुयुरिच्छया तव ।
व्रजन्तु शेषास्स्वपुराणि पार्थिवा
निवृत्तवैराश्च भवन्तु सैनिकाः ॥ २३

न चेद्वचश्श्रोष्यसि मे नराधिप
ध्रुवं हि तप्तासि हतोऽरिभिर्युधि ॥ २३॥

वृद्धं पितरमालोक्य गान्धारीं च यशस्विनीम् ।
कृपालुर्धर्मराजो हि याचितश्शममेष्यति ॥ २४॥
यथोचितं च वै राज्यम् अनुज्ञास्यति ते प्रभुः ।
विपश्चित् सुमतिर्धीरस् सर्वशास्त्रार्थतत्त्ववित् ॥ २५॥
वैरं नेष्यति धर्मात्मा स्वजने नास्त्यतिक्रमः ।
न विग्रहमतिः कृष्णस् स्वजने प्रतिनन्दति ॥ २६॥
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवमते चैव पाण्डवस्य च धीमतः ॥ २७॥
स्थास्यन्ति पुरुषव्याघ्रास् तयोर्वचनगौरवात् ॥ २८
रक्ष दुर्योधनात्मानम् आत्मा सर्वस्य भाजनम् ।
जीवने यत्नमातिष्ठ जीवन् भद्राणि पश्यति ॥ २९

राज्यं श्रीश्चैव भद्रं ते जीवमाने तु कल्पते ।
मृतस्य खलु कौरव्य नैव राज्यं कुतस्सुखम् ॥ ३०

लोकवृत्तमिदं वृत्तं प्रवृत्तं पश्य भारत ।
शाम्य त्वं पाण्डवैस्सार्धं शेषं कुरु कुलस्य च ॥ ३१

मा भूत् स कालः कौरव्य यदाऽहमहितं वचः ।
ब्रूयां कामं महाबाहो माऽवमंस्था वचो मम ॥ ३२

धर्मिष्ठमिदमत्यर्थं राज्ञश्चैव कुलस्य च ।
एतद्धि परमं श्रेयः कुरुवंशस्य वृद्धये ॥ ३३

प्रजाहितं च गान्धारे कुलस्य च सुखावहम् ॥ ३३॥

पथ्यमायतिसंयुक्तं कर्णोऽप्यर्जुनमाहवे ।
न जेष्यति नरव्याघ्रम् इति मे निश्चिता मतिः ॥ ३४॥

रोचतां ते नरश्रेष्ठ ममैतद्वचनं शुभम् ।
अतोऽन्यथा हि राजेन्द्र विनाशस्सुमहान् भवेत् ॥ ३५॥

इदं च दृष्टं जगता सह त्वया
कृतं यदेकेन किरीटमालिना ।
यथा न कुर्याद्बलहा न चान्तको
न च प्रचेता भगवान् न यक्षराट् ॥ ३६॥

अतोऽपि भूयांश्च गुणैर्धनञ्जयो
न चातिभेत्स्यत्यखिलं वचो मम ।

तवानुयात्रां च सदा करिष्यति
प्रसीद राजेन्द्र शमं त्वमाप्नुहि ॥ ३७॥

ममाभिमानः परमस्सदा त्वयि
ब्रवीम्यतस्त्वां परमाच्च सौहृदात् ।
निवारयिष्यामि च कर्णमाहवा-
न्महान् हि मेऽस्ति प्रणयोऽत्र सूतजे ॥ ३८॥

वदन्ति मैत्रीं सहजां विचक्षणास्
तथैव साम्ना च धनेन चोर्जिताम् ।
प्रतापतश्चोपनतां चतुर्विधां
तदस्ति सर्वं त्वयि पाण्डवेषु च ॥ ३९॥

निसर्गतस्ते तव वीर बान्धवाः
पुनश्च साम्ना हितमाप्नुयुः प्रभो ।
त्वयि प्रसन्ने यदि मित्रतामियुर्
हितं कृतं स्याज्जगतस्त्वयाऽतुलम् ॥ ४०॥

सञ्जयः—

इतीदमुक्तस्सुहृदा वचो हितं
विचिन्त्य निश्श्वस्य च दुर्मना ब्रवीत् ॥ ४१

दुर्योधनः—

यथा भवानाह सखे तथैव त-
न्ममापि विज्ञापयतो वचश्शृणु ।

निहत्य दुश्शासनमुक्तवान् बहु
   प्रहस्य शार्दूलवदेष दुर्मतिः ॥ ४२

वृकोदरस्तद्धृदये मम स्थिरं
   न तत् परोक्षं भवतः कुतश्शमः ॥ ४२॥

न चापि कर्णं प्रसहेद्रणेऽर्जुनो
   महागिरिं मेरुमिवोग्रमारुतः ।
न चाश्वसिष्यन्ति पृथात्मजा मयि
   प्रसज्य वैरं बहुशो विषह्य च ॥ ४३॥

न चापि कर्णं गुरुपुत्र संयुगाद्
   उपारमेत्यर्हसि वीर भाषितुम् ।
श्रमेण युक्तो महताऽद्य फल्गुनस्
   तमेष कर्णः प्रसभं हनिष्यति ॥ ४४॥

वसुन्धरायाः परिवर्तनं भवेद्
   व्रजेच्च शोषं मकरालयोऽर्णवः ।
प्लवेयुरप्यद्रिवरा महाम्बुधौ
   न चार्जुनो जेष्यति कर्णमाहवे ॥ ४५॥

अपां पृथिव्या नभसो नभस्वतस्
   सुतिग्मदीप्तेश्च हिरण्यरेतसः ।

अभाव एषामपि सर्वतो भवे-

न्न चार्जुनो जेष्यति कर्णमाहवे ॥ ४६॥

सञ्जयः—

तमेवमुक्त्वाऽप्यनुनीय चासकृत्

तवात्मजस्त्वाननुनीय सैनिकान् ॥ ४७

दुर्योधनः—

द्रुतं घ्नताभिद्रवताहितानिमान्

अदीनसत्त्वाः किमु जोषमास्यते ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ७३ ॥ कर्णपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
[ अस्मिन्नध्याये ४७॥ श्लोकाः ]

---

## ॥ चतुरधिकशततमोऽध्यायः ॥

रणे कर्णस्यार्जुनसाम्यमसहमानेन भीमेन सकोपं पार्थप्रोत्साहनम् ॥

---

सञ्जयः—

तौ शङ्खभेरीनिनदे समृद्धे

समीयतुश्श्वेतहयौ नराग्र्यौ ।

वैकर्तनस्सूतसुतोऽर्जुनश्च

दुर्मन्त्रिते ते ससुतस्य राजन् ॥ १

आशीविषावग्निमिवापधूमं
वैरं मुखाभ्यामभिनिश्श्वसन्तौ ।
यशस्विनौ जज्वलतुर्मृधे तदा
घृतावसिक्ताविव हव्यवाहौ ॥ २

यथा गजौ हैमवतौ प्रभिन्नौ
प्रगृह्य दन्ताविव वाशितार्थे ।
तथा समाजग्मतुरुप्रवीर्यौ
धनञ्जयश्चातिरथिश्च वीरौ ॥ ३

वलाहकेनेव यथा वलाहको
यदृच्छया वै गिरिणा गिरिर्यथा ।
तथा धनुर्ज्यातलनेमिनिस्स्वनौ
समीयतुस्ताविषुवर्षवर्षिणौ ॥ ४

[1]शरास्त्रशक्त्यृष्टिगदासिसर्पौ
रोषानिलोद्धूतशरोर्मिमालिनौ ।
यथाऽचलौ द्वौ चलतस्तथा तौ
[2]यथाऽर्णवौ तौ ययतुर्युगान्ते ॥ ५

प्रभिन्नशृङ्गद्रुमवीरुदोषधी
प्रवृद्धनानाविधनिर्झरौकसौ ।

---

1. अ—अयं पादो नास्ति
2. क-ख—नराणवौययतुस्तथाऽऽजौ [ पादोऽयं – अधिकः पाठः ]

यथाऽचलौ वा चलितौ महाबलैस्
तथा महास्त्रैरितरेतरं घ्नतः ॥ ६

स सन्निपातो रथयोर्महानभूत्
सुरेन्द्रवैरोचनयोरिवानयोः ।
शरैर्वितुन्नाश्वनियन्तृदेहयोस्
सुदुस्सहोऽस्त्रैः परिभिन्नदेहयोः ॥ ७

प्रभूतपद्मोत्पलमत्स्यकच्छपौ
महाह्रदौ पक्षिगणानुनादितौ ।
सुसन्निकृष्टावनिलोद्धतौ यथा
तथा रथौ तौ ध्वजिनौ समीयतुः ॥ ८

उभौ महेन्द्रस्य समानविक्रमा-
वुभौ महेन्द्रप्रतिमौ महारथौ ।
महेन्द्रवज्रप्रतिमैर्महाशरैर्
महेन्द्रवृत्राविव सम्प्रजघ्नतुः ॥ ९

सनागपत्त्यश्वरथे उभे बले
विचित्रवर्माभरणाम्बरायुधे ।
चकम्पतुश्चोन्नदतुश्च विस्मयाद्
धरा वियच्चार्जुनकर्णसङ्गमे ॥ १०

भुजास्सवज्राङ्कुलयस्समुच्छ्रितास्
ससिंहनादामुदितैर्दिदृक्षुभिः ।
यदाऽर्जुनं मत्त इव द्विपो द्विपं
समभ्ययादातिरथिर्जिघांसया ॥ ११

ततः कुरूणामथ सोमकानां
शब्दो महान् प्रादुरभूत् समन्तात् ।
यदाऽर्जुनं सूतपुत्रोऽपराह्णे
महाहवे शैलमिवाम्बुदोऽछेत् ॥ १२

तदैव चासीद्रथयोस्समागमो
महारणे शोणितमांसकर्दमे ॥ १२॥

उदक्रोशन् सोमकास्तत्र पार्थं
त्वरस्व याह्यर्जुन युध्य कर्णम् ।
छिन्ध्यस्य मूर्धानमलं चिरेण
श्रद्धां च राज्याद्धृतराष्ट्रसूनोः ॥ १३॥

तथाऽस्मदीया बहवोऽत्र योधाः
कर्णं तथा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण ततस्सुदीनाः
पुनर्वनं यान्त्वचिरेण पार्थाः ॥ १४॥

कर्णोऽथ पूर्वं दशभिः पृषत्कैर्
गाण्डीवधन्वानमविध्यदाशु ।
जघान तं चापि ततः किरीटी
शरैस्तदाऽष्टादशभिस्सुमुक्तैः ॥ १५॥
पुनश्च कर्णस्त्वरितोऽथ पार्थं
रथेषुभिस्तं दशभिर्जघान ।
तं चापि पार्थो दशभिश्शिताग्रैः
कक्ष्यान्तरे तीक्ष्णमुखैरविध्यत् ॥ १६॥
कर्णस्ततो भारत साम्पराये
घोरेऽतिवेलं रणसंविमर्दी ।
जघान पार्थं नवभिश्शिताग्रैः
कक्ष्यान्तरे नागमिव प्रभिन्नम् ॥ १७॥
ततोऽपराभ्यां युधि सूतपुत्रो
द्वाभ्यां क्षुराभ्यां हरिमाशुकारी ।
समाजघान त्वरया महात्मा
यथा सुरेन्द्रं नमुचिः प्रसह्य ॥ १८॥
तं पाण्डवः पञ्चभिरायसाग्रैर्
आकर्णपूर्णैर्निजघान कर्णम् ।
ते शोणितं तस्य पपुस्तदानीं
कालस्य दूता इव पार्थबाणाः ॥ १९॥

कर्णोऽपि पार्थं सहवासुदेवं
समाचिनोद्भारत वत्सदन्तैः ।
परस्परं तौ विशिखैः प्रमुक्तैस्
ततक्षतुस्सूतपुत्रोऽर्जुनश्च ॥ २०॥
परस्परच्छिद्रदिदृक्षया च
सुभीममभ्याययतुः प्रहृष्टौ ॥ २१
ततोऽस्त्रमाग्नेयममित्रतापनं
मुमोच कर्णाय सुरेश्वरात्मजः ।
धनञ्जयस्संयुगमूर्धनि त्वर-
न्नथ प्रजज्वाल तदस्त्रमुत्तमम् ॥ २२
समीक्ष्य कर्णो ज्वलनास्त्रमुद्यतं
स वारुणं तत्प्रशमार्थमाहवे ।
समुत्सृजत् सूतसुतः प्रतापवान्
स तेन वह्निं शमयांबभूव ह ॥ २३
बलाहकास्त्रेण दिशस्तरस्वी
चकार सर्वास्तिमिरेण संवृताः ।
अपावहन्मेघगणांस्ततस्तान्
समीरणास्त्रेण समीरितेन सः ॥ २४
ततश्च सोऽस्त्रं दयितं देवराज्ञः
प्रादुश्चक्रे वज्रममित्रतापनः ।

गाण्डीवज्यां विमृशंश्चातिमन्युर्
धनञ्जयश्शत्रुसङ्घप्रमाथी ॥ २५

नाराचनालीकवराहकर्णा
गाण्डीवतः प्रादुरासन् सुतीक्ष्णाः ।
सहस्रशो वज्रसमानवेगास्
ते सर्वतः पर्यधावन्त घोराः ॥ २६

पार्थेषवः कर्णरथं विहङ्गा
अयोमुखाः पक्षिगणा दिनान्ते ।
निशानिकेतार्थमिवाशु वृक्षं
जग्राह तान् सूतपुत्रः पृषत्कैः ॥ २७

क्षिप्तांस्तथा पाण्डवबाणसङ्घान्
अमृष्यमाणस्य धनञ्जयस्य ।
रणाजिरे त्वन्तकतुल्यकर्मा
वैकर्तनो रोषपरीतचेताः ॥ २८

[1]दृढार्यमानश्च समुद्रघोषः
प्रादुश्चक्रे भार्गवास्त्रं महात्मा ।
महेन्द्रशस्त्राभिमुखान् विमुक्तांश्
छित्वा कर्णः पाण्डवस्येषुसङ्घान् ॥ २९

1. अ—कोश एकस्मिन्नेव चतुर्दशार्धानि वर्तन्ते

तस्यास्त्रमस्त्रेण निहत्य सोऽथ
जघान सङ्ख्ये रथनागपत्तीन् ।
अमृष्यमाणश्च महेन्द्रकर्मा
महारणे भार्गवास्त्रप्रतापात् ॥ ३०

पाञ्चालानां प्रवरांश्चापि योधान्
क्रोधाविष्टस्सूतपुत्रस्तरस्वी ।
अभ्यर्दयद्बाणगणैः प्रसह्य
विद्ध्वा हयान् सङ्गते सूतपुत्रः ॥ ३१

ते भिन्नदेहा व्यसवो निपेतुः
कर्णेषुभिर्भूमितले स्वनन्तः ।
क्रुद्धेनं सिंहेन यथेभयूथा
महागजा भीमबलेन तद्वत् ॥ ३२

पाञ्चालानां प्रवरान् सन्निहत्य
प्रसह्य योधान् शतशो नृवीरः ।
ततस्स राजन् विरराज कर्णो
यथाऽम्बरे भास्कर उग्ररश्मिः ॥ ३३

कर्णस्य मत्वा तु जयं त्वदीया
मुदा युतास्सिंहनादांश्च चक्रुः ।
सर्वे ह्यमन्यन्त भृशाहतौ च
कर्णेन कृष्णाविति कौरवेन्द्र ॥ ३४

तत् तादृशं प्रेक्ष्य च कर्म चाजौ
कर्णस्य वीर्यं च परैरसह्यम् ।
कृष्णं च कर्णेन धनञ्जयं च
तदाऽऽजिमध्ये निहतं तदस्त्रम् ॥ ३५

[1]ज्योतिष्प्रभां यद्वदुपागतस्सन्
दिवाकरो नाशयते क्षणेन ।
पार्थस्य तान् बाणगणान् समग्रान्
व्यनाशयद्युध्यत एव कर्णः ॥ ३६

रोषात् प्रदीप्तस्सुमहाविमर्दे
भीमस्ततोऽक्रुध्यददीनसत्त्वः ।

1. अ—ततस्त्वमर्षी क्रोधसन्दीप्तनेत्रो
वातात्मजः पाणिना पाणिमृच्छन् ।
भीमोऽब्रवीदर्जुनं सत्यसन्धम्
अमर्षितो निश्वसन् जातमन्युः ॥
भीमः—
कथं नु पापोऽयमपेतधर्मा
सूतात्मजस्समरे तु प्रसह्य ।
पाञ्चालानां योधमुख्याननेकान्
निजघ्निवांस्तव जिष्णोस्समक्षम् ॥
पूर्वं देवैरजितं कालकेयैस्
साक्षात् स्थाणोर्बाहुसंस्पर्शमेत्य ।
त्वया क्षिप्तानहनद्बाणसङ्घान्
आश्चर्यमेतत् प्रतिभाति मेऽद्य ॥
सञ्जयः— [अधिकः पाठः]

पार्ष्णिं स्वपाणौ स विनिष्पिष्य रोषाद्
अमर्षितो वाक्यमुवाच पार्थम् ॥ ३७

भीमः—

त्वां सूतपुत्रो नु कथं किरीटिन्
रथेषुभिर्हन्ति शिताग्रधारैः ।
धृत्या हि भूतानि ययाऽजयस्त्वं
ग्रासं ददत् खाण्डवे पावकाय ॥ ३८

धृत्या तया सूतपुत्रं जहि त्वम्
अहं वैनं गदया पोथयिष्ये ।
समेत्य पार्थं सुनृशंसवादी
जीवन् नायं यास्यति कालपक्वः ॥ ३९

सञ्जयः—

अथाब्रवीच्चक्रधरोऽपि पार्थं
दृष्ट्वा रथेषून् प्रतिहन्यमानान् ॥ ३९॥

श्रीभगवान्—

अमूमुषत्पश्यत एव तेऽद्य
शस्त्राणि कर्णोऽस्त्रगणैः किरीटिन् ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

॥ ७३ ॥ कर्णपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

कर्णे युधि वर्धमाने कृष्णेनार्जुनप्रोत्साहनम् ॥ १ ॥ ततोऽर्जुनेन स्वसामर्थ्यप्रकाशनम् ॥ २ ॥

श्रीभगवान्—

स पार्थ किं मुह्यसि वेत्सि चैतान्
हृष्टान् समेतान् नदतः कुरूंस्त्वम् ।
कर्णं पुरस्कृत्य विदुर्हि सर्वे
तवास्त्रमस्त्रैर्विनिहन्यमानम् ॥ १

यया धृत्या तामसान् जघ्निवांस्त्वं
युगे युगे राजसांश्चातिघोरान् ।
दम्भोद्भवं चासुरमाहवे त्वं
दर्पोत्सिक्तं वीर्यवन्तं किरीटिन् ॥ २

तया धृत्या त्वं जहि कर्णमद्य
पार्थाहवे त्यक्तुमस्त्रं समर्थः ॥ २॥

अनेन वाऽऽशु क्षुरनेमिनाऽद्य
मया निसृष्टेन सुदर्शनेन ।
छिन्ध्यस्य मूर्धानमरेः प्रसह्य
वज्रेण शक्रो नमुचेरिवारेः ॥ ३॥

किरातरूपी भगवान् यया च
त्वया महात्मा परितोषितोऽभूत् ।
स तां पुनर्वीर धृतिं गृहीत्वा
सहानुबन्धं जहि सूतपुत्रम् ॥ ४॥

ततो महीं सागरमेखलां त्वं
सपत्तनग्रामवतीं समृद्धाम् ।
प्रयच्छ राज्ञे निहतारिसङ्घां
यशश्च पार्थातुलमाप्नुहि त्वम् ॥ ५॥

कर्णं पुरस्कृत्य नदन्ति सर्वे
तवास्त्रमुक्त्या प्रतिहत्य वीराः ।
कुरु प्रयत्नं भरतप्रवीर
द्रवन्त्यमी सृञ्जयास्सोमकाश्च ॥ ६॥

दृष्ट्वा च कर्णं समरे प्रहृष्टं
त्वां चापि दृष्ट्वा परिहीयमानम् ॥ ७

सञ्जयः—

स चोदितो भीमजनार्दनाभ्यां
स्मृत्वा तदाऽऽत्मानमवेत्य सर्वम् ।
इहात्मनश्चागमने विदित्वा
प्रयोजनं केशवमित्युवाच ॥ ८

अर्जुनः—

प्रादुष्करोम्येष महास्त्रमुग्रं
शिवाय लोकस्य वधाय सौतेः ।
तन्मेऽनुजानातु भवान् सुराश्च
ब्रह्मा शिवो ब्रह्मविदश्च सर्वे ॥ ९

सञ्जयः—

इति स्मोक्त्वा पाण्डवस्सव्यसाची
नमस्कृत्वा ब्रह्मणे सोऽमितात्मा ।
अनुत्तमं ब्राह्ममसह्यमस्त्रं
प्रादुश्चक्रे मनसा यद्विधेयम् ॥ १०

ततो दिशश्च प्रदिशश्च सर्वास्
समावृणोत् सायकैर्भूरितेजाः ।
गाण्डीवमुक्तैर्भुजगैरिवोग्रैर्
दिवाकरांशुप्रतिमैर्ज्वलद्भिः ॥ ११

सृष्टास्तु बाणा भरतर्षभेण
शतं शतं हेममुखास्सुतीक्ष्णाः ।
प्राच्छादयन् कर्णरथं क्षणेन
युगान्तकालार्ककरप्रकाशाः ॥ १२

[1]ततश्च शूलासिपरश्वथाश्च
चक्राणि नाराचवराणि चैव ।

---

1. क-ख-च-छ—अष्टार्धानि न सन्ति

निश्चक्रमुर्घोरतराश्च योधास्
ततो न्यहन्यन्त समन्ततोऽपि ॥ १३

छिन्नं शरैः कस्य चिदाजिमध्ये
पपात योधस्य शिरोऽन्यकाये ।
भयेन सोऽप्याशु पपात भूमा-
वन्यः प्रनष्टः पतितं विलोक्य ॥ १४

अन्यस्य सासिर्निपपात कृत्तो
योधस्य बाहुः करिहस्ततुल्यः ।
अन्यस्य सव्यस्सह चर्मणा च
क्षुरप्रकृत्तः पतितो धरण्याम् ॥ १५

एवं समस्तानपि योधमुख्यान्
विध्वंसयामास किरीटमाली ।
शरैश्शरीरान्तकरैस्सुघोरैर्
दौर्योधनं सैन्यमशेषमेव ॥ १६

वैकर्तनेनाशु तदाऽऽजिमध्ये
सहस्रशो बाणगणा विसृष्टाः ।
ते चाक्षयाः पाण्डवमभ्युपेयुः
पर्जन्यसृष्टा इव वारिधाराः ॥ १७

ततस्स कृष्णं च किरीटिनं च
वृकोदरं चाप्रतिमप्रभावः ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य
ननाद घोरं महता स्वनेन ॥ १८

ततस्स बाणाभिहतं किरीटी
भीमं तदा प्रेक्ष्य जनार्दनं च ।
अमृष्यमाणः पुनरेव पार्थश्
शरान् दशाष्टौ सममुद्बबर्ह ॥ १९

स केतुमेकेन शरेण विद्ध्वा
शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ।
ततस्सुमुक्तैर्दशभिर्जघान
सभापतिं काञ्चनवर्मनद्धम् ॥ २०

स राजपुत्रो विशिरा विबाहुर्
विवाजिसूतो विधनुर्विकेतुः ।
हतो रथाग्र्यादपतत् प्ररुग्णः
परश्वथैस्साल इवावकृत्तः ॥ २१

पुनश्च कर्णं त्रिभिरष्टभिश्च
द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा ।

चतुश्शतं द्विरदानां निपात्य
रथाञ् जघानाष्ट रणे किरीटी ॥ २२

सहस्रमश्वांश्च पुनश्च सादीन्
अष्टौ सहस्राणि च पत्तिवीरान् ॥ २२॥

दृष्ट्वा तु मुख्यावतिविध्यमानौ
वरेषुभिश्शूरवरावरिघ्नौ ।
कर्णं च पार्थं च नियम्य वाहान्
सर्वे महिष्ठाश्च ततोऽवतस्थुः ॥ २३॥

[1]कर्णं ससूतं सरथाश्वकेतुम्
अदृश्यमम्भोगतिभिः प्रचक्रे ॥ २४

अथाक्रोशन् कुरवो वध्यमाना
धनञ्जयेनातिरथिं समेताः ॥ २४॥

कुरवः—

मुञ्चाभिविध्यार्जुनमाशु कर्ण
बाणैः परान् हन्ति कुरून् समेतान् ॥ २५

सञ्जयः—

सञ्चोदितस्सर्वयत्नेन कर्णो
मुमोच बाणान् सुबहूनभीक्ष्णम् ।

---

1. अ—कोश एव सप्तदशार्धानि वर्तन्ते नान्यत्र

ते पाण्डुपाञ्चालगणान् निजघ्नुर्
मर्मच्छिदश्शोणितपङ्कदिग्धाः ॥ २६

तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
निजघ्नतुश्चाहितसैन्यमुग्रम्
अन्योन्यमप्यस्त्रविदौ महास्त्रैः ॥ २७

अथोपयातस्त्वरितो दिदृक्षुर्
मन्त्रौषधीभिर्विरुजो विशल्यः ।
वृतस्सुहृद्भिर्भिषजां वरिष्ठैर्
युधिष्ठिरस्तत्र सुवर्णवर्मा ॥ २८

अथोपयातं युधि धर्मराजं
दृष्ट्वा मुदा सर्वभूतान्यनन्दन् ।
ग्रहाद्विमुक्तं विमलं समग्रं
चन्द्रं यथैवाभ्युदितं तथैव ॥ २९

स कार्मुकज्यातलसंनिपातस्
सुमुक्तबाणस्तुमुलो बभूव ।

---

1. अ—दृष्ट्वा तु मुख्यावतियुध्यमानौ
दिदृक्षवश्शूरवरावरिघ्नौ ॥ [अधिकः पाठः]

घ्नतोस्ततोऽन्योन्यमिषुप्रवेगैर्
धनञ्जयस्यातिरथेश्च तत्र ॥ ३०

षष्ट्या बिभेदाशु च वासुदेवम्
अनन्तरं फल्गुनमष्टभिश्च ।
पूषात्मजो मर्मसु निर्बिभेद
मरुत्सुतं चाष्टशतं शिताग्रैः ॥ ३१

तैरप्रमत्तैर्विनिहत्य सर्वे
जघान तेषां रथवाजिसङ्घान् ।
तथा तु सैन्यप्रवरांश्च राज-
न्नभ्यर्दयन्मार्गणैस्सूतपुत्रः ॥ ३२

---

1. अ—ते भिन्नदेहा व्यसवो निपेतुः
कर्णेषुभिर्भूमितले स्तनन्तः ।
पुनश्च पाञ्चालवरास्तथाऽन्ये
तदन्तरे कर्णधनञ्जयाभ्याम् ॥
प्रस्कन्दिनो बलिनश्चाथ मुक्तैः
कर्णेन बाणैर्निहताः प्रसह्य ।
जयं सुमत्वा विपुलास्त्वदीयास्
तदा विनिघ्नन् सिंहनादांश्च नेदुः ॥
सर्वे ह्यमन्यन्त वशीकृतौ तौ
कर्णेन कृष्णाविति ते विमर्दे । [अधिकः पाठः]

प्रच्छादयामास ततः पृषत्कैस्
सघोषमाच्छिद्य च गाण्डिवज्याम् ॥ ३२॥

अस्मिन् क्षणे फल्गुनं सूतपुत्रस्
समाचिनोत् क्षुद्रकाणां शतेन ।
निर्मुक्तसर्पप्रतिमैस्सुतीक्ष्णैस्
तैलप्रधौतैः खगपत्रवाजैः ॥ ३३॥

षष्ट्या बिभेदाशु च वासुदेवं
तदन्तरे प्रत्वरन् सौमकांश्च ॥ ३४

ततो नवज्यां सुदृढां किरीटी
स्वबाहुविक्षेपसहां प्रगृह्य ।
समादधे गाण्डिवे क्षिप्रकारी
निमेषमात्रेण महाधनुष्मान् ॥ ३५

ज्याच्छेदनं ज्याविधानं च तस्य
नैवावबुध्यत् सूतपुत्रो लघुत्वात् ।
पार्थस्य सङ्ख्ये द्विषतां निहन्तुस्
तदद्भुतं तत्र बभूव राजन् ॥ ३६

पार्थोऽपि तां ज्यामवधाय तूर्णे
शरासनज्यामातिरथेर्विमथ्य ।

सुसंरब्धः कर्णशरैः क्षताङ्गो
रणे योधांस्तावकान् प्रत्यगृह्णात् ॥ ३७

[1]ज्यां चानुमृज्याभ्यहनत्तलत्रे
बाणान्धकारं सहसा चकार ।
कर्णं च शल्यं च कुरूंश्च सर्वान्
बाणैरविध्यत् प्रसभं किरीटी ॥ ३८

नैवापतत् पक्षिगणोऽन्तरिक्षे
पार्थेन चास्त्रेण कृतेऽन्धकारे ।
शल्यं तु पार्थो दशभिर्निमेषाद्
भृशं तनुत्रे प्रहसन्नविध्यत् ॥ ३९

ततः कर्णं द्वादशभिः पृषत्कैर्
विद्ध्वा पुनस्सप्तभिरप्यविध्यत् ॥ ३९॥

स पार्थबाणासनवेगनुन्नैर्
दृढाहतः पत्रिभिरुग्रवेगैः ।
विभिन्नगात्रः क्षतजोक्षिताङ्गः
कर्णो बभौ रुद्र इवान्तकाले ॥ ४०॥

ततस्त्रिभिस्तं त्रिदशाधिपोपमं
शरैर्बिभेदातिरथिर्धनञ्जयम् ।

---

1. क-ख—इदमर्धद्वयं नास्ति

शरांश्च पञ्च ज्वलितानिवोरगान्
प्रवेशयामास जिघांसुरच्युते ॥ ४१॥
सुवर्णचित्रं पुरुषोत्तमस्य
वर्माथ भित्त्वाऽभ्यपतन् सुपुङ्खाः ।
वेगेन गां ते विविशुश्च राजन्
स्नात्वा च कर्णाभिमुखाः प्रतीयुः ॥ ४२॥
तान् पञ्च भल्लैर्दशभिस्सुमुक्तैस्
त्रिधा त्रिधैकैकमथोच्चकर्त ।
धनञ्जयस्ते न्यपतन् पृथिव्यां
यथाऽहयस्तार्क्ष्यमुखेन कृत्ताः ॥ ४३॥
ततः प्रजज्वाल किरीटमाली
क्रोधेन कक्षं प्रदहन्निवाग्निः ॥ ४४
स कर्णमाकर्णविकृष्टसृष्टैश्
शरैश्शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविध्यत् स चचाल दुःखाद्
धैर्यात्तु तस्थावतिमात्रधैर्यः ॥ ४५
प्रादुश्चकाराथ शरान् महात्मा
देहं विचिन्वन्निव सूतजस्य ।
शरास्तु ते काञ्चनचित्रपुङ्खास्
सम्पेतुरुर्व्यां शतशो महान्तः ॥ ४६

ततश्शरौघैः प्रदिशो दिशश्च
रविप्रभः कर्णरथश्च राजन् ।
अदृश्य आसीत् कुपिते धनञ्जये
तुषारनीहारवृतो गिरिर्यथा ॥ ४७

सचक्ररक्षा अपि पृष्ठगोपाः
कर्णस्य ये चापि पुरस्सराश्च ।
भीता द्रवन्ति स्म निहन्यमाना
महेषुभिः पार्थकरप्रणुन्नैः ॥ ४८

ततोऽर्जुनो वै भरतप्रवीरो
महानुभावस्समरे निहन्ता ।
सुयोधनेनानुमतान् विनिघ्नन्
समुच्छ्रितान् सरथान् सारभूतान् ॥ ४९

गाण्डीवधन्वा द्विगुणं सहस्रं
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान् सरथान् ससूतान्
निनाय राजन् क्षयमेकवीरः ॥ ५०

अथो पलायन्त विहाय कर्णं
तवात्मजा ये कुरवश्च शिष्टाः ।
हतानवाकीर्य शरक्षतांश्च
विलप्यमानांस्तनयान् पितॄंश्च ॥ ५१

सर्वे प्रणेशुः कुरवो विभिन्नाः
पार्थेषुभिस्सम्परितप्यमानाः ।
सुयोधनेनाथ पुनर्वरिष्ठाः
प्रचोदिताः कर्णरथानुयाने ॥ ५२

दुर्योधनः—
भोः क्षत्रियाश्शूरतमास्तु सर्वे
क्षात्रे च धर्मे निरतास्थ यूयम् ।
न युक्तरूपं भवतां समीपात्
पलायनं कर्णमिह प्रहाय ॥ ५३

सञ्जयः—
तवात्मजेनापि तथोच्यमानाः
पार्थेषुभिस्सम्परितप्यमानाः ।
नैवावतिष्ठन्त भयाद्विवर्णाः
क्षणेन नष्टाः प्रदिशो दिशश्च ॥ ५४
स सर्वतः प्रेक्ष्य दिशोऽपि शून्या
भयावदीर्णः कुरुभिर्विहीनः ।
न विव्यथे भारत तत्र कर्णः
प्रतीपमेवार्जुनमभ्यधावत् ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ७३ ॥ कर्णपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

## ॥ षडधिकशततमोऽध्यायः ॥



रणे हीयमानेन कर्णेनार्जुनस्य शिरो लक्षीकृत्य नागास्त्रप्रयोगः ॥ १ ॥ कृष्णेन पार्थरथे पादनिपीडनेन धरण्यां किंचिन्निमज्जिते तदस्त्रेण शिरोवर्जं पार्थकिरीटमात्रापहारः ॥ २ ॥ कर्णस्य रथचक्रे विप्रशापात् धरण्यां निमग्ने तदुद्दिधीर्षया तेन पार्थं प्रति मुहूर्तमयुद्धप्रार्थनम् ॥ ३ ॥



सञ्जयः—

ततोऽपयाताश्शरपातमात्रम्
अवस्थिता वै कुरवो नरेन्द्र ।
विद्युत्प्रकाशं ददृशुस्समन्ताद्
धनञ्जयास्त्रं समुदीर्यमाणम् ॥ १

ततोऽग्रसत् सूतपुत्रोऽर्जुनस्य
वियद्गतं घोरतरश्शरैस्तत् ।
क्रुद्धेन पार्थेन शरं विसृष्टं
वधाय कर्णस्य महाविमर्दे ॥ २

रामादुपात्तेन महामहिम्ना
आथर्वणेनारिविनाशनेन ।
तदर्जुनास्त्रं व्यधमद्दहन्तं
पार्थं च बाणैर्निशितैरविध्यत् ॥ ३

ततो विमर्दस्सुमहान् बभूव
धनञ्जयस्यातिरथेश्च राजन् ।
अन्योन्यमाघातयतोः पृषत्कैर्
विषाणघातैर्द्विपयोरिवाजौ ॥ ४

ततोऽस्त्रसङ्घातसमावृतं तदा
बभूव राजंस्तुमुलं रणाजिरम् ।
यत् कर्णपार्थौ शरवृष्टिसङ्घैर्
निरन्तरं चक्रतुरम्बरं तदा ॥ ५

ततो महद् बाणमयं महाहवे
जालं हि सर्वे ददृशुर्नरेन्द्राः ।
नान्यच्च भूतं ददृशे पतद् वै
बाणान्धकारे तुमुले तु तस्मिन् ॥ ६

ततस्तु तौ वै पुरुषप्रवीरौ
राजन् वरौ सर्वधनुर्धराणाम् ।
[1]त्यक्त्वाऽऽत्मदेहौ समरेऽतिघोरे
प्राप्तश्रमौ शत्रुदुरासदौ हि ॥ ७

दृष्ट्वा तु तौ संयति सम्प्रयुक्तौ
परस्परं छिद्रनिविष्टदृष्टी ।

1. अ—अर्धद्वयं नास्ति

देवर्षिगन्धर्वगणास्सयक्षास्
सन्तुष्टुवुस्तौ पितरश्च हृष्टाः ॥* ८

[1]आदर्शयेतां युधि मार्गान् विचित्रान्
धनुर्धराग्र्यैर्विविधैः कृतास्त्रैः ॥ ८॥

तयोरेवं युध्यतोराजिमध्ये
सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचिदधिकः किरीटी
वीर्यास्त्रमायाबलपौरुषेण ॥ ९॥

दृष्ट्वा तयोस्तं युधि सम्प्रहारं
परस्परस्यान्तरमीक्षमाणयोः ।
घोरं तयोरविषह्यं रणेऽन्यैर्
योधास्सर्वे विस्मयमभ्यगच्छन् ॥ १०॥

कर्णोऽथ पार्थं न विशेषयद्यदा
भृशं च पार्थेन शराभितप्तः ।
ततो विमोक्तुं शरवर्यमुग्रं
मनो दधे ह्येकशयस्य तस्य ॥ ११॥

---

* ब—अत्राध्यायसमाप्तिर्दृश्यते
1. क-ख-ग-ङ—सप्तार्धानि न सन्ति

ततो रिपुघ्नं समधत्त कर्णस्
सुसंशितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं संयति सुप्रधौतं
पार्थार्थमित्येव चिराय गुप्तम् ॥ १२॥

सदाऽर्चितं चन्दनचूर्णदिग्धम्
सुवर्णनालीशयनं पुराणम् ।
आकर्णपूर्णं विचकर्ष कर्णो
विमोक्तुकामश्शरमुग्रवेगम् ॥ १३॥

प्रदीप्तमैरावतनागपुत्रं
शिरो जिहीर्षन् भरतर्षभस्य ॥ १४

ततः प्रजज्वाल नभो दिशश्च
उल्काश्च घोरास्सहसा निपेतुः ।
तस्मिंस्तु नागे धनुषि प्रयुक्ते
हाहाकृता देवगणास्सशङ्काः ॥ १५

स सूतपुत्रस्तमपाङ्गदेशे
अवाङ्मुखं सन्धयति स्म रोषात् ।
न तं स्म जानाति महानुभावम्
अपाङ्गदेशाभिनिविष्टमाजौ ॥ १६

तमब्रवीन्मद्रराजो महात्मा
वैकर्तनं संहितबाणमाजौ ॥ १६॥

शल्यः—

ग्रीवा यतः कर्ण न संहितोऽयं
समीक्ष्य संधत्स्व शरं परघ्नम् ॥ १७

सञ्जयः—

तमब्रवीत् क्रोधविदीप्तनेत्रो
मद्राधिपं सूतपुत्रो मनस्वी ॥ १७॥

कर्णः—

न सन्धत्ते द्विश्शरं शल्य कर्णो
न मादृशा युद्धशठा भवन्ति ॥ १८

सञ्जयः—

तथोक्तवाक्यो विससर्ज तं शरं
प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोऽसि हे फल्गुन इत्यविक्लबं
ब्रुवंस्तथोच्चैस्तरमूर्जितं वृषा ॥ १९

तमापतन्तं ज्वलितं निरीक्ष्य
वियद्गतं वृष्णिकुलप्रवीरः ।
रथस्य चक्रं सहसा निपीड्य
पद्भ्याकुलं मज्जयति स्म वीरः ॥ २०

ततोऽन्तरिक्षे सुमहान् निनादस्
सम्पूजनार्थे मधुसूदनस्य ॥ २०॥

दिव्याश्च वातास्सहसा बभूवुर्
दिव्यानि पुष्पाणि च कृष्णमाच्छेन् ।
तस्मिंश्च किञ्चिद्धरणीनिमग्ने
रथे प्रयत्नान्मधुसूदनस्य ॥ २१॥

स दुष्टभावो वितथप्रतिज्ञः
किरीटमभ्याहरदर्जुनस्य ॥ २२

ततः किरीटं बहुरत्नचित्रितं
जहार नागोऽर्जुनमूर्धतो बलात् ।
गिरेस्सुजाताङ्कुरपुष्पितद्रुमं
महेन्द्रवज्रं शिखरं यथोत्तमम् ॥ २३

[1]ततः किरीटं तपनीयचित्रं
पार्थोत्तमाङ्गादहरत् तरस्वी ।
तद्धेमजालावनतं सुघोरं
सम्प्रज्वलत्तन्निपपात भूमौ ॥ २४

ततोऽर्जुनस्योत्तमगात्रभूषणं
सुवर्णमुक्तामणिवज्रभूषितम् ।

1. अ—अर्धमिदं नास्ति

[1]धराबियत्स्वस्सलिलेषु विश्रुतं
बलाब्जसर्पोत्तममन्युभिस्सदा ॥ २५

शरेण मूर्ध्नः प्रजहार सूतजो
दिवाकरेन्दुज्वलनप्रहत्विषम् ॥ २५॥

पुरन्दरार्थं तपसा प्रयत्नतस्
स्वयं कृतं यद्विधिना स्वयम्भुवा ।
महार्हरूपं द्विषतां भयङ्करं
[2]बिभर्तुमत्यर्थसुखं सुगन्धि च ॥ २६॥

निजघ्नते देवरिपून् सुरेश्वरस्
स्वयं ददौ यद्धि मुदाऽर्जुनाय ॥ २७

हरप्रचेतोहरिवित्तगोप्तृभिः
पिनाकपाशाशनिदण्डधारिभिः ।
सुरोत्तमैरप्यविषह्यमर्दितुं
प्रसह्य नागेन जहार तद्वृषा ॥ २८

तदुत्तमेषून्मथितं विषाग्निना
प्रदीप्तमर्चिष्मदतीव सुन्दरम् ।
पपात पार्थस्य किरीटमुत्तमं
दिवाकरोऽस्तादिव पर्वताज्ज्वलन् ॥ २९

1. अ—नास्त्यर्धद्वयमिदम् 2. ख-ब—अयं पादो नास्ति

महीवियद्द्योसलिलानि वायुना
प्रसह्य रुग्णानि विचूर्णितानि वा ।
इतीव शब्दं भुवनेषु तं तथा
जना व्यवस्यन्ति दिशश्च विह्वलाः ॥ ३०

विना किरीटं शुशुभे स पार्थश्
श्यामो युवा शैल इवात्तश्रृङ्गः ॥ ३०॥

ततस्समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजानव्यथितस्तदाऽर्जुनः ।
बभौ सुसम्पूर्णमरीचिनेन्दुना
शिरोगतेनोदयपर्वतो यथा ॥ ३१॥

स चापि राधेयभुजप्रमुक्तो
हुताशनार्कप्रतिमद्युतिर्महान् ।
महोरगः कृतवैरोऽर्जुनेन
किरीटमाहत्य समुत्पपात ॥ ३२॥

तं चापि दृष्ट्वा तपनीयचित्रं
किरीटहाऽऽविष्कृतमर्जुनस्य ।
इयेष गन्तुं पुनरेव तूर्णं
दृष्टश्च कर्णेन तदाऽब्रवीत् तम् ॥ ३३॥

नागः—

मुक्तस्त्वयाऽहं न समीक्ष्य कर्ण
शिरो हृतं यन्न मयाऽर्जुनस्य ।
समीक्ष्य मां मुञ्च रणे त्वमाशु
हन्तास्मि शत्रुं तव चात्मनश्च ॥ ३४॥

नागोऽस्मि श्वेतः कृतवैरो महात्माऽ-
र्जुनेन माता पुरा ह्युत्पतिता नभस्तः ।
मां त्रायती मृत्युभयाभिपन्नम्
अनेन नीता पितृराजवेश्म ॥ ३५॥

कर्णः—

न नाग कर्णोऽद्य रणे परस्य
बलं समास्थाय जयं बुभूषेत् ।
ममैव बाह्वोस्तु बलेन शक्तो
युध्यर्जुनानां शतमेव हन्तुम् ॥ ३६॥

व्रतं यदत्रापि न वेत्सि मे भवान्
न नाम कृष्णस्य समक्षमेव ।
एष ह्यहं त्वा युधि पाण्डवानां
हन्तास्मि युद्धे हि स्वविक्रमेण ॥ ३७॥

एतद्व्रतं जानमानः प्रयातः
किं वै कृता पार्थवधे प्रतिज्ञा ॥ ३८

सञ्जयः—

इत्येवमुक्तो युधि नागराजः
कर्णेन रोषादसहंस्तस्य वाक्यम् ।
स्वयं प्रायात् पार्थवधाय राजन्
कृत्वा स्वरूपं विजिघांसुरुग्रः ॥ ३९

इयेष गन्तुं पुनरेव तूर्णं
कर्णान्तिकं कृतवैरस्स नागः ।
तमुत्पतन्तं द्विपदां वरिष्ठो
दृष्ट्वा वचः पार्थमुवाच कृष्णः ॥ ४०

श्रीभगवान्—

महोरगं पाण्डव पश्य पश्य
प्रयोजितं त्वन्निधनार्थमुग्रम् ॥ ४०॥

सञ्जयः—

स एवमुक्तो मधुसूदनेन
गाण्डीवधन्वा हरिमुग्रधन्वा ।
उवाच को न्वेष ममाद्य नाथ
क्षयाय चागाद्गरुडस्य वक्त्रम् ॥ ४१॥

श्रीभगवान्—

योऽसौ त्वया खाण्डवे चित्रभानुं
सन्तर्पयानेन धनुर्धरेण ।

वियद्गतो जननीगुप्तदेहो
न घातितो निहता चास्य माता ॥ ४२॥

स एष तद्वैरमनुस्मरन् वै
त्वां प्रार्थयत्यात्मवधाय नागः ।
नभश्च्युतां प्रज्वलितामिवोल्कां
पश्यैनमायान्तममित्रसाहम् ॥ ४३॥

सञ्जयः—

ततस्स जिष्णुः परिवृत्य रोषाच्
चिच्छेद षड्भिर्निशितैस्सुधारैः ।
नागं बली तिर्यगिवापतन्तं
सञ्छिन्नगात्रो निपपात भूमौ ॥ ४४॥

तस्मिन् मुहूर्ते दशभिः पृषत्कैश्
शिलाशितैर्बर्हिणकङ्कपत्रैः ।
विव्याध कर्णः पुरुषप्रवीरं
धनञ्जयं तिर्यगवेक्षमाणम् ॥ ४५॥

ततोऽर्जुनो द्वादशभिस्सुतीक्ष्णैर्
वराहकर्णैर्निशितैः प्रविध्य ।
नाराचमाशीविषतुल्यवेगम्
आकर्णपूर्णायतमुत्ससर्ज ॥ ४६॥

स चित्रवर्मेषुवरो विदार्य
प्राणान् निरस्यन्निव साधु मुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश
वसुन्धरां शोणितदिग्धवाजः ॥ ४७॥

ततो वृषा बाणनिपातरोषितो
महोरगो दण्डविघट्टितो यथा ।
तदाऽऽशुकारी व्यसृजच्छरोत्तमान्
महाविषस्सर्प इवोत्तमं विषम् ॥ ४८॥

जनार्दनं द्वादशभिः पराभिन-
न्नवैर्नवत्या च शरैर्वृषाऽर्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं
विभिद्य कर्णो व्यनदज्जहास च ॥ ४९॥

ततोऽस्य वक्षश्शरवर्षेण पार्थो
बिभेद मर्माणि ततोऽस्य मर्मवित् ।
परश्शतैः पत्रिभिरिन्द्रविक्रमस्
तथा यथेन्द्रो बलमोजसा रणे ॥ ५०॥

ततश्शरान् वै नवतिं तदाऽर्जुनस्
ससर्ज कर्णेऽन्तकदण्डसन्निभान् ।

स तैर्भृशाविष्टतनुः प्रविव्यथे
तथा यथा वज्रविदारितोऽचलः ॥ ५१॥

मणिप्रवेकोज्ज्वलवज्रहाटकैर्
अलङ्कृतं चास्य वराङ्गभूषणम् ।
प्ररुग्णमुर्व्यां निपपात पत्रिभिर्
धनञ्जयेनोत्तमकुण्डलेऽपि च ॥ ५२॥

महाधनं शिल्पिवरैः प्रयत्नतः
कृतं यदस्योत्तमवर्म भास्वरम् ।
सुदीर्घकालेन तदस्य पाण्डवः
क्षणेन बाणैर्बहुधा व्यशातयत् ॥ ५३॥

तस्येषुभिः खण्डितकुण्डलान्तः
परिक्षतश्चाभ्यधिकं तदानीम् ।
स लोहिताङ्गश्रवणश्चकाशे
सलोहिताङ्गश्रवणो यथा दिवि ॥ ५४॥

स तं विवर्माणमथोत्तमेषुभिश्
शितैश्चतुर्भिः कुपितः पराभिनत् ।
स विव्यथेऽत्यर्थमरातिहा तथा
यथाऽऽतुरः पित्तकफानिल[1]व्रणैः ॥ ५५॥

---

1. क—ज्वरैः

महाधनुर्मण्डलनिस्सृतैश्शितैः
　　क्रियाप्रयत्नप्रहितैर्बलेन च ।
ततस्स कर्णं बहुभिश्शरोत्तमैर्
　　बिभेद मर्मस्वपि चार्जुनस्त्वरन् ॥　　५६॥

दृढाहतः पत्रिभिरुग्रवेगैः
　　पार्थेन कर्णो विविधैश्शिताग्रैः ।
बभौ गिरिर्गैरिकधातुरक्तः
　　क्षरन् प्रपातैरिव रक्तमम्भः ॥　　५७॥

[1]ततोऽर्जुनः कर्णमवक्रगैश्शरैस्
　　सुवर्णपुङ्खैस्सुदृढैरयस्मयैः ।
यमाग्निदण्डप्रतिमैस्स्तनान्तरे
　　पराभिनत् क्रौञ्चमिवाद्रिमग्निजः ॥　　५८॥

ततश्शरावापमपास्य सूतजस्
　　त्यक्त्वा धनुश्शक्रशरासनोपमम् ।
ततो रथस्थस्स मुमोह च स्खलन्
　　प्रशीर्णमुष्टिस्सुभृशाहतस्तदा ॥　　५९॥

न चार्जुनस्तं व्यसने तदैच्छ-
　　न्निहन्तुमार्यः पुरुषव्रते स्थितः ।

1. क-ख-घ—द्वादशार्धानि न सन्ति

ततस्तमिन्द्रावरजस्सुसम्भ्रमाद्
उवाच किं पाण्डव हे प्रमाद्यसे ॥ ६०॥

नैवाहितानां सततं विपश्चितः
क्षणं प्रतीक्षन्त्यपि दुर्बलीयसाम् ।
विशेषतोऽरीन् व्यसनेषु पण्डितो
निहत्य धर्मं च यशश्च विन्दति ॥ ६१॥

तदेकवीरं तव चाहितं सदा
त्वरस्व कर्णं सहसा विमर्दितुम् ।
पुरा समर्थस्समुपैति सूतजो
जहि त्वमेनं नमुचिं यथा हरिः ॥ ६२॥

ततस्तथैवेत्यभिपूज्य सत्वरं
जनार्दनं कर्णमविध्यदर्जुनः' ।
शरोत्तमैस्सर्वकुरूत्तमस्त्वरंस्
तथा यथा शम्बरहा पुरा बलिम् ॥ ६३॥

साश्वं तु कर्णं सरथं किरीटी
समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च सर्वा
बाणैश्शिताग्रैस्तपनीयपुङ्खैः ॥ ६४॥

स वत्सदन्तैः पृथुपीनवक्षास्
समाचितस्त्वातिरथिर्विभाति ।
सुपुष्पिताशोकपलाशशाल्मलिर्
यथाऽचलश्चम्पककाननायुतः ॥ ६५॥

शरैश्शरीरं बहुधा समाचितं
विभाति कर्णस्य विशां पते रणे ।
महीरुहैराचितसानुगह्वरो
यथा नगेन्द्रश्शुभकर्णिकारः ॥ ६६॥

स बाणसङ्घान् धनुषा व्यवासृजन्
विभाति कर्णश्शररश्मिजालवान् ।
स लोहितो रक्तगभस्तिमण्डलो
दिवाकरोऽस्ताभिमुखो यथा तथा ॥ ६७॥

बहूञ् छितानातिरथिप्रमुक्तान्
बाणान् महाहीनिव दीप्यमानान् ।
विध्वंसयामास स वेगमुक्तैश्
शरैस्समावृत्य दिशस्समग्राः ॥ ६८॥

कालोऽप्यदृश्यो नृप विप्रशापा-
न्निदर्शयन् कर्णवधं ब्रुवाणः ।

भूमिस्तु चक्रं ग्रसतीत्यवोचत्
कर्णस्य तस्मिन् वधकालेऽभ्युपेते ॥ ६९॥

न चास्य घोरं प्रतिभाति चास्त्रं
यद्भार्गवो ह्यस्य ददौ महात्मा ।
चक्रं तु वामं ग्रसतेऽस्य भूमिर्
यथाऽस्य काले मृत्युपतिर्व्यतिष्ठत् ॥ ७०॥

ततो रथो भारत घूर्णते स्म
शापात्तदा ब्राह्मणसत्तमस्य ।
प्राप्तं वधं शंसति तन्महास्त्रं
प्रणश्यमानं द्विजमुख्यशापात् ॥ ७१॥

[1]सवेदिकश्चैत्य इवातिमात्रस्
सुपुष्पितो भूमितले निमग्नः ।
छिन्ने शरे सर्पमुखे च घोरे
पार्थेन तस्मिन् विषसाद कर्णः ॥ ७२॥

मग्नं रथं ब्राह्मणशापमूढो
ह्यस्त्रं च तं मोघमिषुं च सर्पम् ।
अमृष्यमाणो व्यसनानि तानि
हस्तौ विधून्वन् विजगर्हे धर्मम् ॥ ७३॥

1. क-ख-घ-ङ—अर्धद्वयं नास्ति

**कर्णः—**

धर्मप्रधानानभिपाति धर्म
इत्यब्रुवन् धर्मविदस्सदैव ।
नैवाद्य चास्मानभिंपाति भक्तान्
मन्ये न नित्यं परिपाति धर्मः ॥ ७४॥

**सञ्जयः—**

एवं ब्रुवन् प्रस्खलिताश्वसूतो
विचाल्यमानोऽर्जुनबाणघातैः ।
मर्माभिघाताच्छिथिलः क्रियासु
पुनः पुनर्धर्ममगर्हयद्वै ॥ ७५॥

[1]ततश्शरैर्भीमतरैर् अविध्यत् त्रिभिराहवे ।
हस्ते कृष्णं तथा पार्थम् अभ्यविध्यत् स सप्तभिः ॥ ७६॥

ततोऽर्जुनस्सप्तदश तिग्मतेजा महाजवान् ।
इन्द्राशनिसमस्पर्शान् असृजत् पावकोपमान् ॥ ७७॥

निर्भिद्य तं ते वेगेन न्यपतन् पृथिवीतले ।
[2]कम्पितात्मा ततः कर्णश् शक्तिं शिक्षां च दर्शयन् ॥ ७८॥

---

1. क-ख-घ—ततश्शरैर्भीमतरैरविध्यत
स्तनान्तरे कृष्णधनञ्जयौ सः ।
[ इति अर्धद्वयस्थाने पाठान्तरं दृश्यते ]

2. ख—इदमर्धं नास्ति

बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदीरयत् ।
ऐन्द्रं ततोऽर्जुनश्चापि तं दृष्ट्वाह्युपमन्त्रयत् ॥ ७९॥

गाण्डीवं ज्यां शरान् दिव्यान् अभिमन्त्र्य परन्तपः ।
व्यसृजच्छरवर्षाणि घर्मान्ते जलदो यथा ॥ ८०॥

ततस्तेजोमया बाणा रथात् पार्थस्य निस्सृताः ।
प्रादुरासन् महावीर्याः कर्णस्य च रथान्तिकात् ॥ ८१॥

स कर्णोऽग्रसदस्यास्त्रं कुर्वन् मोघं महारथः ।
ततोऽब्रवीद्वृष्णिवीरस् तस्मिन्नस्त्रे निपातिते ॥ ८२॥

श्रीभगवान्—

विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् ॥ ८३

सञ्जयः—

ततो ब्रह्मास्त्रमव्यग्रस् सम्मन्त्र्य समयोजयत् ।
छादयित्वा ततो बाणैः कर्णं प्रत्यास्यदर्जुनः ॥ ८४

तस्य कर्णस्त्रिशतैर्बाणैर् ज्यां छित्वा समताडयत् ।
ततो ज्यां विनिधायान्याम् अनुमन्त्र्य च पाण्डवः ॥ ८५

शरैरवाकिरत् कर्णं दीप्यमानैरिवाग्निभिः ॥ ८५॥

तस्य ज्याच्छेदनं कर्णो ज्याविधानं च संयुगे ।
नावबुध्यत शीघ्रत्वात् तदद्भुतमिवाभवत् ॥ ८६॥

अस्त्रैरस्त्राणि संवार्य प्रत्यघ्नत् सव्यसाचिनम् ।

चक्रे चाभ्यधिकं पार्थात् स्वयं वीर्यं प्रदर्शयन् ॥ ८७॥
ततः कर्णोऽर्जुनं दृष्ट्वा स्वस्यास्त्रेणावपीडितम् ।
युध्यस्वेत्यब्रवीत् पार्थं आतिष्ठ त्वं तथेति वै ॥ ८८॥
ततः कालाग्निसदृशं शरं सर्पविषोपमम् ।
अश्मसारमयं दिव्यम् अनुमन्त्र्य परन्तपः ॥ ८९॥
रौद्रमस्त्रं समाधाय क्षेप्तुकामः किरीटिने ।
ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ ९०॥
ग्रस्तचक्रश्च राधेयो रोषादश्रूण्यवर्तयत् ।
अर्जुनं चाब्रवीत् कर्णो मुहूर्तं क्षम पाण्डव ॥ ९१॥
सव्यं चक्रमवग्रस्तं भूमौ दैवादिदं मम ।
पार्थ कापुरुषाचीर्णम् अभिसन्धिं विसर्जय ॥ ९२॥
प्रकीर्णकेशे विमुखे विकले ब्रह्मवादिनि ।
शरणागते न्यस्तशस्त्रे याचमाने तथाऽर्जुन ॥ ९३॥
अबाणे भ्रष्टकवचे भ्रष्टचक्रायुधे तथा ।
न मुञ्चन्ति हि शस्त्राणि शूरास्साधुव्रते स्थिताः ॥ ९४॥
त्वं च शूरतमो लोके साधुवृत्तश्च पाण्डव ।
अभिज्ञो युद्धधर्माणां तस्मात् क्षम मुहूर्तकम् ॥ ९५॥
[1]दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो ह्यसि ।

---

1. क-ख—इदमर्धं नास्ति

यावच्चक्रमिदं भूमेर् उद्धरामि धनञ्जय ॥ १६॥

न मां रथस्थो भूमिष्ठं विसंज्ञं हन्तुमर्हसि ।
न वासुदेवात् त्वत्तो वा पाण्डवेय बिभेम्यहम् ॥ १७॥

त्वं हि क्षत्रियदायादो महाकुलविवर्धनः ।
श्रुत्वा धर्मोपदेशं त्वं मुहूर्तं क्षम पाण्डव ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ७३ ॥ कर्णपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
[ अस्मिन्नध्याये १८॥ श्लोकाः ]

---

## ॥ सप्ताधिकशततमोऽध्यायः ॥

पार्थाय धर्मानुवादकं कर्णं प्रति कृष्णेन तत्कृतदुष्कृतानुस्मारणपूर्वकं धर्मोद्घाटनम् ॥ १ ॥ कर्णेन स्वबाणाहतिनिर्विण्णेऽर्जुने तदन्तरे रथादवरुह्य चक्रोद्धरणोद्यमः ॥ २ ॥ तदन्तरे कृष्णचोदनया पार्थेन कर्णशिरश्छेदः ॥ ३ ॥

---

सञ्जयः—

अथाब्रवीद्वासुदेवो महात्मा
राधेय दिष्ट्या स्मरसीह धर्मम् ।
धर्मे निबद्धास्सततं हि पार्थास्
तेभ्यस्त्वसौ वृद्धिमहो ददाति ॥ १

धर्मादपेताः परिपन्थिनस्ते
तस्माद्गता वै कुरवो विनाशम् ।
प्रायेण नीचा व्यसनेषु मग्ना
निन्दन्ति दैवं न तु दुष्कृतं स्वम् ॥ २

कृष्णां सभां कर्ण यदेकवस्त्राम्
आनीतवांस्त्वं च सुयोधनश्च ।
दुश्शासनश्शकुनिस्सौबलश्च
धर्मस्तदा ते रुचितो न कस्मात् ॥ ३

यदा सभायां कौन्तेयम् अनक्षज्ञं युधिष्ठिरम् ।
[1]कैतवात् सौबलोऽजैषीद् दयालुं सर्वजन्तुषु ॥ ४

[2]आजमीढकुले जातं क्व ते धर्मस्तदा गतः ॥ ४॥

[3]वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः ॥ ५॥

यद्भीमसेनं सर्पैश्च विषदिग्धैश्च भोजनैः ।
आरेभे त्वन्मुखो राजा क्व ते धर्मस्तदा गतः ॥ ६॥

यद्वारणावते पार्थान् सुप्ताञ्जतुगृहे पुरा ।

---

1. अ-क-ख-घ—नास्तीदमर्धम्

2. अ—अजैषीच्छकुनिर्जानन्
क—आनीय जितवन्तो वै [पाठान्तरम्]

3. ख—अर्धचतुष्टयं नास्ति घ—अर्धद्वयं नास्ति

[1]आदीपयसि राधेय क्व ते धर्मस्तदा गतः ॥ ७॥

[2]राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥ ८॥

[3]यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसीम् ।
उपप्रैक्षीश्च राधेय क्व ते धर्मस्तदा गतः ॥ ९॥

[4]यदा रजस्वलां कृष्णां दुश्शासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥ १०॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम् ॥ ११॥

उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः[5] ॥ १२

यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥ १३

---

1. ख-घ-ङ—हन्तुकामास्तदा यूयं क्व ते धर्मस्तदा
   क—दग्धवन्तो यदा यूयं

2. घ—अर्धद्वयंनास्ति

3. ख-घ-ङ—पुरा नीतां यदा भीतां कृष्यमाणामनागसीम् ।
   [ पाठान्तरम् ]

4. ङ—कोशएकस्मिन्नेवेमानि पद्यार्धानि वर्तन्ते

5. ङ—राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवम् ।
   गान्धारराजमाश्रित्य क्व ते धर्मस्तदा गतः ॥ [ अधिकः पाठः ]

सञ्जयः—

एवमुक्ते तु राधेये वासुदेवेन पाण्डवम् ।
मन्युरभ्याविशद्घोरस् स्मृत्वा तत्तद् धनञ्जयम् ॥ १४

तदा क्रुद्धस्य सर्वेभ्यस् स्रोतोभ्यः पावकार्चिषः ।
प्रादुरासंस्ततो राजंस् तदद्भुतमिवाभवत् ॥ १५

स समीक्ष्य ततः कर्णं प्रसह्यास्त्रैर्धनञ्जयः ।
[1]ववर्ष शरवर्षाणि जिघांसुस्सूतजं तदा ॥ १६

कर्णश्चापि तदा राजन् क्रोधरक्तान्तलोचनः ।
[2]अभ्यवर्षत् पुनर्यत्नम् अकरोच्च धनञ्जये ॥ १७

अस्त्रैरस्त्राणि संवार्य प्रजहार च पाण्डवः ॥ १७॥

ततोऽन्यदस्त्रं कौन्तेयो [3]दयितं जातवेदसः ।
मुमोच कर्णमुद्दिश्य तत् प्रजज्वाल तेजसा ॥ १८॥

वारुणेन ततः कर्णश् शमयामास पावकम् ।
जीमूतैश्च दिशस्सर्वाश् चक्रे वीरस्सुदुर्दिनम् ॥ १९॥

पाण्डवेयो ह्यसम्भ्रान्तो वायव्यास्त्रेण तूलवत् ।
अपोवाह ततोऽस्त्राणि राधेयस्य महात्मनः ॥ २०॥

तत्राद्भुतं भारत सूतपुत्रश्
चक्रे चक्रे भूमिमनुप्रविष्टे ।

---

1. ख-ग—अर्धद्वयं नास्ति 2. क-ख-ग-ङ—नास्तीदमर्धम्
3. ख—इतः अर्धचतुष्टयं नास्ति

यद्योधयत् पाण्डवमुग्रवेगं
विव्याध चैनं दशभिः पृषत्कैः[1] ॥ २१॥

तं हस्तिकक्ष्याप्रवरं हि केतुं
सुवर्णमुक्तामणिवज्रजुष्टम् ।
कलाप्रकृष्टोत्तमशिल्पियत्नैः
कृतस्वरूपं तपनीयचित्रम् ॥ २२॥

ऊर्जस्करं ते सततं बलस्य
द्विषत्सेनाबाधनं भीमरूपम् ।
विख्यातमादित्यसुतस्य लोके
त्विषा समं पावकभानुचन्द्रैः ॥ २३॥

ततः क्षुरेणातिरथेर्महात्मा
सुवर्णपुङ्खेन शितेन [2]यत्तः ।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ
महारथस्यातिरथेः किरीटी ॥ २४॥

यशश्च दर्पश्च बलं च मारिष
प्रियाणि सर्वाणि च तेन केतुना ।

---

1. अ—ततोऽतिविद्धो भरतप्रवीरः
कर्णेन राजन् समरेऽर्जुनस्तु ।
बभूव कोपेन भृशं प्रदीप्तो
घृतावसिक्तः सदसीव वह्निः ॥ [ अधिकः पाठः ]

2. छ-ब—यन्ततः

ध्रुवं कुरूणां हृदयानि चापतन्
बभूव हाहेति च निस्स्वनो महान् ॥ २५॥

दृष्ट्वा ध्वजं तं पतितं पृथिव्यां
कुरुप्रवीरेण निकृत्तमाशु ।
[1]नाशंसिरे सूतपुत्रस्य सर्वे
जयं जना भारत ये त्वदीयाः ॥ २६॥

[2]अथ त्वरन् कर्णवधाय पार्थो
ततो महेन्द्राशनिसन्निकाशम् ।
आदत्त पार्थोऽञ्जलिकं निषङ्गात्
सहस्ररश्मेरिव रश्मिमेकम् ॥ २७॥

मर्मच्छिदं बाणवरं सुपुङ्खं
वैश्वानरार्कप्रतिमं ज्वलन्तम् ।
नराश्वनागासुहरं प्रदीप्तं
वराहमञ्जोगतिमुग्रवेगम् ॥ ८॥

सहस्रनेत्राशनितुल्यनिस्वनं
यमाननं व्यात्तमिवातिदुस्सहम् ।
पिनाकनारायणचक्रसन्निभं
भयङ्करं प्राणभृतां विनाशनम् ॥ २९॥

---

क—शशंसिरे सूतपुत्रस्य सर्वे वधं तदा
क-ख-ग-ङ—अयं पादो नास्ति

जग्राह पार्थस्स शरं प्रहृष्टो
यो देवसङ्घैरपि दुर्निवारः ।
सम्पूजितो यस्सततं महात्मना
देवासुराणां च जये महेषुः ॥ ३०॥

यं वै प्रकृष्टं प्रसमीक्ष्य युद्धे
चचाल सर्वं सचराचरं जगत् ।
कृत्स्नं जगत् स्वस्त्यृषयो हि चक्रुस्
तमुद्यतं द्रश्य महात्मनेषुम् ॥ ३१॥

युक्त्वा महास्त्रेण परेण मन्त्रैर्
विकृष्य गाण्डीवमुवाच [1]सत्वरम् ॥ ३२

अर्जुनः—

अयं महास्त्रप्रतिमश्शरोत्तमश्
शरीरहृच्चासुहरश्च दुर्हृदाम् ।
तपोभितप्तं गुरवश्च तोषिता
मया यदीष्टं सुहुतं यदि श्रुतम् ॥ ३३

अनेन सत्येन निहन्त्वयं शरस्
सुसंहितः कर्णमरिं मयाऽर्चितः ॥ ३३॥

---

1. ख-घ—पार्थः क—सुस्वरम्

सञ्जयः—

इत्यूचिवांस्तं प्रमुमोच बाणं
धनञ्जयः कर्णवधाय घोरम् ॥ ३४

अर्जुनः—

कृत्या ह्यथर्वाङ्गिरसी प्रचोदिता
यथा तथा त्वं जहि शात्रवं मम ॥ ३४॥

सञ्जयः—

ब्रुवन् किरीटी तमभिप्रहृष्टस्
[1]ससर्ज कर्णाय तदुग्रवेगम् ।
जिघांसुरर्केन्दुसमप्रभावः
कर्णं वशी पाण्डवः क्षिप्रकारी ॥ ३५॥

ततो विमुक्तो बलिना महेषुः
प्रज्वालयामास नभो दिशश्च ॥ ३६

सैन्यान्यनेकानि च विप्रकीर्य
गाण्डीवमुक्तेन ततो महात्मा ।
तेनार्जुनस्तन्महनीयमस्य
शिरोऽहरत् सूतपुत्रस्य राजन् ॥ ३७

1. क-ख—व्यवासृजज्जयहेतुं महेषुम्
क—ऽसृजद्देवानां जयहेतुं महेषुम्

छिन्नं पपाताञ्जलिकेन पूर्णं
कायोऽस्य पश्चाद्धरणीं जगाम ॥ ३७॥

तदुद्यतादित्यसमानवर्चसं
शिरस्तु मध्यन्दिनभास्करप्रभम् ।
वराङ्गमुर्व्यामपतच्चमूमुखे
दिवाकरोऽस्तादिव रक्तमण्डलः ॥ ३८॥

ततस्तु देही सततं सुखैधितं
सुरूपमत्यर्थसुखं सुगन्धि च ।
परेण कृच्छ्रेण शरीरमत्यजद्
गृहान् महर्द्धीन् निवसन्निवेश्वरः ॥ ३९॥

शरैर्विभिन्नं व्यसु तत् सुवर्म
पपात कर्णस्य शरीरमुज्झितम् ।
स्रवद्व्रणं गैरिकतोयमास्रवत्
गिरेर्यथा वज्रहतं शिरस्तथा ॥ ४०॥

देहात्तु कर्णस्य निपातितस्य
तेजस्सूर्यं खं विदार्याविवेश ।
तदद्भुतं सर्वमनुष्ययोधास्
ते दृष्टवन्तो निहते स्म कर्णे ॥ ४१॥

तं सोमकाः प्रेक्ष्य हतं शयानं
प्रीता निनादं मुमुचुस्ससैन्याः ।
तूर्याणि चाजघ्नुरतीव हृष्टा
वासांसि चाप्यादुधुवुर्भुजांश्च ॥ ४२॥

[1]संवर्धयन्तश्च नरेन्द्र योधाः
पार्थं समाजग्मुरतिप्रहृष्टाः ।
पताकिनीं चाप्यपरे ह्यनर्तय-
न्नन्योन्यमाश्लिष्य च तत्तदूचुः ॥ ४३॥

दृष्ट्वा कर्णं भूमिमनुप्रविष्टम्
[2]हृतं ह्रदात् सर्पमिवापविद्धम् ।
महानिलेनाद्रिमिवापविद्धं
यज्ञावसानेऽग्निमिव प्रशान्तम् ॥ ४४॥

तदाननं सूतपुत्रस्य राजन्
विभ्राजते पद्ममिवापनालम् ।
रराज कर्णस्य शिरो निकृत्तम्
अस्ते गिरौ भास्करस्येव बिम्बम् ॥ ४५॥

[3]ततश्शङ्खान् यादवा दध्मुरुच्चैर्
दृष्ट्वा कर्णं पातितं फल्गुनेन ।

---

1. क-ख-ब—नास्तीदमर्धम्
2. ब—हृतं रथात् सायकेनार्दयित्वा [पाठान्तरम्]
3. क-ख-ब-ङ—अर्धचतुष्टयं नास्ति

तथैव कृष्णश्च धनञ्जयश्च
हृष्टौ यमौ दध्मतुर्वारिजातौ ॥ ४६॥

सन्ताप्य सेनां स तु पाण्डवीं रणे
शरांशुभिर्भास्करतुल्यधीरः ।
किरीटिकालेन हि कर्णभास्करोऽ-
प्यनीयतास्तं दिवसावसाने ॥ ४७॥

शरैराचितसर्वाङ्गश् शोणितौघपरिप्लुतः ।
रराज देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ४८॥

निष्टप्य सेनामामित्रीं दीप्तैश्शरगभस्तिभिः ।
बलिनाऽर्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ४९॥

अस्तं गच्छन् यथाऽऽदित्यः प्रभामादाय गच्छति ।
एवं जीवितमादाय कर्णस्येषुर्जगाम ह ॥ ५०॥

अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष ।
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ५१॥

उपर्युपरि सेनानां विनिघ्नन्नहितं जनम् ।
शिरः कर्णस्य सोत्सेधम् इषुस्तदहरद्रणे ॥ ५२॥

तच्छिरो भरतश्रेष्ठ शोभयामास मेदिनीम् ।
यदृच्छयेव पतितं मण्डलं चण्डदीधितेः ॥ ५३॥

तं दृष्ट्वा समरविमर्दलब्धनिद्रं
दष्टोष्ठं रुधिरपरीतकातराक्षम् ।
राधेयं रथवरपृष्ठसन्निषण्णम्
हीनांशुर्दिवसकरो मुहूर्तमासीत् ॥ ५४॥

निश्शब्दतूर्यं हतयोधमुख्यं
प्रशान्तदर्पं धृतराष्ट्रसैन्यम् ।
न शोभते सूर्यसुतेन हीनं
बृन्दं ग्रहाणामिव चन्द्रहीनम् ॥ ५५॥

सहस्रनेत्रप्रतिमानकर्मणस्
सहस्ररश्मिप्रतिमाननं शुभम् ।
सहस्ररश्मिर्दिवसक्षये यथा
तथाऽपतत् कर्णशिरो वसुन्धराम् ॥ ५६॥

[1]व्यूढोरस्कं कमलनयनं तप्तहेमावभासं
कर्णं दृष्ट्वा भुवि निपतितं पार्थबाणाभितप्तम् ।
पांसुग्रस्तं मलिनमसकृत् पुत्रमन्वीक्षमाणो
मन्दं मन्दं व्रजति सविता मन्दिरं मन्दरश्मिः ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ७३ ॥ कर्णपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

1. अ—नास्त्यर्धद्वयमिदम्

## ॥ अष्टाधिकशततमोऽध्यायः ॥

शल्येन कर्णमरणाद्व्याकुलमनसो दुर्योधनस्य समाश्वासनम् ॥ १ ॥ तथा तं प्रति रणाङ्गणवर्णनम् ॥ २ ॥ देवगन्धर्वादीनां स्वस्वस्थानगमनम् ॥ ३ ॥

सञ्जयः—

कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिं गतं
दिदृक्षवस्सम्परिवार्य तस्थुः ॥ १

प्रभ्रष्टवित्रस्तविषण्णविस्मितास्
तथाऽपरे शोकसमन्विता भवन् ।
परे त्वदीयाश्च रणे विशां पते
यथायथेष्टं पृतना तथा गता ॥ २

प्रविद्धवर्माभरणायुधाम्बरं
धनञ्जयेन प्रहतं महारथम् ।
निशाम्य कर्णं कुरवः प्रदुद्रुवुर्
[1]हतर्षभं केसरिणेव गोकुलम् ॥ ३

1. ख—इदमादि पादषट्कं नास्ति

कृत्वा विमर्दं भृशमर्जुनेन
कर्णं हतं केसरिणेव नागम् ।
दृष्ट्वा शयानं युधि मद्रराजश्
छिन्नध्वजेनापययौ रथेन ॥ ४

कर्णे हते पार्थभयात् प्रदुद्रुवुर्
वैकर्तने धार्तराष्ट्रास्सशल्याः ।
अवेक्षमाणा मुहुरर्जुनस्य
केतुं महान्तं यशसा ज्वलन्तम् ॥ ५

शल्यस्तु कर्णार्जुनयोर्विमर्दे
बलानि दृष्ट्वा मृदितध्वजानि ।
ययौ स तेनैव रथेन तूर्णं
हेलीकृतस्सृञ्जयसोमकैश्च ॥ ६

निपातितस्यन्दनवाजिनागं
बलं च दृष्ट्वा हतसूतपुत्रम् ।
भीमश्च भीमेन तदा स्वरेण
समुन्नदद्रोदसी कम्पयंश्च ॥ ७

आस्फोटयन्नृत्यति वल्गते च
हते कर्णे त्रासयन् धार्तराष्ट्रान् ॥ ७॥

तदा राजन् सृञ्जयास्सोमकाश्च
शङ्खान् दध्मुस्सस्वजुश्चापि सर्वे ।
परस्परं क्षत्रिया हृष्टरूपास्
सूतात्मजे वै निहते तदानीम् ॥ ८॥

दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
दीनो मुहुर्निश्वसन्नार्तरूपः ॥ ९

मद्राधिपश्चापि विमूढचेतास्
तूर्णं ध्वजेनापहृतेन तेन ।
रथेन दुर्योधनमेत्य तूर्णं
पश्यन् सुदुःखार्तमुवाच राजन् ॥ १०

शल्यः—

विशीर्णनागाश्वरथप्रवीरं
बलं त्वदीयं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतैश्शयानैर्
नराश्वनागैर्गिरिकूटकल्पैः ॥ ११

नैतादृशं भारत युद्धमासीद्
यथा हि कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णा-
वन्ये हि सर्वे तव शात्रवा ये ॥ १२

दैवं तु यत्तत् स्ववशे प्रवृत्तं
तत् पाण्डवान् पाति निहन्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरा हि सर्वे
प्रसह्य वीरा निहता द्विषद्भिः ॥ १३

कुबेरवैवस्वतवासवानां
तुल्यप्रभावा वरुणस्य चापि ।
वीर्येण शौर्येण पराक्रमेण
तैस्तैश्च युक्ता विमलैर्गुणौघैः ॥ १४

अवध्यकल्पा निहता नरेन्द्रास्
तवार्थकामा युधि पाण्डवेयैः ।
तन्मा शुचो भारत दिष्टमेतत्
पर्यायसिद्धिर्न तु नित्यसिद्धिः ॥ १५

सञ्जयः—

एतद्वचो मद्रपतेर्निशम्य
स्वं चाविनीतं मनसा विचिन्त्य ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
दीनातिदीनो निश्वसदार्तरूपः ॥ १६

तं ध्यानमूकं कृपणं भृशार्तम्
आर्तायनिर्दीनमुवाच राजन् ॥ १६॥

शल्यः—

पश्येदमुग्रं नरवाजिनागैर्
आयोधनं वीर हतैस्सुपूर्णम् ॥ १७

महीधराभैः पतितैश्च नागैर्
महीं प्रपन्नैश्शरभिन्नदेहैः ।
प्रविह्वलद्भिश्च गतासुभिश्च
प्रध्वस्तवर्मायुधसर्वयोधैः ॥ १८

वज्रापविद्धैरिव चाचलौघैर्
विभिन्नपाषाणमृगद्रुमौघैः ।
प्रविद्धघण्टाङ्कुशतोमरध्वजैस्
सहेमजालै रुधिरौघसम्प्लुवैः ॥ १९

शरावनुन्नैः पतितैस्तुरङ्गमैस्
स्वनद्भिरार्तैः क्षतजं स्रवद्भिः ।
दीनस्वनद्भिः परिवृत्तनेत्रैर्
मही पतद्भिः कृपणा बभूव ॥ २०

तथाऽपविद्धैर्गजवाजियूथैर्
मन्दासुभिश्चापि गतासुभिश्च ।
रथैश्च नागैस्तुरगैश्च नुन्नैर्
मही महावैतरणीव भाति ॥ २१

गजैर्निकृत्तापरहस्तगात्रैर्
उद्वेपमानैः पतितैः पृथिव्याम् ।
रथर्षभैर्नागवराश्वयोधैः
पदातिभिश्चाभिमुखैः परैर्हतैः ॥ २२

विशीर्णवर्माभरणाम्बरायुधैर्
वृता प्रशान्तैरिव पावकैर्मही ।
शरप्रहाराभिहतैर्महाबलैर्
अवेक्षमाणैः पतितैस्समन्ततः ॥ २३

प्रनष्टसंज्ञैः पुनराश्वसद्भिर्
मही बभौ कुम्भगतैरिवाग्निभिः ।
रक्तैश्च्युतैर्भूरतिदीप्तिमद्भिर्
नक्तं ग्रहैर्द्यौर्विमलैर्विभाति ॥ २४

शरास्तु कर्णार्जुनबाहुमुक्ता
विदार्य नागाश्वमनुष्यदेहान् ।
प्राणान् निरस्याशु महीं प्रतीयुर्
महोरगा वासमिवातिरौद्राः ॥ २५

हतैर्मनुष्यैश्च गजैश्च सङ्ख्ये
शरावभिन्नै रुधिरप्रदिग्धैः ।

धनञ्जयस्यातिरथैश्च मार्गे
हतैरगम्या वसुधाऽतिदुर्गा ॥ २६

रथैर्महेषून्मथितैस्सुकल्पितैस्
सनागयोधाश्ववरायुधध्वजैः ।
विशीर्णयोक्त्रैर्विनिकीर्णबन्धनैर्
निकृत्तचक्राक्षयुगात्रिवेणुभिः ॥ २७

विमुक्तयन्त्रैश्च तथा ह्युपस्करैर्
हतानुषङ्गैर्विनिकृत्तबन्धनैः ।
प्रभग्ननीडैर्मणिहेमभूषितैर्
वृता मही द्यौरिव शारदैर्घनैः ॥ २८

निकृष्यमाणा जवनैस्तुरङ्गमैर्
हतेश्वरा राजरथास्सुकल्पिताः ।
मनुष्यमातङ्गरथाश्वसादिषु
द्रुतं व्रजन्तो बहुधा विचूर्णिताः ॥ २९

सहेमपृष्ठास्सपरश्वथायुधाश्
शिताश्च शूला मुसलास्समुद्गराः ।
चित्राश्च खड्गा विमलाश्च कोशा
गदाश्च जाम्बूनदपट्टनद्धाः ॥ ३०

चापानि जाम्बूनदभूषितानि
शराश्च कार्तस्वरचित्रपुङ्खाः ।
ऋष्टयश्च पीता विमला विकोशाः
प्रासाश्च दण्डाः कनकप्रभासः ॥ ३१

शुभ्राणि वालव्यजनानि शङ्खाश्
छिन्नापविद्धा विरुचस्स्रजश्च ।
[1]कुथाः पताकाम्बरवेष्टनानि
किरीटमाला मकुटाश्च शुभ्राः ॥ ३२

प्रकीर्णका विप्रतिकीर्णकाश्च
प्रधानमुख्यास्तरलाश्च हाराः ।
आपीडकेयूरवराङ्गदानि
ग्रैवेयनिष्कास्ससुवर्णसूत्राः ॥ ३३

मण्युत्तमा वज्रसुवर्णयुक्ता
रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चाभान्ति सुखोचितानि
शिरांसि चेन्दुप्रतिमाननानि ॥ ३४

देहांश्च भोगांश्च परिच्छदांश्च
त्यक्त्वा मनोज्ञान् निहतास्सुखानि ।

1. अ—पद्यार्धानि न सन्ति

स्वधर्मनिष्ठां महतीमवाप्य
प्राप्ताश्च लोकान् यशसा गतास्ते ॥ ३५

निवर्त्य दुर्योधन यान्तु सैनिका
व्रजस्व राजञ् शिबिराणि मानद ।
दिवाकरोऽप्येष विलम्बते प्रभो
पुनस्त्वमेवात्र नरेन्द्र कारणम् ॥ ३६

सञ्जयः—
एतावदुक्त्वा विरराम शल्यो
दुर्योधनं चैव निवर्तयित्वा ।
युद्धाय राजन् विनिविष्टबुद्धिं
हा कर्ण हा कर्ण इति ब्रुवाणम् ॥ ३७

तं द्रोणपुत्रप्रमुखा नरेन्द्रास्
सर्वे समाश्वास्य ततः प्रजग्मुः ।
निरीक्षमाणा ध्वजमर्जुनस्य
रथं च दिव्यं यशसा ज्वलन्तम् ॥ ३८

नराश्वमातङ्गशरीरजेन
रक्तेन सिक्तां रुधिरेण भूमिम् ।
रक्ताम्बरस्रक्तपनीययोगां
नारीं प्रकाशामिव सर्वरम्याम् ॥ ३९

प्रच्छन्नरूपां रुधिरेण राजन्
रौद्रे मुहूर्तेऽतिविराजमानाम् ।
नैवावतस्थुः कुरवस्समीक्ष्य
प्रव्राजिता नरदेवा यथाऽक्षैः ॥ ४०

वधेन कर्णस्य सुदुःखितास्ते
हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रजग्मुश्शिबिराणि राजन्
दिवाकरं रक्तमवेक्षमाणाः ॥ ४१

[1]गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैश्
शिलाशितैश्शोणितदिग्धवाजैः ।
शरैश्चिताङ्गोऽपि रराज कर्णो
हतोऽपि दीप्तांशुरिवांशुजालैः ॥ ४२

कर्णस्य देहं रुधिराम्बुसिक्तं
भक्तानुकम्पी भगवान् विवस्वान् ।
स्पृष्ट्वा कराग्रैः क्षतजानुरूपैस्
स्नातुं तदाऽगादपरं समुद्रम् ॥ ४३

इतीव सञ्चिन्त्य सुरर्षयश्च
सम्प्रस्थितास्ते तु यथानिकेतम् ।

---

1. अ—नास्त्यर्धद्वयम्

सञ्छिन्त्य सर्वा जनता विसस्रुर्
यथासुखं खे च महीतले च ॥ ४४

तदद्भुतं प्राणभृतां भयङ्करं
निशाम्य युद्धं कुरुवीरमुख्ययोः ।
[1-2]समाचितौ कर्णशरैः परन्तपौ
सहैव संरेजतुरच्युतार्जुनौ ॥ ४५

तमो निहत्याभ्युदितौ यथाऽमलौ
शशाङ्कसूर्याविव रश्मिमालिनौ ।
विहाय तान् बाणगणान् महाबलौ
सुहृद्वृतावप्रतिमानविक्रमौ ॥ ४६

सुखं प्रविष्टौ सुखदौ विरेजतुस्
सदस्यचिन्त्याविव विष्णुवासवौ ॥ ४६॥
सदेवगन्धर्वमनुष्यचारणैर्
महर्षिभिर्यक्षमहोरगैरपि ।

---

1. अ—अर्धार्धानि न सन्ति

2. अ—धनञ्जयस्यातिरथैश्च विस्मिताः
प्रशंसमानाः प्रययुस्तदाऽर्जुनम् ।
गाण्डीवमुक्तैश्च सुवर्णपुङ्खैः
शिलाशितैश्शोणितदिग्धवाजैः ॥
शरैश्चिताङ्गो विरराज कर्णो
हतोऽपि दीप्तांशुरिवांशुजालैः । [ अधिकः पाठः ]

जयाभिवृद्ध्या परयाऽभिपूजितौ
निहत्य कर्णं परमाहवे तदा ॥ ४७॥

यथानुरूपं प्रतिपूज्य तानथ
प्रशस्यमानावतुलैश्च कर्मभिः ॥ ४८

ननन्दतुश्चैव सुहृद्भिरावृतौ
बलं निहत्येव सुरेशकेशवौ ॥ ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ७३ ॥ कर्णपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः ]

---

## ॥ नवाधिकशततमोऽध्यायः ॥

कर्णवधानन्तरं कृष्णार्जुनयोर्युधिष्ठिरसमीपगमनम् ॥

सञ्जयः—

शरसङ्कृत्तवर्माणं रुधिरोक्षितवक्षसम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्विमुञ्चति ॥ १

तप्तजाम्बूनदनिभं बालार्कसदृशद्युतिम् ।
जीवन्तमिव तं शूरं सर्वभूतानि मेनिरे ॥ २

हतस्यापि महाराज सूतपुत्रस्य संयुगे ।
वित्रेसुस्सर्वतो योधास् सिंहस्येवेतरे मृगाः ॥ ३

हतोऽपि पुरुषव्याघ्रो व्याहरन्निव लक्ष्यते ।
नाभवद्विकृतिः काचिन्मृतस्यापि महात्मनः ॥ ४

चारुवेषधरं राजंश् चारुमौलिशिरोधरम् ।
तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ॥ ५

कनकोत्तमसङ्काशो ज्वलन्निव विभावसुः ।
स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ॥ ६

यथाऽग्निर्ज्वलितो दीप्तो जलमासाद्य शाम्यति ।
कर्णाग्निस्समरे तद्वत् पार्थमेघेन शामितः ॥		७

आहृत्य सुयशो दीप्तं सुयुद्धेनात्मनो भुवि ।
सपुत्रस्समरे कर्णः प्रशान्तः पार्थतेजसा ॥		८

प्रताप्य पाण्डवान् सर्वान् पाञ्चालांश्चास्त्रतेजसा ।
नानाभरणवान् राजंस् तप्तजाम्बूनदप्रभः ॥		९

वर्षित्वा शरवर्षाणि प्रताप्य रिपुवाहिनीम् ।
श्रीमानिव सहस्रांशुर् ज्वलन् सर्वान् प्रताप्य च ॥		१०

हतो वैकर्तनः कर्णः पादपोऽङ्कुरवानिव ॥		१०॥

ददानीत्येव यः प्रादान्न नास्तीत्यर्थिनेऽवदत् ।
सद्भिस्सदा सत्पुरुषस् स हतो द्वैरथे वृषा ॥		११॥

[1]यस्य ब्राह्मणसात् सर्वं वित्तमासीन्महात्मनः ।
नादेयं ब्राह्मणेष्वासीद् यस्य स्वमपि जीवितम् ॥		१२॥

सदा नृणां प्रियो राजन् दाता चैव मनोरथान् ।
स पार्थास्त्रविनिर्दग्धो गतः परमिकां गतिम् ॥		१३॥

---

1. अ—नास्तीदमर्थम्

यमाश्रित्याकरोद्वैरं सुतस्ते स गतो दिवम् ।
आदाय तव पुत्राणां जयाशां शर्म वर्म च ॥ १४॥

हते कर्णे सरितो न प्रसस्रुर्
जगाम चास्तं कलुषो दिवाकरः ।
श्वेतो ग्रहश्च ज्वलितार्कवर्णो
यमस्य पुत्रोऽभ्युदितस्स तिर्यक् ॥ १५॥

नभश्चचालाथ ननाद चोर्वी
ववुश्च वाताः परुषाश्च घोराः ।
दिशो बभूवुर्ज्वलितास्सधूमा
महार्णवास्सस्वनुश्चुक्षुभुश्च ॥ १६॥

सकाननाश्चाद्रिवराश्चकम्पिरे
प्रविव्यथुर्भूतगणाश्च मारिष ।
बृहस्पतिस्सम्परिवार्य रोहिणीं
बभूव चन्द्रार्कसमो विशां पते ॥ १७॥

हते कर्णे विदिशोपि जज्वलुस्
तमोवृता द्यौर्विचचाल भूमिः ।
पपात चोल्का ज्वलनप्रभा च
निशाचरा हृष्टतरा बभूवुः ॥ १८॥

[1]शशिप्रकाशाननमर्जुनो यदा
जहार कर्णस्य शिरश्शरेण ।
ततोऽन्तरिक्षे सहसैव शब्दो
बभूव हाहेति सुरैर्विमुक्तः ॥ १९॥

सदेवगन्धर्वमनुष्यपूजितं
निहत्य कर्णं रिपुमाहवेऽर्जुनः ।
रराज राजन् परमेण तेजसा
यथा पुरा वृत्रवधे शतक्रतुः ॥ २०॥

[2]ततो रथेनाम्बुदधीरनादिना
शरन्नभोमध्यदिवाकरार्चिषा ।
पताकिना भीमनिनादकेतुना
हिमेन्दुशङ्खस्फटिकावभासिना ॥ २१॥

महेन्द्रवाहप्रतिमेन तावुभौ
महेन्द्रवीर्यप्रतिमानपौरुषौ ।
सुवर्णमुक्तामणिवज्रविद्रुमैर्
अलङ्कृतेनाप्रतिमेन रंहसा ॥ २२॥

---

1. ब—नास्तीदमर्धम्
2. क-ख-ग-ङ—नास्तीदमर्धम्

नरोत्तमौ यादवपाण्डुनन्दनौ
क्रतौ हुताग्नीव दिवाकराविव ।
रणाजिरे वीतभयौ विरेजतुस्
समानयोगाविव विष्णुवासवौ ॥ २३॥

ततो धनुर्ज्यातलनेमिनिस्वनैः
प्रसह्य कृत्वा च रिपून् गतप्रभान् ।
स सादयित्वा च रिपूञ् शरौघैः
कपिध्वजः पक्षिवरध्वजश्च ॥ २४॥

प्रदध्मतुश्शङ्खवरौ सुघोषौ
मनांस्यरीणामुपतापयन्तौ ॥ २५

सुवर्णजालावततौ महास्वनौ
हिमावदातौ परिगृह्य पाणिभिः ।
चुचुम्बतुश्शङ्खवरौ नृणां वरौ
विघोषयन्तौ विजयं जगत्त्रये ॥ २६

पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः ।
पृथिवीमन्तरिक्षं च दिशश्च समपूरयत् ॥ २७

विनेदुश्चाभवन् सर्वे कुरवो राजसत्तम ।
शूरयोश्शङ्खशब्देन माधवस्यार्जुनस्य च ॥ २८

तौ शङ्खशब्देन निनादयन्तौ
　　वनानि शैलान् सरितो गुहाश्च ।
वित्रासयन्तौ तव पुत्रसेनां
　　युधिष्ठिरं नन्दयितुं प्रयातौ ॥ २९

ततः प्रजग्मुः कुरवो जवेन
　　श्रुत्वैव शङ्खस्वनमीर्यमाणम् ।
विहाय मद्राधिपतिं पतिं च
　　दुर्योधनं भारत भारतानाम् ॥ ३०

[1]ततो रथेनाम्बुदवृन्दनादिना
　　शरद्यहर्मध्यदिवाकरत्विषा ।
धनञ्जयस्यातिरथेश्च विस्मिताः
　　प्रशंसमानाः प्रययुस्तदाऽर्जुनम् ॥ ३१

महाहवे तं बहु शोभमानं
　　धनञ्जयं योधगणैस्समेताः ।

1. ख—अर्धद्वयं नास्ति

तावन्वमोदंश्च जनाः प्रकामं
प्रभाकरावभ्युदितौ यथैव[1] ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ ७३ ॥ कर्णपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

---

1. अ—समाचितौ कर्णशरैः परन्तपौ
महैव संरेजतुरर्जुनाच्युतौ ।
तमो निहत्याभ्युदितौ यथाऽमरौ
शशाङ्कसूर्याविव रश्मिमालिनौ ॥
विहाय तान् बाणगणान् महाबलौ
सुहृद्वृतावप्रतिमानविक्रमौ ।
सुसंप्रहृष्टौ सुखदौ विरेजतुर्
जयश्रियं प्राप्य जनार्दनाच्युतौ ॥
सदेवगन्धर्वमनुष्यचारणैर्
महर्षिभिर्यक्षमहोरगैरपि ।
जयाभिवृद्ध्या परयाऽभिपूजितौ
निहत्य कर्णं परमाहवे तदा ॥
यथानुरूपं प्रतिपूज्य तानथ
प्रशस्यमानावतुलैश्च कर्मभिः ।
ननन्दतुश्चैव सुहृद्गणावृतौ
बलं निहत्येव सुरेशकेशवौ ॥ [ अधिकः पाठः ]

## ॥ दशाधिकशततमोऽध्यायः ॥

कर्णवधानन्तरमर्जुनेन युधिष्ठिराभिवादनम् ॥ १ ॥ तेन कृष्णार्जुनप्रशंसनम् ॥ २ ॥ कृष्णयुधिष्ठिरसंवादः ॥ ३ ॥

सञ्जयः—

हते वैकर्तने कर्णे कुरवो भयपीडिताः ।
वीक्षमाणा दिशस्सर्वाः पलायन्त सहस्रशः ॥ १

रावणं निहतं दृष्ट्वा राक्षसा लक्ष्मणाग्रजात् ।
दिशो भीता द्रवन्त्येव तावका भयपीडिताः ॥ २

ततो महारवं चक्रुर् योधा राजन् समन्ततः ।
वार्यमाणा भृशोद्विग्नास् तव पुत्रेण भारत ॥ ३

तेषां तु मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
अपहारं ततश्चक्रे शल्यस्यानुमतेन च ॥ ४

कृतवर्मा रणे तूर्णं वृतो भारत [1]सैनिकैः ।
नारायणावशिष्टैश्च शिबिरायैव दुद्रुवे ॥ ५

अश्वत्थामा ततश्शूरो विनिश्वस्य मुहुर्मुहुः ।
पाण्डवानां जयं दृष्ट्वा शिबिरायैव दुद्रुवे ॥ ६

1. घ—तावकैः

[1]कृपश्शारद्वतो राजन् नागानीकेन भारत ।
महता मेघकल्पेन शिबिरायैव दुद्रुवे ॥ ७

गान्धाराणां सहस्रेण शकुनिः परिवारितः ।
सुशर्मा च ययौ राजन् वीक्षमाणो भयार्दितः ॥ ८

दुर्योधनोऽपि स ययौ हृतसर्वस्व आतुरः ।
ज्ञातिशोकसमापन्नश् चिन्तयित्वा मुहुर्मुहुः ॥ ९

छिन्नध्वजेन शल्यस्तु रथेन रथिनां वरः ।
प्रययौ शिबिरायैव वीक्षमाणो दिशो दश ॥ १०

ततोऽपरे सुबहुशो भारतानां महारथाः ।
व्यद्रवन्त दिशो भीता भयविह्वलचेतसः ॥ ११

अश्रु[2]कण्ठा भयोद्विग्ना वेपमाना भयातुराः ।
कुरवः प्राद्रवन् सर्वे दृष्ट्वा कर्णं निपातितम् ॥ १२

प्रशंसन्तोऽर्जुनं केचित् केचित् कर्णं महारथाः ।
प्राद्रवन्त रणे भीताः कुरवः कुरुसत्तम ॥ १३

तेषां योधसहस्राणां तावकानां महामृधे ।
नासीत् तत्र पुमान् कश्चिद् यस्तु युद्धे मनो दधे ॥ १४

---

1. अ—अर्धचतुष्टयं नास्ति
2. क—पूर्णा

कर्णे हते महाराज निराशाः कुरवोऽभवन् ।
जीवितेषु च राज्येषु दारेषु च धनेषु च ॥　　१५

तान् समानीय पुत्रस्ते यत्नेन महता विभो ।
निवेशाय मनो दध्रे दुःखशोकसमन्वितः ॥　　१६

तस्याज्ञां शिरसा दीनाः प्रतिगृह्य विशां पते ।
विषण्णमनसो भूत्वा न्यविशन्त महारथाः ॥　　१७

[1]चिन्तयन्तो वधं घोरं सूतपुत्रस्य संयुगे ।
अर्जुनस्य जयं युद्धे चिन्तयानाः पुनः पुनः ॥　　१८

पाण्डवाश्च महेष्वासा न्यविशन्त परन्तपाः ।
प्रहृष्टमनसस्सर्वे जित्वा शत्रुं महारथाः ॥　　१९

ततो युधिष्ठिरं तत्र निविष्टं वै मुदाऽन्वितम् ।
समेत्य सर्वे पाञ्चाला वर्धयन्तो यथाविधि ॥　　२०

[2]शशंसुर्निहतं कर्णं फल्गुनेन महात्मना ॥　　२०॥

अर्जुनस्तु रथात्तूर्णम् अवरुह्य महायशाः ।
धर्मराजस्य चरणौ पीडयामास हृष्टवत् ॥　　२१॥

तमुत्थाप्य महाराज धर्मपुत्रः प्रतापवान् ।

---

1. क-ख-ङ—अर्धचतुष्टयं नास्ति
2. क-ख-च-ङ—नास्तीदमर्धम्

सस्वजे भरतश्रेष्ठम् उपजिघ्रन्नुपस्पृशन् ॥ २२॥

नकुलस्सहदेवश्च पाण्डवश्च वृकोदरः ।
अभिवाद्य महाराजम् अस्वजन्त स्म फल्गुनम् ॥ २३॥

धृष्टद्युम्नश्शिखण्डी च पाण्डवानां च ये रथाः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ २४॥

[1]ततः कृष्णो महाराज सात्यकिश्चापि सात्वतः ।
अवर्धयेतां राजानं निहते सूतनन्दने ॥ २५॥

वासुदेवश्च कौन्तेयं प्रणयादिदमब्रवीत् ॥ २६

श्रीभगवान्—

अद्य राजन् हतास्सर्वे धार्तराष्ट्रास्सराजकाः ।
हते वैकर्तने कर्णे रथानां प्रवरे रथे ॥ २७

यदि लोकास्त्रयस्सर्वे योधयेयुस्सवासवाः ।
तथाऽपि दुर्जयस्सूतस् तव कोपात् तु सूदितः ॥ २८

सञ्जयः—

एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ॥ २८॥

युधिष्ठिरः—

तव प्रसादाद्गोविन्द हतः कर्णो महायशाः ।

---

1. अ—नासीदमर्धम्

पाण्डवाश्च जयं प्राप्ता नाशिताश्चापि शत्रवः ॥ २९॥

त्वं हि शक्तो भयात् त्रातुं यस्य कस्यचिदाहवे ।
त्वमस्य जगतो गोप्ता पाण्डवानां च सर्वदा ॥ ३०॥

त्वां समासाद्य शक्रोऽपि मोदते दिवि नित्यशः ।
त्वं पाता पाण्डुपुत्राणां यथैव जगतस्तथा ॥ ३१॥

अनाश्चर्यो जयस्तेषां भक्तिर्येषां त्वयि प्रभो ॥ ३२

त्वया नाथेन गोविन्द नाथवन्तो वयं युधि ।
यथेन्द्रेण पुरा देवास् त्वया चापि जनार्दन ॥ ३३

स्वप्स्याम्यद्य सुखं कृष्ण निद्रां लप्स्ये त्वहं क्षपाम् ।
विगतं हि भयं मेऽद्य त्वत्प्रसादान्न संशयः ॥ ३४

सञ्जयः—

एवमुक्तस्तु पार्थेन केशवः प्राह पाण्डवम् ॥ ३४॥

श्रीभगवान्—

निमित्तमात्रं हि वयं तवाप्यस्मिन मुदागमे ॥ ३५

यस्य ते भ्रातरश्शूरा भीमसेनादयो नृप ।
सम्बन्धिनश्चेन्द्रवीर्याः पार्षतप्रमुखास्तथा ॥ ३६

अर्हते च भवान् वक्तुं प्रियं नित्यं च मद्धितम् ।
प्रियो हि मे त्वमेतेन वचनेन नरोत्तम ॥ ३७

सञ्जयः—

इत्युक्तो धर्मराजस्तु स्वरथं हेमभूषितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महीपतिः ॥ ३८

आस्थाय पुरुषव्याघ्रस् स्वबलेनापि संवृतः ।
प्रययौ बहुवृत्तान्तं द्रष्टुमायोधनं प्रति ॥ ३९

सम्भाषमाणौ तौ वीरावुभौ माधवपाण्डवौ ॥ ३९॥

[1]प्रदीपहस्ताश्शतशस् समन्तात् प्रययुर्नराः ॥ ४०

स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैस् सर्वतस्संनिपीडितम् ॥ ४१

[2]सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ ॥ ४२

युधिष्ठिरः—

अद्य राजाऽस्मि सर्वस्याः पृथिव्या मधुसूदन ।
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः ॥ ४३

सञ्जयः—

एवं सुबहुशो राजन् प्रशशंस जनार्दनम् ।
अर्जुनं च कुरुश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ४४

---

1. क-ख—इदमर्धं नास्ति

2. अ—अर्धपञ्चकं नास्ति

दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः ।
पुनर्जातमिवात्मानं मेने कुरुकुलोद्वहः ॥ ४५

[1]पुनश्च शिबिरं प्राप्तो भ्रातृभिर्हरिणा ततः ॥ ४५॥

कृत्वा तु यच्च कर्तव्यं सुखासीनं युधिष्ठिरम् ।
समेत्य च [2]कुरुश्रेष्ठं कुन्तीपुत्रं युधिष्ठिरम् ॥ ४६॥
वर्धयन्ति स्म राजानो हर्षयुक्ता महारथाः ॥ ४७

एवमेष क्षयो वृत्तस् सुमहान् रोमहर्षणः ।
तव दुर्मन्त्रिते राजन् दिष्ट्या त्वमनुशोचसि ॥ ४८

वैशम्पायनः—

श्रुत्वैतदप्रियं राजा धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमासनात् ॥ ४९

तथा सत्यव्रता देवी गान्धारी दिव्यदर्शना ॥ ४९॥

ततस्तूर्णं तु विदुरस् तं नृपं सञ्जयस्तथा ।
पर्याश्वासयतां चैतावुभावेव तु भूमिपम् ॥ ५०॥

---

1. क-ख-च-ङ—अर्धद्वयं नास्ति

2. अ—महाराज राजानस्तमनुव्रताः ।
वर्धयन्ति स्म संहृष्टा हर्षयुक्तं महारथाः ॥
[पाठान्तरम्]

तथैवाश्वासयामास गान्धारी राजसत्तमम् ॥ ५१

स दैवं परमं मेने भवितव्यं च भारत ।
ताभ्यामाश्वासितो राजा तूष्णीमास्ते विशां पते ॥ ५२

एवमाख्याय राज्ञे स सञ्जयो राजसत्तम ।
जगाम शिबिरं भूयो हते कर्णे महात्मनि ॥ ५३

स दृष्ट्वा निहतं शल्यं राजानं च सुयोधनम् ।
योधांश्च सुबहून् राजन् सैनिकांश्च सहस्रशः ॥ ५४

तथैव पाण्डवीं सेनां निहतां प्रेक्ष्य सञ्जयः ।
सौप्तिके द्रौणिना राजन् हतवाजिरथद्विपाम् ॥ ५५

स हि दृष्ट्वा हतान् सर्वान् समस्तान् योधसत्तमान् ।
प्रयातो हास्तिनपुरं शोकार्तो विह्वलन्निव ॥ ५६

हतेषु पुनरेतेषु प्रभूतगजवाजिषु ।
योधैश्चैव महाराज नानादेशसमुद्भवैः ॥ ५७

कुरुक्षेत्रं तु तत् सर्वं शून्यमासीज्जगत्पते ।
निहतैः पाण्डवेयैश्च धार्तराष्ट्रैश्च संयुगे ॥ ५८

यथाविषयजं वृत्तं धृतराष्ट्रस्य सञ्जयः ।
निवेदयति तत् सर्वं यथावृत्तं यथाविधि ॥ ५९

एवं महायुद्धमिदं महात्मनोर्
धनञ्जयस्यातिरथेश्च यः पठेत् ।
स सम्यगिष्टस्य मखस्य यत् फलं
तदाप्नुयाद्यश्शृणुयाच्च नित्यशः ॥ ६०

मखो हि विष्णुर्भगवान् सनातनो
वहन्ति यं चाप्यनिलेन्दुभानवः ।
अतोऽनसूयुश्शृणुयात् पठेच्च यस्
स सर्वलोकांश्च जयेत् सुखी भवेत् ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
कर्णपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ७३ ॥ कर्णपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

॥ ७३ ॥ कर्णपर्व समाप्तम् ॥

॥ समाप्तमिदं कर्णपर्व ॥

---

॥ अस्मिन् कर्णपर्वणि ५००१॥ श्लोकाः ॥

---

अतःपरं शल्यपर्व भविष्यति । तस्यायमाद्यश्श्लोकः ॥



जनमेजयः—

एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ १



॥ श्रीरस्तु ॥

## महाभारतस्य कर्णपर्वस्थानां विषयाणाम्

# अक्षरमातृकाक्रमेण सूचनम्

---

॥ श्रीः ॥

# महाभारतकर्णपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १५ | १३ | मदामात्रैष् | महामात्रैष् |
| २७ | १६ | सान्त्वमानो | सान्त्व्यमानो |
| ३७ | १० | किमप्रवीत् | किमब्रवीत् |
| ३८ | ११ | तन्माचक्ष्व | तन्ममाचक्ष्व |
| ४२ | १८ | पुरुस्कृत्य | पुरस्कृत्य |
| ४३ | १० | सैनान्ये | सेनान्ये |
| ४५ | ११ | सानुवन्धान् | सानुबन्धान् |
| ६५ | ११ | इधा | द्विधा |
| ७३ | ५ | सन्ततपर्वभिः | संनतपर्वभिः |
| ,, | २० | बिष्टभ्य | विष्टभ्य |
| ८७ | १६ | तद्धनुच्छिन्नं | तद्धनुश्छिन्नं |
| १०२ | १८ | सदसा | सहसा |
| १०३ | ६ | चदुर्भिः | चतुर्भिः |
| १०६ | २० | उद्यस्य | उद्यम्य |
| १०९ | ७ | रज्ञास्स्यन्दन | राज्ञस्स्यन्दन |
| १३९ | ७ | विसृष्टचर्थे | विसृष्टघर्थे |
| १४१ | १८ | नाशकोत् | नाशक्नोत् |
| १४२ | २ | विबुधैसार्धं | विबुधैस्सार्धं |
| १४७ | ४ | विभर्तु | बिभर्तु |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १५४ | १३ | आरूरोह | आरुरोह |
| १६३ | १३ | भक्तया | भक्त्या |
| १७३ | २० | दह्यमाणः | दह्यमानः |
| २०४ | १८ | चत्वरिंशश्लोकाः | चत्वारिंशच्छ्लोकाः |
| २०९ | ५ | छद्मनाच | छद्मना च |
| २१८ | ४ | योग्यहेतेरहं | योग्यहेतोरहं |
| २२४ | २ | यासामहे | यास्यामहे |
| २६४ | ९ | बाहूनूरूश्च | बाहूनूरुंश्च |
| २८८ | १६ | सन्तत | संनत |
| २८९ | ८ | परिष्कृतस् | परिष्कृतम् |
| ३०६ | ३ | मरिष | मारिष |
| ३४५ | १६ | सन्निकृतान् | सन्निकृत्तान् |
| ३४८ | १९ | देहादिवाद्धृते | देहादिवोद्धृते |
| ३६५ | २१ | न वांस्तूर्णं | नवांस्तूर्णं |
| ३६८ | ४ | मयासीत्यसकृन्मुदा | मयासीदसकृन्मुदा |
| ३९८ | १६ | द्रवम्ति | द्रवन्ति |
| ४०९ | ९ | चिच्छदे | चिच्छिदे |
| ४११ | १७ | अभ्यधावद्दढं | अभ्यधावद्दृढं |
| ४५१ | १७ | मद्दुश् | मुहुश् |
| ४५२ | २ | तवाभिन्युस् | तवाभिमन्युस् |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ४५६ | १३ | पुरुषाथमः | पुरुषावमः |
| ४६३ | ११ | दातुमर्हाहसि | दातुमिहार्हसि |
| ४८७ | २१ | ऽतु | ऽस्तु |
| ४९२ | ६ | पाण्डवेयैविरुद्धम् | पाण्डवेयैर्विरुद्धम् |
| ४९५ | ११ | खषा परम | खषाःपरम |
| ५०० | १६ | धातराष्ट्रं | धार्तराष्ट्रं |
| ,, | १८ | धातराष्ट्रः | धार्तराष्ट्रः |
| ५०६ | ११ | धन्विनान् | धन्विनाम् |
| ५०७ | ३ | वर्मुछिदः | वर्मच्छिदः |
| ५२५ | ७ | बीमत्सुं | बीभत्सुं |
| ५४० | ८ | शुशुमे | शुशुभे |
| ५४४ | ७ | सौवस्य | सौवलस्य |
| ५४५ | ७ | शत्रुपापनः | शत्रुतापनः |
| ५५५ | १६ | बीमत्सुः | बीभत्सुः |
| ५६४ | ११ | गण्डिवं | गाण्डिवं |
| ५९९ | ८ | अवप्तुस्य | अवप्लुत्य |
| ६५९ | १३ | धनञ्ञयस्य | धनञ्जयस्य |
| ७०४ | २ | अञ्ञलिकेन | अञ्जलिकेन |
| ७३४ | १५ | मुासीत् | मासीत् |

Printed by V. Venkateswara Sastrulu of
V. Ramaswamy Sastrulu & Sons at the 'Vavilla'Press, Madras.-1935.